| प्रक० | प्रक्रियानामानि | पृष्ठम् |
|---|---|---|
| १४ | स्वादिषु परस्मैपदिन | ९९ |
| १५ | स्वादिष्वात्मनपदिन | ” |
| १६ | रुधादिषूभयपदिन | ” |
| १७ | रुधादिषु परस्मैपदिन | १०० |
| १८ | रुधादिष्वात्मनपदिन | ” |
| १९ | तनाद्युभयपदिन | ” |
| २० | तुदादिषूभयपदिन | १०१ |
| २१ | तुदादिषु परस्मैपदिन | १०२ |
| २२ | तुदादिष्वात्मनपदिन | १०३ |
| २३ | क्र्यादिषूभयपदिन | ” |
| २४ | क्र्यादिषु परस्मैपदिन | १०४ |
| २५ | क्र्यादिष्वात्मनेपदिन | ” |
| २६ | चुरादय | ” |
| २७ | ण्यन्तप्रक्रिया | १०५ |
| २८ | सन्प्रक्रिया | १०७ |
| २९ | यङ्प्रक्रिया | १०९ |
| ३० | यङ्लुक्प्रक्रिया | ११० |
| ३१ | नामधातव | १११ |
| ३२ | आत्मनेपदव्यवस्था | ११२ |
| ३३ | भावकर्मप्रक्रिया | ११३ |
| ३४ | लकारार्था | ११६ |


## उत्तरार्धः । तृतीया वृत्तिः


| | | |
|---|---|---|
| १ | कर्त्रर्थप्रक्रिया | ११७ |
| २ | निष्ठाधिकारप्रक्रिया | १२७ |
| ३ | क्त्वादिप्रक्रिया | १३१ |
| ४ | शीलार्थप्रक्रिया | १३३ |
| ५ | उणादिप्रक्रिया | १३६ |
| ६ | भावाधिकारप्रक्रिया | १३८ |
| ७ | कृत्यप्रक्रिया | १४० |
| ८ | ण्यधिकारप्रक्रिया | १४३ |
| ९ | वत्वादिप्रक्रिया | १४५ |


पुस्तक मिलनेका ठिकाना खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" छापाखाना, मुंबई

भवति स स तत्र तत्र ग्राह्य । प्रत्याहाराणां सख्यानियमस्तु नास्ति ॥ **हसा व्यञ्जनानि । १४ ।** हकारादय सकारान्ता वर्णा हसा व्यञ्जनानि भवन्ति। स्वरहीन व्यञ्जनम् । स्वरेभ्योऽन्यत्स्वरहीनम् । अन्यथा स्वरेषु स्वरो नास्तीति तेषा स्वराणामपि व्यञ्जनता स्यात्। यद्वा भावप्रधानो निदेश स्वरत्वहीनमित्यर्थ । तेष्वकार सुखोच्चारणार्थत्वादित्सञ्ज्ञक ॥ **कार्यायेत् । १५ ।** प्रत्ययाद्यतिरिक्त कस्मैचित्कार्यायोच्चार्यमाणो वर्ण इत्सञ्ज्ञो भवति ॥ **यस्येत्संज्ञा तस्य लोपः । १६ । वर्णादर्शन लोपः । १७ । वर्णविरोधो लोपश् । १८ ।** एक वर्ण नाशयति अन्यस्योत्पत्तिं प्रतिबध्नाति स वर्णविरोध ॥ **मित्रवदागमः । १९ । शत्रुवदादेशः । २० । स्वरानन्तरिता हसा' सयोगः । २१ । कुचुटुतुपुवर्णाः । २२ ।** उकार- पञ्चवर्णपरिग्रहणार्थ ॥ **अरेदोनामिनो गुण. । २३ ।** नामिन स्थानिका अर् ए ओ एते गुणसञ्ज्ञका भवन्ति ॥ **आरैऔ वृद्धिः । २४ ।** आ आर् ऐ औ एते वृद्धिसञ्ज्ञा भवन्ति॥ **अन्त्यस्वरादिष्टिः । २५ ।** अन्त्यो य स्वरस्तदादिवर्णष्टिसञ्ज्ञो भवति ॥ **अन्त्यात्पूर्व उपधा । २६ ।** अन्त्याद्वर्णमानात्पूर्वो यं स उपधासञ्ज्ञो भवति ॥ **असयोगादिपरो ह्रस्वो लघुः । २७ । विसर्गानुस्वारसयोगपरो दीर्घश्च गुरुः । २८ । मुखनासिकाभ्यामुच्चार्यमाणोऽनुनासिकः । २९ । मुखेनोच्चार्यमाणो निरनुनासिकः । ३० । अः इति विसर्जनीयः वर्णशिरोबिन्दुरनुस्वारः । ३१ ।** अ अ इति अच परावनुस्वारविसर्गौ । अकुहविसर्जनीयाना कण्ठ । इचुयशाना तालु । ऋटुरषाणां मूर्धा । लृतुलसाना दन्ता । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतो कण्ठतालु । ओदौतो कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य । ᳵक ᳵख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीय । ᳶप ᳶफ इति पफाभ्या प्रागर्धविसर्गसदृश उपध्मानीय । शषसहा ऊष्माण । कादयो मावसानाः स्पर्शा । यरलवा अन्तस्था ॥

> **हकार पञ्चभिर्युक्तमन्तस्थैश्चाभिसयुतम् ॥**
> **उर स्स्थ विजानीयात्कण्ठ्यमाहुरसयुतम् ॥ ५ ॥**
> **अष्टौ स्थानानि वर्णानामुरःकण्ठ. शिरस्तथा ॥**
> **जिह्वामूल च दन्ताश्च नासिकोष्ठौ च तालु च ॥ ६ ॥**

## इति संज्ञाप्रक्रिया ।

---

अथाधुना स्वरसधिरभिधीयते ॥ दधि आनय इति स्थिते । वर्णग्रहणे सवर्णग्रहण कारग्रहणे केवलग्रहण तपरग्रहणे तावन्मात्रग्रहणमिति शिष्टसङ्केत । तस्मिन्निति निर्दिष्टे पूर्वस्य । सप्तमीनिर्देशेन विधीयमान कार्य वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम् । अतो वृत्तौ परे इति व्याचष्टे । एवमन्यत्रापि ज्ञेयम् ॥ इ य

स्वरे ।१। इवर्णो यत्वमापद्यते स्वरे परे । दध् य् आनय इति तावज्जाते ॥ हसेर्हसः ।२। स्वरात्परो रेफहकारवर्जितो हसो हसे परे द्विर्भवति । स्वरे परे इति वक्तव्यम् । तेन धकारस्य न पुनर्द्वित्वम् इति धकारस्य द्वित्वम् ॥ झबे जबाः ।३। झसानां झबे परे जबा भवन्ति । इति पूर्वधकारस्य दकारः सवर्णत्वात् । वर्गाणां वर्ग्येण सवर्ण इति वचनात् । यथासंख्यं वा वक्तव्यम् । दद् ध् य् आनय इति सिद्धम् । पश्चात् ॥ स्वरहीनं परेण संयोज्यम् ।४। शिष्टोच्चारेण कर्तव्यम् । दद्ध्यानय ॥

तक्रं न रोचतेऽस्माकं दुग्धं वा मधुरं प्रिये ॥
अन्नप्ररोचनार्थाय दद्ध्यानय वरानने ॥ ७ ॥
कृतस्य करणं नास्ति मृतस्य मरणं नहि ॥
पिष्टस्य पेषणं नास्ति द्वितीये द्वित्वं नहि ॥ ८ ॥

गौरी अत्र इति स्थिते । इ यं स्वरे ( प्र० २ सू० १ ) गौर् य् अत्र तावज्जाते यत्वे कृते अर्ह इति द्विर्भावाद्रेफस्य द्वित्वं किं तु ॥ राद्यपो द्विः ।५। स्वरपूर्वाद्रेफात्परो यपो द्विर्भवति । इति यस्य द्वित्वम् । गौर् य् य् अत्र । स्वरहीनं परेण संयोज्यम् ( प्र० २ सू० ४ ) ॥

तुम्बिका तृणकाष्ठं च तैलं जलसमागमे ॥
ऊर्ध्वस्थानं समायान्ति रेफाणामीदृशी गतिः ॥ ९ ॥
जलतुम्बिकान्यायेन रेफस्योर्ध्वगमनम् ॥
रेफः स्वरपरं वर्णं दृष्ट्वाऽऽरोहति तच्छिरः ॥
पुरःस्थितं यदा पश्येदधः संक्रमते स्वरम् ॥ १० ॥

गौर्य्यत्र । स्वर इत्यनुवर्तते । एवमन्यत्रापि यत्र न सूत्राक्षरैः कार्यसिद्धिस्तत्र सर्वत्र सूत्रान्तरादन्तरानुवृत्तिर्ज्ञातव्या । अन्यदनुवर्त्यमपाक्षरैरभिलिख्यते ॥ उ वम् ।६। उवर्णो वत्वमापद्यते स्वरे परे । हसेर्हसः ( प्र० २ सू० २ ) झबे जबाः ( प्र० २ सू० ३ ) मधु अत्र मध्वत्र । मधु अरिः मध्वरिः । मधु आसन मध्वासनम् ॥ ऋ रम् ।७। ऋवर्णो रत्वमापद्यते स्वरे परे । पितृ अर्थः पित्रर्थः ॥ लृ लम् ।८। लृवर्णो लत्वमापद्यते स्वरे परे । लृ अनुबन्धः लनुबन्धः ॥ ए अय् ।९। एकारो अय् भवति स्वरे परे । ने अनं नयनम् ॥ ओ अव् ।१०। ओकारो अव् भवति स्वरे परे । भो अति भवति । गवादेरन्यत्रौकारोऽऽकारे [illegible] वक्तव्यः । गो अश्वः गवाश्वः । गो इन्द्रः गवेन्द्रः ॥ अ इ ए ।११। अवर्ण इवर्णे परे सह ए भवति । गो अग्रं गवाग्रम् । गो अजिनं गवाजिनम् । अइए ( प्र० २ सू० ११ ) एऐऐ ।१२। अवर्ण एकारे ऐकारे च परे सह ऐकारो भवति । [illegible] । [illegible] निर्दिश्यमानत्वात् ॥ उ ओ ।१३। अवर्ण उवर्णे परे सह ओ भवति । ओ औ औ ।१४। अवर्ण ओकारे औकारे च परे सह औकारो भवति । अथ [illegible] । [illegible] ॥ इति गवादयः ॥ [illegible] गवादौ द्रष्टव्यः ॥

**गवाक्षश्च गवेन्द्रश्च गवाग्रं च गवाजिनम् ॥**
**स्वैरमक्षौहिणी प्रौढ एते प्रोक्ता गवादयः ॥ ११ ॥**

क्वचित्स्वरव्यवकार । यथाध्वपरिमाणे गो यूति गव्यूति क्रोशयुगलम् । अन्यथाध्वन परिमाणाभावे गवां मिश्रीभवो गोयूति ॥ **ऐ आय्** । १५ । ऐकार आय् भवति स्वरे परे । नै अक नायक ॥ **औ आव्** । १६ । औकार आव् भवति स्वरे परे । तौ इह ताविह ॥ **य्वोर्लोपश्च वा पदान्ते** । १७ । पदान्ते स्थितानामयादीनां यकारवकारयोर्लोपश्च वा भवति । ते आगता त आगता तयागता ॥ पटो इह पट इह पटविह । तस्मै आसन तस्मा आसनम् तस्मायासनम् । असौ इन्दु असा इन्दु असाविन्दु ॥ **लोपशि पुनर्न संधिः** । १८ । छन्दसि तु भवति । हे सख इति हे सखेति हे सखयिति ॥ **एदोतोऽत.** । १९ । पदान्ते स्थितादेकारादोकाराच्च परस्याकारस्य लोपो भवति । ते अत्र तेऽत्र । पटो अत्र पटोऽत्र॥ **सवर्णे दीर्घः सह** । २० । समानस्य सवर्णे परे सह दीर्घो भवति । श्रद्धा अत्र श्रद्धात्र ॥

**अदीर्घो दीर्घतां याति नास्ति दीर्घस्य दीर्घता ॥**
**पूर्वदीर्घस्वरं दृष्ट्वा परलोपो विधीयते ॥ १२ ॥**

दधि इह दधीह । मधु उदकं मधूदकम् ॥

**सामान्यशास्त्रतो नूनं विशेषो बलवान्भवेत् ॥**
**परेण पूर्वबाधो वा प्रायशो दृश्यतामिह ॥ १३ ॥**

बहुव्यापकं सामान्यम् । अल्पव्यापको विशेष । अ इ ए ( प्र० १ सू० ११ ) तव इदं तवेदम् । मम इदं ममेदम् । सर्वविधिभ्यो लोपविधिर्बलवान् ॥ **हलादेर्दीषादौ टेर्लोपो वक्तव्य.** । २१ । क्वचित्तदादिगणाभावे कालस्वरस्यापि टिसंज्ञा वक्तव्या । हल ईषा हलीषा । लांगल ईषा लांगलीषा । मनस् ईषा मनीषा । शक अन्धु शकन्धु । कर्क अन्धु कर्कन्धु । सीमन् अन्त सीमन्त केशवेशे । अन्यत्र सीमान्त । कुल अटा कुलटा । पतत् अञ्जलि पतञ्जलि । सार अङ्ग सारङ्ग पशुपक्षिणो । अन्यत्र साराङ्ग ॥

**हलीषा लाङ्गलीषा च मनीषाद्यास्तथैव च ॥**
**शकन्ध्वश्च कर्कन्धु सीमन्त कुलटा तथा ॥**
**पतञ्जलिश्च सारङ्ग एते प्रोक्ता हलादय ॥ १४ ॥**

**ओमाङोश्च** । २२ । अवर्णात्परौ ओमाङौ टिलोपनिमित्तौ स्त । अद्य ओम् अद्योम् । शिव आ इहि शिवेहि ॥ **ओमि नित्यम्** । २३ । ओमि परे नित्यमवर्णस्य लोपो भवति । राम ओम् रामोम् । उ ओ ( प्र० २ सू० १३ ) गङ्गा उदकं गङ्गोदकम् ॥ **ऋ अर्** । २४ । अवर्ण ऋकारे परे सह अर् भवति । तव ऋद्धि तवर्द्धि । रायणो हि (प्र० २ सू० ५) **क्वचिदार्** । २५ । अवर्ण ऋकारे परे सह क्वचिदार् भवति । ऋण ऋण ऋणार्णम् । शीत ऋत. शीतार्त. ॥

**ऋते च तृतीयासमासे एवाऽऽर्** । २६ । अन्यत्र परमतः । **उपसर्गादवर्णान्तादृकारादौ धातौ आर् भवति** । २७ । उपार्छति प्रार्छति ॥ **ऋकारादौ नामधातौ वा** । २८ । उपार्षभीयति उपर्षभीयति । प्रार्षभीयति प्रर्षभीयति॥ **ॠकारादौ आर् नेति वाच्यम्** । २९ । उपॠकारीयति उपर्कारीयति ॥ **ऌ अल्** । ३० । अवर्णे ऌकारे परे सह अल् भवति । तव ऌकारः तवल्कारः ॥ **ऋऌवर्णयोः सावर्ण्यं वक्तव्यम्** । ३१ । ऋऌवर्णस्थानित्वादृऌयोरपि सावर्ण्यं वाच्यम् । होतृ ऌकारः होतॄकारः होतॢकारः । परिअङ्कः इ य स्वरे (प्र० २ सू० १) रात्परो द्विः (प्र० २ सू० ५) पर्यङ्कः परयङ्कः ॥

**रलयोर्डलयोश्चैव शसयोर्बवयोस्तथा ॥**
**वदन्त्येषां च सावर्ण्यमलंकारविदो जनाः ॥ १५ ॥**

**ए ऐ ऐ** । ३२ । अवर्णे एकारे ऐकारे च परे सह ऐकारो भवति । तव एषा तवैषा । तव ऐश्वर्यं तवैश्वर्यम् ॥ **ओ औ औ** । ३३ । अवर्णे ओकारे औकारे च परे सह औकारो भवति । तव ओदनः तवौदनः । तव औन्नत्य तवौन्नत्यम् ॥ **ओष्ठोत्वोर्वा** । ३४ । अवर्णस्य ओष्ठोत्वोः परयोः समासे सति सह वा ओ भवति । बिम्ब ओष्ठः बिम्बोष्ठः बिम्बौष्ठः । स्थूल ओतुः स्थूलोतुः स्थूलौतुः। समासे किम् । तव ओष्ठः तवौष्ठः ॥ इति स्वरसंधिप्रक्रिया ॥ २ ॥

---

अथ प्रकृतिभाव उच्यते । प्रकृतेर्यथास्थितस्य रूपस्य भवनं प्रकृतिभावः ॥ **नामी** । १ । अदसोऽमी संधिं न प्राप्नोति । अमी आदित्याः ॥ **द्वे द्वित्वे** ।२। ई च ऊ च ए च द्वे द्वित्वे ईकारान्त ऊकारान्त एकारान्तश्च शब्दो द्वित्वे वर्तमानः संधिं न प्राप्नोति । मणीवादिवर्ज्यम् । अमी अत्र । पटू अत्र । माले आनय । मणी इव मणीव ॥

**मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ॥**
**ह्रियमाणौ तु तौ दृष्ट्वा माकिस्तत्रेदमब्रवीत् ॥ १६ ॥**

रोदसी इव रोदसीव। दंपती इव दंपतीव। जंपती इव जंपतीव। जायापती इव जायापतीव ॥ **ओं निपातः** । ३ । आ च ओं च अ च इ च उ च ऋ च ऌ च ए च ऐ च ओ च औ च ओं। आ ओ इति पृथक् पदं वा निपातः। आकारादिनिपातः ओंकारादिनिपातश्च संधिं न प्राप्नोति । आ एवं मन्यसे । ओ अत्र स्थातव्यम् । उ उत्तिष्ठ । इ इन्द्रं पश्य । अ अपेहि । आङ्मर्यादादौ न निषेधः । तथा चोक्तम् ॥

**ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ॥**
**एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ १७ ॥**

**ओत्तमैरेक्षसे न त्वमामृतादिन्द्रतोऽगिरिस्कैः ॥**
**आ एवं सर्ववेदार्थं आ एवं सद्व्यो हरेः ॥ १८ ॥**

**प्लुतः** । ४ । प्लुत संधिं न प्राप्नोति । देवदत्ता ३ एहि । देवदत्ता ३ अत्र गौश्चरति ॥ **दूराद्व्हाने च टेः प्लुतः** । ५ । दूरादाह्वाने गान रोदने विचारे गम्यमाने च टे प्लुतो भवति । दूरादित्यत्र चकारग्रहणाद्वा तातेतीत्यादौ संधिः स्यात् ॥ **हेहयोः स्वरे संधिर्न वक्तव्यः** । ६ । हे अनड्वन् ॥ **ऋतौ समासो वा** । ७ । ऋतौ परे समासे संधिं प्राप्नोति वा । हिम ऋतु हिमर्तु हिमऋतु ॥ ॥ इति प्रकृतिभावसंधिप्रक्रिया ॥ ३ ॥

---

अथ व्यञ्जनकार्यमुच्यते ॥ **चपा अबे जबाः** । १ । पदान्ते वर्तमानाश्चपा जबा भवन्ति अबे परे । षट् अत्र षडत्र । वाक् यथा वाग्यथा । **जमे ञमा वा** ।२। पदान्ते वर्तमानाश्चपा ञमे परे ञमा वा भवन्ति । वाक् मात्र वाङ्मात्रम् वाग्मात्रम् । षट् मम षण्मम षड्मम ॥ **मयादि नित्य वाच्यम्** ।३। चित् मय चिन्मयम् । प्रत्यये ञमो नित्यमिति केचित् । तेन वाङ्मात्रमित्येकमेव रूपं स्यात् ॥ **चपाच्छ शः** । ४ । चपादुत्तरस्य शकारस्य छो वा भवति अबे परे । वाक् शूर वाक्छूर वाक्शूर ॥ **ह्वो झभाः** । ५ । चपादुत्तरस्य हकारस्य झभा वा भवन्ति । नन्वेकस्य हकारस्य पञ्च झभाः प्राप्ताः केन क्रमेण भवन्ति । यद्वर्गगश्चपस्तद्वर्गगश्चतुर्थो भवति । तत् हरि तद्धरि तद्हरि । वाक् हरि वाग्घरि वाग्हरि ॥ **स्तोः श्चुभिः श्चु** । ६ । स्तोः सकारस्य तवर्गस्य च शकारेण चवर्गेण च योगे शकारचवर्गौ यथासंख्येन भवतः । स् च तुश्च स्तुस्तस्य स्तोः समाहारे द्वन्द्वे एकत्वम् । छन्दोवत्सूत्राणीति वचनान्नपुंसकस्य पुंस्त्वम् । श् च चुश्च श्चवस्तैः श्चुभिः चुशब्दे चवर्गस्थवर्णापेक्षया बहुवचनम् ॥

**अकृत्वा सप्तमीमेता तृतीयामकरोदिला ॥**
**ततः श्चुभिः श्चुः पूर्वेण संनिपातः परेण वा ॥ १९ ॥**

कस् चरति कश्चरति । कस् शूर कश्शूर । तत् चित्र तच्चित्रम् । तत् शास्त्र तच्छास्त्रम् ॥ **न शात्** ।७। शकारादुत्तरस्य तवर्गस्य चुत्वं न भवति । विश्न । प्रश्न ॥ **ष्टुभिः ष्टु** ।८। स्तोः सकारस्य तवर्गस्य च षकारेण टवर्गेण च योगे षकारटवर्गौ यथासंख्येन भवतः । ष्टुभिरिति बहुवचनात्क्वचित्षकारटवर्गयोगं विनापि ष्टुत्वम् । अग्निष्टोम । कस् षठ कष्षठ । कस् टीकते कष्टीकते । तत् टीकते तट्टीकते । तत् टीका तट्टीका ॥ **तोर्लि लः** । ९ । तवर्गस्य लकारे परे लकारो भवति । तत् लुनाति तल्लुनाति । भवान् लिखति भवाँल्लिखति ॥ **अन्तस्था द्विप्रभेदाः** । १० । रेफवर्जिता यवला सानुनासिका निरनुनासिकाश्च । तत्र सानुनासिक एव नकारस्य लकारो भवति । **न षि** । ११ । षकारे परे तवर्गस्य ष्टुत्वं न भवति । भवान् षठ भवान्षठ ॥ **टोरन्त्यात्** । १२ । पदान्ते वर्तमानाट्टवर्गात्परस्य स्तोः ष्टुत्वं न भवति । षट् नर षण्नर । षट् सीदन्ति षट्सीदन्ति षट्सीदन्ति ॥ **न सकृच्छते** । १३ । नान्तस्य पदस्य छते परे स-

गागमो भवति ॥ टित्कितावाद्यन्तयोर्वक्तव्यौ । १४ । टिदादौ किदन्ते । राजन् चिरम् राजंश्चिरम् । भवान् तनोति भवांस्तनोति ॥ शे च वा । १५ । नान्तस्य पदस्य शे परे वा चगागमो भवति । भवान् शूरः भवाञ्शूरः भवाञ्च्शूरः भवाञ्शूरः भवाञ्छूरः ॥ ङणनो ह्रस्वाद्द्विः स्वरे । १६ । पदान्ते स्थिता ङकारणकारनकारा ह्रस्वादुत्तरा द्विर्भवन्ति स्वरे परे । प्रत्यङ् इदं प्रत्यङ्ङिदम् । सुगण् इह सुगण्णिह । राजन् इह राजन्निह । राजन् इदं राजन्निदम् ॥ छः । १७ । ह्रस्वादुत्तरश्छकारो द्विर्भवति ॥ खसे चपा झसानाम् । १८ । झसानां खसे परे चपा भवन्ति । तव छत्र तवच्छत्रम् ॥ दीर्घादपि च वक्तव्यः । १९ । दीर्घादुत्तरश्छकारो द्विर्भवति । म्लेछः म्लेच्छः । ह्रीछः ह्रीच्छः ॥ अपिशब्दाद्दीर्घात्पदान्ताद्विकल्पम् । लक्ष्मी छाया लक्ष्मीच्छाया लक्ष्मीछाया ॥ आङ्माङ्भ्यां च वक्तव्यम् । २० । आच्छादयति । माच्छिदत् ॥ मोऽनुस्वारः । २१ । पदान्ते वर्तमानस्य मकारस्यानुस्वारो भवति हसे परे । तम् हसति तं हसति । पटुम् वृथा पटुं वृथा । केचिदवसानेऽप्यनुस्वारमिच्छन्ति ॥ अवसाने वा । २२ । अवसाने मकारस्यानुस्वारो वा भवति । देवं देवम् ॥ नश्चापदान्ते झसे । २३ । नकारस्य मकारस्य चापदान्ते वर्तमानस्यानुस्वारो भवति झसे परे । यशान्सि यशांसि । पयान्सि पयांसि । पुम्सः पुंसः ॥ ञमा यपेऽस्य । २४ । अनुस्वारस्य ञमा वा भवन्ति यपे परे । वर्गीयस्यानुस्वारस्य पञ्च ञमाः प्रोक्ताः येन क्रमेण भवन्ति अस्य पदस्य सवर्णाः । शांतः शान्तः ॥ वा पदान्ते । २५ । पदान्ते वर्तमानस्यानुस्वारस्य ञमा वा भवन्ति यपे परे । तं करोति तङ्करोति । तं तनोति तन्तनोति । तं जानाति तञ्जानाति ॥ वर्ग्ये वर्गान्तः । २६ । वर्ग्ये परे वर्गान्तो भवति । वर्गाभावे परसवर्णं स्यात् । स यथा सँय्यन्ता । यकारस्यान्यवर्गाभावेऽपि यकारस्य यकार एव वर्गः । स यन्तरः सँय-

## अथ विसर्गसंधिर्निगद्यते ॥



**विसर्जनीयस्य सः** । १ । विसर्जनीयस्य सकारो भवति खसे परे । कः तनोति कस्तनोति ॥ **शषसे वा** । २ । विसर्जनीयस्य वा सकारो भवति शषसे परे । कः शेते कश्शेते । कः षण्डे कष्षण्डे । कः साधुः कस्साधुः ॥ **कुप्वोः ᳲकᳲपौ वा** । ३। विसर्जनीयस्य कवर्गपवर्गसबन्धिनि खसे परे ᳲकᳲपौ वा भवतः । कपौ उच्चारणार्थौ । कः करोति कᳲकरोति । कः पचति कᳲपचति । कः पठति कᳲपठति॥ **वाचस्पत्यादयः सज्ञाशब्दा निपातास्साधवः** । ४ । वाचस्पति बृहस्पति कारस्कर पारस्कर भास्कर तस्कर हरिश्चन्द्र । तद्बृहतो करपत्योश्चोरदेवतयोः सुट् तलोपश्च । इत्यादि ॥ **अह्नो रो रात्रिषु** । ५ । अह्नो विसर्जनीयस्य पदान्ते रो भवति । रात्र्यादिवर्जितेषु परतः । अहः पतिः अहर्पतिः । अहः गणः अहर्गणः । अहः अत्र अहरत्र । अरात्रिष्विति विशेषणादहोरात्रम् अहः रूपः अहोरूपम् । अहः रथन्तर अहो रथन्तरम् । रूपरात्रिरथन्तरेषु न रेफ इत्यादि ॥ **अतोऽत्युः** । ६ । अकारात्परस्य विसर्जनीयस्य उकारो भवति अति परतः । एङोऽतोति ( प्र० २ सू० १८ ) कः अर्थः कोऽर्थः ॥ **हबे** । ७ । अकारात्परस्य विसर्जनीयस्य उकारो भवति हबे परे । कः गतः कोगतः । देवः याति देवो याति । मनः रथः मनोरथः ॥ **आदबे लोपश्** ।८। अवर्णात्परस्य विसर्जनीयस्य लोपश् भवत्यबे परे । देवाः अत्र देवा अत्र । वाताः वाताः वातावाताः ॥ **स्वरे यत्वं वा** । ९ । अवर्णात्परस्य विसर्जनीयस्य यत्वं वा भवति स्वरे परे । देवाः अत्र देवायत्र देवा अत्र॥ **भोसः** । १० । भोस् भगोस् अघोस् इत्येतस्मात्परस्य विसर्जनीयस्य लोपश् भवत्यबे परे । भोः एहि भो एहि । भगोः नमस्ते भगो नमस्ते । अघोः याति अघो याति ॥ **नामिनो रः** ।११। नामिनः परस्य विसर्जनीयस्य रेफो भवति अबे परे । अग्निः अत्र अग्निरत्र । पटुः यजते पटुर्यजते॥**रेफप्रकृतिकस्य खपे वा** । १२ । रेफप्रकृतिकस्य विसर्जनीयस्य खपे परे वा रेफो भवति । गीः पतिः गीर्पतिः गीᳲपतिः । धूः पतिः धूर्पतिः धूᳲपतिः ॥ **रः** । १३। रेफसबन्धिनो विसर्जनीयस्य रेफो भवति अबे परे । प्रातः अत्र प्रातरत्र ॥ **रि लोपो दीर्घश्च** । १४ । रेफस्य रेफे परे लोपो भवति । पूर्वस्य च दीर्घः । पुनः रमते पुनारमते । शुक्तिः रूप्यात्मना भाति शुक्तीरूप्यात्मना भाति ॥ **सैषाद्धसे** । १५ । सशब्दादेषशब्दाच्च परस्य विसर्जनीयस्य लोपश् भवति हसे परे । सः चरति स चरति । एषः हसति एष हसति । सैषादितिसहिता ॥ समासे घृते घटमाना सा । सैष दाशरथी राम इत्यादौ पादपूर्णे सध्यर्था ज्ञेया ॥

**सैष दाशरथी रामः सैष राजा युधिष्ठिरः ॥**
**सैष कर्णो महात्यागी सैष भीमो महाबलः ॥ २० ॥**

क्वचिन्नामिनोऽवे लोपश्च। १६। नामिनः परस्य विसर्जनीयस्य लोपश्च भवति क्वचिद्वे परे। भूमीः आददे भूम्याददे॥

> यदुक्तं लौकिकायेह तद्वेदे बहुलं भवेत्॥
> सेमां भूम्याददे लोपामित्यादीनामदुष्टता॥ २१॥

> क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव॥
> विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥ २२॥

> वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ॥
> धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥२३॥

> वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः॥
> षोडशादौ विकारश्च वर्णनाशः पृषोदरे॥ २४॥

> वर्णविकारनाशाभ्यां धातोरतिशयेन यः॥
> योगः स उच्यते प्राज्ञैर्मयूरभ्रमरादिषु॥ २५॥

विस्कम्भनेन विष्कम्भनेन। शुनः शेप इति शुनश्शेपम्। पृषत् उदरं पृषोदरम्॥ आत्त्वसयोरुः। १७। आकारे सत्ते च परे विसर्जनीयस्य सह उ क्वचिद्भवति गुडोत्मा॥ ॥ इति विसर्गसन्धिप्रक्रिया॥ ५॥

---

अथ विभक्तिर्विभाज्यते। सा द्विधा। स्यादिस्त्यादिश्च॥ विभक्त्यन्तं पदम्। १। तत्र स्यादिर्विभक्तिर्नाम्नो योज्यते॥ अविभक्ति नाम। २। विभक्तिरहितं धातुवर्जितं सार्थकं शब्दरूपं नामोच्यते। कृत्तद्धितसमासाश्च प्रातिपदिकसंज्ञा इति केचित्॥ तस्मात्। ३। तस्मान्नाम्नः परः स्यादयः सप्त विभक्तयो भवन्ति। सामान्यार्थमात्रेऽवविवक्षायां प्रथमैकवचने सिः॥

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| १ | सि | औ | जस् |
| २ | अम् | औ | शस् |
| ३ | टा | भ्याम् | भिस् |
| ४ | ङे | भ्याम् | भ्यस् |
| ५ | ङसि | भ्याम् | भ्यस् |
| ६ | ङस् | ओस् | आम् |
| ७ | ङि | ओस् | सुप् |

अकारान्तः पुंलिङ्गो देवशब्दः। देव सि इति स्थिते। इकारः सेर्विभक्तिविशेषणार्थः॥ स्रोर्विसर्गः। ४। सकाररेफयोर्विसर्जनीयादेशो भवत्यवसाने रसे परतश्च। पदान्तस्य रस्य उच्चारणार्थः। देवः। द्विवचनविवक्षायाम् औ। ओऔ-औ (प्र० २ सू० १४) देवौ। बहुत्वविवक्षायां देव जस् इति स्थिते। ..

जसीति विशेषणार्थः । जकारस्येत्संज्ञायां तस्य लोपः । देव अस् इति स्थिते । दीर्घविसर्गौ । देवाः ॥ **अकाराज्जसोऽसुक् क्वचिद्वक्तव्यश्छन्दसि** । ५ । कित्त्वादन्ते । देवासः । ब्राह्मणासः । द्वितीयैकवचने देव अम् इति स्थिते॥ **अम्-शसोरस्य** । ६ । समानादुत्तरयोरम्शसोरकारस्य लोपो भवति अधातोः । देवम् । पूर्ववत् देवौ । बहुत्वविवक्षायां देव शस् इति स्थिते । शकारः शसी (प्र० ६ सू० ८) ति विशेषणार्थः ॥ **सो नः पुंसः** । ७ । पुँल्लिङ्गात्समानादुत्तरस्य शसः सकारस्य नकारादेशो भवति ॥ **शसि** । ८ । शसि परे पूर्वस्य दीर्घो भवति ॥ **यदादेशस्तद्वद्भवति** । ९ । देवान् । तृतीयैकवचने देव टा इति स्थिते । टकारोऽनुबन्धष्टेने (प्र० ९ सू १०) ति विशेषणार्थः । उच्चरितप्रध्वंसी ह्यनुबन्धः ॥ **टेन** । १० । अकारात्परष्टा इनो भवति । अइए (प्र० २ सू० ११) देवेन॥ **भ्याम्भि** । ११ । अकार आ भवति भकारे परे । देवाभ्याम् ॥ **स्भ्यः** । १२ । अकारात्परस्य भिसो भकारस्याकारो भवति । अ इ ए (प्र० २ सू० ११) देव एस् इति स्थिते वृद्धिविसर्गौ । देवैः ॥ **अकारस्य भिसि छन्दस्येकारो व-क्तव्यः** । १३ । देवेभिः । कर्णेभिः । चतुर्थ्येकवचने देव ङे इति स्थिते ॥ ङकारो ङित्कार्यार्थः सर्वत्र॥ **ङेरक्** । १४ । अकारात्परस्य ङे इत्येतस्यागागमो भवति । कित्वादन्ते । ए अय् (प्र० २ सू० ९) दीर्घः । देवाय । देवाभ्याम् ॥ **एस्भिब-हुत्वे** । १५ । अकारस्य एत्व भवति सकारे भकारे च परे बहुत्वे सति । देवेभ्य । पञ्चम्येकवचने देव ङसि इति स्थिते । इकारः प्रत्ययभेदज्ञापनार्थः ॥ **ङसिरत्** । १६ । अकारात्परो ङसिरत् भवति । देवात् देवाभ्याम् । देवेभ्यः । षष्ठ्येकवचने देव ङस् इति स्थिते ॥ **ङस्स्य** । १७ । अकारात्परो ङस् स्यो भवति । देवस्य ॥ **ओसि** । १८ । अकारस्य ओसि परे एत्व भवति । एअय् (प्र० १२ सू० ९) देवयो ॥ **नुडामः** । १९ । समानादुत्तरस्यामो नुडागमो भवति । टित्वादादौ उकार उच्चारणार्थं ॥ **नामि** ।२०। नामि परे पूर्वस्य दीर्घो भवति । देवानाम् । सप्तम्येकवचने देव ङि इति स्थिते । अइए (प्र० २ सू० ११) देवे । देवयोः । बहुत्वविवक्षायां देव सुप् इति स्थिते । पकारः पित्कार्यार्थः । ए स्भिबहुत्वे (प्र० ६ सू० १५) ॥ **किलात्षः सः कृतस्य** । २१ । कवर्गी-दिलान्त्र प्रत्याहारादुत्तरस्य केनचित्सूत्रेण कृतस्य सकारस्य षकारादेशो भवति । अन्ते स्थितस्य तु न भवति । देवेषु ॥ **आमन्त्रणे सिर्धिः** । २२ । आमन्त्र-णमाभिमुखीकरणं तस्मिन्नर्थे विहितः सिर्धिसंज्ञो भवति ॥ **समानाद्धेर्लोपोऽ-धातोः** । २३ । समानादुत्तरस्य धेर्लोपो भवत्यधातोः ह्रस्वात्समानादुत्तरस्येति ज्ञेयम् ॥ **आभिमुख्याभिव्यक्तये हेशब्दस्य प्राक्प्रयोगः** ।२४। हेदेव हे-देवौ हेदेवाः । एव घटपटस्तम्भकुम्भादयोऽप्यकारान्ताः पुँल्लिङ्गाः । आकारान्ता-नामपि सर्वादीनां तु विशेषः । सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम कतर कतम सम सिम नेम एक पूर्व पर अवर दक्षिण उत्तर अपर अधर स्व अन्तर त्यद् तद् यद् एतद् इदम् अदस् द्वि किम् युष्मत् अस्मत् भवत् ।एते सर्वादयस्त्रिलिङ्गाः। तत्र पुल्लिङ्गे रूपनयः। अकारान्तः सर्वशब्दः। सर्वः । सर्वौ ॥

**जसी** । २५ । सर्वादेरकारान्तात्परो जसी भवति । अइए ( प्र० २ सू ११ ) सर्वे । सर्वम् सर्वौ सर्वान् । पूर्ववत्प्रक्रिया ॥ **ष्टनो णोऽनन्ते** । २६ । षकारे-फकारवर्णेभ्यः परस्य नकारस्य णकारादेशो भवति । अन्ते स्थितस्य न भवति । तेन सर्वानित्यादि ॥ **अवकुप्वन्तरेऽपि** । २७ । अवप्रत्याहारेण कवर्गेण पवर्गेण च मध्ये व्यवधानेऽपि भवति नान्येन । सर्वेण सर्वाभ्याम् सर्वैः । चतुर्थ्येकवचने सर्व ङे इति स्थिते ॥ **सर्वादेः स्मट्** । २८ । सर्वादेरकारान्तात्परस्य चतुर्थ्येकव-चनस्य स्मडागमो भवति । एऐऐ ( प्र० २ सू० १२ ) । सर्वस्मै सर्वाभ्याम् सर्वेभ्यः । पञ्चम्येकवचने सर्व अत् इति स्थिते ॥ **अतः** । २९ । सर्वादेरकारा-न्तात्परस्यातः स्मडागमो भवति । दीर्घः । सर्वस्मात् सर्वाभ्याम् सर्वेभ्यः । सर्वयो.॥ **सुडामः** । ३० । सर्वादेरवर्णान्तात्परस्यामः सुडागमो भवति । सर्वेषाम् ॥ **ङि स्मिन्** । ३१ । सर्वादेरकारान्तात्परो ङि स्मिन् भवति । सर्वस्मिन् सर्वयोः सर्वेषु । हेसर्व हेसर्वौ हेसर्वे इत्यादि । एवं विश्वादीनामेकशब्दपर्यन्तानां सर्वशब्द-वद्रूप ज्ञेयम् डतरडतमौ विहाय । तौ प्रत्ययौ ततस्तदन्ता. शब्दाः माह्याः । तथैव विश्वशब्दः । विश्वः विश्वौः विश्वे इत्यादि । उभशब्दो नित्य द्विवचनान्तः । उभौ २ उभाभ्याम् ३ उभयोः २ हेउभौ । उभयशब्दस्य द्विवचनाभावादेकवच-नबहुवचने भवतः । उभयः उभये । उभयम् उभयान् । उभयेन उभयैः । उभय-स्मै उभयेभ्यः । उभयस्मात् उभयेभ्यः । उभयस्य उभयेषाम् । उभयस्मिन् उभयेषु । हेउभय हेउभये । अन्यः अन्यौ अन्ये इत्यादि । इतरः इतरौ इतरे इत्यादि । कतरः कतरौ कतरे इत्यादि । एवमेकशब्दपर्यन्तानां रूप ज्ञेयम् । पूर्वादीना तु विशेषः । पूर्वः पूर्वौ ॥ **पूर्वादीनां तु नवानां जस ईकारो वा वक्तव्यः** । ३२ । पूर्वे-पूर्वाः । पूर्वम् पूर्वौ पूर्वान् । पूर्वेण पूर्वाभ्याम् पूर्वैः । पूर्वस्मै पूर्वाभ्याम् पूर्वेभ्यः ॥ **पूर्वादिभ्यो नवभ्यो ङसिङ्योः स्मात्स्मिनौ वा वक्तव्यौ** । ३३ । पूर्वस्मात्-पूर्वात् पूर्वाभ्याम् पूर्वेभ्यः । पूर्वस्य पूर्वयोः पूर्वेषाम् । पूर्वस्मि-न्-पूर्वे पूर्वयोः पूर्वेषु । हेपूर्व हेपूर्वौ हेपूर्वे-हेपूर्वाः । परशब्दः । परः परौ परे-पराः इत्यादि । एवमन्तरशब्दपर्यन्तानां रूप ज्ञेयम् ॥

> **सर्वादिः सर्वनामाख्यो न चेद्गौणोऽथवा ऽभिधा ॥ २५ ॥**
> **पूर्वादिश्च व्यवस्थायां समोऽतुल्येऽन्तरोऽपुरि ॥**
> **परिधाने बहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि ॥ २६ ॥**

स्वाभिधेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम् । दक्षिणा गायकाः कुशला इत्यर्थ ॥ **प्रथमचरमतयायडल्पार्धकतिपयनेमानांजसी वा** । ३४ । प्रथमः प्रथमौ प्रथमे-प्रथमाः । चरमः चरमौ चरमे-चरमाः । शेष देववत् । तयायडौ प्रत्ययौ । तदन्ताः शब्दा ग्राह्याः । तयप्रत्ययान्तो द्वितयशब्दः । द्वितय. द्वितयौ द्वितये । द्वितयाः । एव त्रितयशब्दः । अयट्प्रत्ययान्तो द्वयः त्रयश्च । एवं नेमपर्यन्तानां रूप ज्ञेयम् । तीयस्य सर्ववद्रूप ङित्सु वा वक्तव्यम् । द्वितीयः द्वितीयौ द्वितीयाः । द्वितीय द्वितीयौ द्वितीयान् । द्वितीयेन द्वितीयाभ्याम् द्वितीयैः । द्वितीयस्मै-

द्वितीयाय द्वितीयाभ्याम् द्वितीयेभ्यः। द्वितीयस्मात्–द्वितीयात् द्वितीयाभ्यां द्वितीयेभ्यः। द्वितीयस्य द्वितीययोः द्वितीयानाम्। द्वितीयस्मिन्–द्वितीये द्वितीययो द्वितीयेषु। हेद्वितीय हेद्वितीयौ हेद्वितीयाः। एवं तृतीयशब्द । अकारान्तः पुंल्लिंगो मासशब्द ॥ **मासस्यालोपो वा** । ३५। मासशब्दस्याकारस्य लोपो वा वक्तव्य सर्वासु विभक्तिषु परत ॥ **हसेपः सेर्लोपः** । ३६। हसान्तादीबन्ताच्च परस्य सेर्लोपो भवति । मा –मास मासौ–मासौ मास –मासाः । मासम्–मासम् मासौ–मासौ मास –मासान् । मासा–मासेन । स्रोर्विसर्गः ( प्र० ६ सू० ४ ) आदेवे लोपश्च ( प्र० ५ सू०८ ) माभ्या–मासाभ्याम् माभि –मासै । मासे–मासाय माभ्यां–मासाभ्याम् माभ्य –मासेभ्यः। मास –मासात् माभ्यां–मासाभ्याम् माभ्य –मासेभ्य । मास –मासस्य मासो –मासयोः मासा–मासानाम्। मासि–मासे मासो –मासयोः मास्सु–मासेषु । हेमा –हेमास हेमासौ–हेमासौ हेमास –हेमासा । आकारान्तः पुल्लिङ्गः सोमपाशब्दः । सोमपा सोमपौ सोमपा । सोमपाम् सोमपौ ॥ **आतो धातोर्लोपः** । ३७। धातुसम्बन्धिन आकारस्य लोपो भवति शसादौ स्वरे परे। सोमपः। क्विबन्ता धातवो यद्यपि शब्दत्वमापास्तथापि धातुत्वं न जहति। सोमपा सोमपाभ्याम् सोमपाभि । सोमपे सोमपाभ्याम् सोमपाभ्यः । सोमपः सोमपाभ्याम् सोमपाभ्य । सोमपः सोमपो सोमपाम् । सोमपि सोमपो सोमपासु। अधातोरिति विशेषणाद्धेर्लोपो नास्ति । हेसोमपा। हेसोमपौ हेसोमपा।एवं कीलालपा, शङ्खध्मा, मधुपा, विश्वपा, धनदा, धर्मोदाप्रभृतयः । आकारान्तो हाहाशब्दः। हाहा हाहौ हाहाः । हाहाम् हाहौ हाहान् । आदन्ताच्छसो नत्वाभाव इत्येके । तेन हाहा । सवर्णे दीर्घः सह ( प्र० २ सू० २० ) हाहा हाहाभ्याम् हाहाभिः । एऐऐ ( प्र० २ सू० १२ ) हाहै हाहाभ्याम् हाहाभ्य । हाहा हाहाभ्याम् हाहाभ्य । हाहा हाहौः आकारान्तेषु आबन्तानामेव नुडागमो नान्येषामिति नियमात् सवर्णे दीर्घः सह ( प्र० २ सू० २० ) हाहाम् । हाहे हाहौः हाहासु। हेहाहा हेहाहौ हेहाहा । तथैव हूहूशब्द । इकारान्त पुल्लिङ्गो हरिशब्दः। तस्य प्रथमैकवचने हरि सि इति स्थिते। स्रोर्विसर्ग ( प्र० ६ सू० ४ ) हरिः ॥ **औ यू** । ३८। इकारान्तादुकारान्ताच्च परं औकारो यू आपद्यते। ई अभवत्। हरी ॥ **एओजसि** । ३९। इकारान्तस्य उकारान्तस्य च जसि परे एकार ओकारश्च भवति । एअय् ( प्र० २ सू० ९ ) हरयः ॥ **धौ** । ४०। इकारान्तस्य उकारान्तस्य च धिविषये एकार ओकारश्च भवति। हेहरे हेहरी हेहरयः।हरिम् हरी हरीन्॥ **टानाऽस्त्रियाम्** । ४१। इकारान्तादुकारान्ताच्च परष्टा ना भवति अस्त्रियाम् । हरिणा हरिभ्याम् हरिभिः ॥ **ङिति** । ४२। इकारान्तस्य उकारान्तस्य च ङिति परे एकार ओकारश्च भवति । एअय् ( प्र०२ सू० ९ ) हरये हरिभ्याम् हरिभ्य ॥ **ङस्य** । ।४३। एदोद्भ्यां परस्य ङसिङसोरकारस्य लोपो भवति । हरेः हरिभ्याम् हरिभ्य । हरेः हर्योः हरीणाम् ॥ **ङेरौ डित्** । ४४। इदुद्भ्यामुत्तरस्य ङेरौ भवति स च डित् । डित्वाट्टिलोप ॥ **डिति** । ४५। डिति परे टेर्लोपो भवति । हरौ हर्योः

हरिषु । एवमग्निगिरिरविकविप्रभृतयः । उकारान्ताश्च विष्णुवायुभानुप्रभृतयोऽप्येतैरेव सूत्रैः सिध्यन्ति । भानुः भानू भानवः । भानुम् भानू भानून् । भानुना भानुभ्याम् भानुभिः । भानवे भानुभ्याम् भानुभ्यः । भानोः भानुभ्याम् भानुभ्यः । भानोः भान्वोः भानूनाम् । भानौ भान्वोः भानुषु । हेभानो हेभानू हेभानवः । इत्यादि । एवं विष्णुवायुप्रभृतयः । सखिशब्दस्य भेदः । सखि सि इति स्थिते ॥ **सेर्डा धेः** । ४६ । सखिशब्दस्य सेर्डा भवति । डित्वाट्टिलोपः । सखा ॥ **ऐ सख्युः** । ४७ । सखिशब्दस्यैकारादेशो भवति धिवर्जितेषु पञ्चसु परेषु ॥ **षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य ज्ञेयः** । ४८ । आयादेशः । सखायौ ॥ **द्विवचनस्या वा छन्दसि** । ४९ । द्विवचनस्यौकारश्छन्दस्याकारमापद्यते । सखाया सखायः । सखायम् सखायौ-सखाया सखीन् ॥ **सखिपत्योरिण्** ५० सखिपतिशब्दयोरिणागमो भवति टाङेङिषु परतः । दीर्घत्वाग्रा न भवति । सख्या । कर्मिप्रयोगसिद्ध्यर्थमाह ॥ **आगमजमनित्यम्** । ५१ । आगमजकार्यमनित्यं स्यात् । सखिना सखिभ्याम् सखिभिः । सख्ये सखिभ्याम् सखिभ्यः ॥ **ऋदुङ्के** । ५२ । सखिपतिशब्दयोरुङागमो भवति ङसिङसोरकारे परे । सख्य् अस् इति स्थिते ॥ **ऋतो ङः उ** । ५३ । ऋकारान्तात्परस्य ङसिङसोरकारस्य उकारो भवति स च डित् । डित्वाट्टिलोपः । सख्युः सखिभ्याम् सखिभ्यः । सख्युः सख्योः सखीनाम् । सप्तम्येकवचने ङेरौ डिदित्यौकारे कृते सखिपत्योरिणागमः । सख्यौ सख्योः सखिषु । अधेरिति विशेषणादेकारोऽधिविषये । हेसखे हेसखायौ हेसखायः । पतिशब्दस्य भेदः । पतिशब्दस्य प्रथमाद्वितीययोर्हरिशब्दवत्प्रक्रिया । पतिः पती पतयः । पतिम् पती पतीन् । तृतीयादौ तु सखिशब्दवत्प्रक्रिया । पत्या-पतिना पतिभ्याम् पतिभिः । पत्ये पतिभ्याम् पतिभ्यः । पत्युः पतिभ्याम् पतिभ्यः । पत्युः पत्योः पतीनाम् । पत्यौ पत्योः पतिषु । हेपते हेपती हेपतयः ॥ **पतिरसमास एव सखिशब्दवद्वक्तव्यः** । ५४ । षष्ठीयुक्तश्छन्दसि वा । सीतायाः पतये नम इत्यादि प्रयोगदर्शनात् । ततः समस्तस्य नादयो भवन्ति । प्रजापतिना प्रजापतये इत्यादि । द्विशब्दो नित्यं द्विवचनान्तः । द्वि औ इति स्थिते ॥ **त्यादेष्टेरः स्यादौ** । ५५ । त्यदादेष्टेरकारो भवति स्यादौ परे । द्वौ द्वौ द्वाभ्याम् द्वाभ्याम् द्वाभ्याम् द्वयोः द्वयोः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रि अस् इति स्थिते । एओ जसि ( प्र० ६ सू० ३९ ) त्रयः त्रीन् त्रिभिः त्रिभ्यः त्रिभ्यः ॥ **त्रेस्त्रयङ्** । ५६ । त्रिशब्दस्य त्रयङादेशो भवति नामि परे । ङकारोऽन्त्यादेशार्थः ॥ **छन्दस्यस्य वक्तव्यः** । ५७ । त्रयाणाम् त्रिषु । कतिशब्दो नित्यं बहुवचनान्तस्त्रिषु सरूपः । कति जस् इति स्थिते ॥ **डतेश्च** । ५८ । डत्यन्तात्परयोर्जस्शसोर्लुक् भवति ॥ **लुकि न तन्निमित्तम्** । ५९ । लुकि जाते सति तन्निमित्तं कार्यं न स्यात् । कति कति कतिभिः कतिभ्यः कतिभ्यः कतीनाम् कतिषु हेकति । ईकारान्तः पुंल्लिङ्गः सुश्रीशब्दः । सुश्रीः ॥ **य्वोर्धातोरियुवौ स्वरे** । ६० । धातोरिकारोकारयोरियुवौ भवतः स्वरे परे ।

सुश्रियौ सुश्रियः । सुश्रियम् सुश्रियौ सुश्रियः । सुश्रिया सुश्रीभ्याम् सुश्रीभिः । सुश्रिये सुश्रीभ्याम् सुश्रीभ्यः । सुश्रियः सुश्रीभ्याम् सुश्रीभ्यः । सुश्रियः । सुश्रियोः सुश्रियाम् । सुश्रियि सुश्रियोः सुश्रीषु । हेसुश्रीः हेसुश्रियौ हेसुश्रियः । तथैव सुधीशब्दः सुष्ठु ध्यायतीति सुधीः सुधियौ सुधियः । सुधियम् इत्यादि । एवमूकारान्तः स्वयम्भूशब्दः । स्वयं भवतीति स्वयम्भूः स्वयम्भुवौ स्वयम्भुवः । स्वयम्भुवम् स्वयम्भुवौ स्वयम्भुवः । स्वयम्भुवा स्वयम्भूभ्याम् स्वयम्भूभिः । स्वयम्भुवे स्वयम्भूभ्याम् स्वयम्भूभ्यः । स्वयम्भुवः स्वयम्भूभ्याम् स्वयम्भूभ्यः । स्वयम्भुवः स्वयम्भुवोः स्वयम्भुवाम् । स्वयम्भुवि स्वयम्भुवोः स्वयम्भूषु । हेस्वयम्भूः हेस्वयम्भुवौ हेस्वयम्भुवः इत्यादि । सेनानीशब्दस्याविशेषो ह्सादौ तु विशेषः । सेनां नयतीति सेनानीः ॥ **य्वौ वा । ६१ ।** धातोरसंयोगः पूर्वो यस्मादीकारादूकाराच्चास्ति तदन्तस्यानेकस्वरस्य कारकाव्ययपूर्वस्यैकस्वरस्य च धातोरीकारस्य ऊकारस्य च यकारवकारौ भवतः स्वरे परे । वर्षाभूपुनर्भूव्यतिरिक्तभूशब्दसुधीशब्दौ वर्जयित्वा वाग्रहणादिय विवक्षा । सेनान्यौ सेनान्यः । सेनान्यम् सेनान्यौ सेनान्यः । सेनान्या सेनानीभ्याम् सेनानीभिः । सेनान्ये सेनानीभ्याम् सेनानीभ्यः । सेनान्यः सेनानीभ्याम् सेनानीभ्यः । सेनान्यः सेनान्योः ॥ **सेनान्यादीनां वामो लुङ्वक्तव्यः । ६२ ।** सेनानीनाम्–सेनान्याम् । सेनानी ङि इति स्थिते ॥**आम्ङेर्नियश्च । ६३ ।** आबन्तादीबन्तान्नीशब्दाच्चोत्तरस्य ङेरामादेशो भवति । सेनान्याम् सेनान्योः सेनानीषु । हेसेनानीः हेसेनान्यौ हेसेनान्यः । एवं ग्रामणीप्रभृतयः । एवमूकारान्तो यवलूशब्दः । यवलूः यवल्वौ यवल्वः । यवल्वम् यवल्वौ यवल्वः । यवल्वा यवलूभ्याम् यवलूभिः । यवल्वे यवलूभ्याम् यवलूभ्यः । यवल्वः यवलूभ्याम् यवलूभ्यः । यवल्वः यवल्वोः यवलूनाम् यवल्वाम् । यवल्वि यवल्वोः यवलूषु । हेयवलूः हेयवल्वौ हेयवल्वः । एवं वर्षाभूपुनर्भूप्रभृतयः । संयोगपूर्वस्य तु सुश्रियौ कटप्रुवौ । एकस्वरे तु नियौ लुवौ । कारकाव्ययपूर्वत्वाभावे तु परमनियौ । धात्ववयवसंयोगपूर्वेकारोकारयोरेव न य्वौ । तेन उन्न्यौ । नाम्नश्च कृता समास इति समास एव तद्व्यतिरिक्ते समासे तु न य्वौ । तेन सुधियौ इति । बहुव्रीहौ तु हुस्वौ स्तः । ईकारान्तो वातप्रमीशब्दः । वातप्रमीः वातप्रम्यौ वातप्रम्यः । वातप्रमीम् वातप्रम्यौ वातप्रमीन् । वातप्रम्या वातप्रमीभ्याम् वातप्रमीभिः । वातप्रम्ये वातप्रमीभ्याम् वातप्रमीभ्यः । वातप्रम्यः वातप्रमीभ्याम् वातप्रमीभ्यः । वातप्रम्यः वातप्रम्योः वातप्रम्याम् । वातप्रमी वातप्रम्योः वातप्रमीषु । हेवातप्रमीः हेवातप्रम्यौ हेवातप्रम्यः ॥

**अमि वातप्रमीमाहुः शसि वातप्रमीनिति ॥**
**ङौ तु वातप्रमी ज्ञेया शेषं ग्रामणीवद्विदुः ॥ २७ ॥**

तथैवोकारान्तो हूहूशब्दः । हूहूः हूहौ हूहः । हूहूम् हूहौ हूहून् । हूहा हूहूभ्याम् हूहूभिः इत्यादि । ऋकारान्तः पितृशब्दः । पितृ सि इति स्थिते ॥ **सेरा६४**

ऋकारान्तात्परस्य सेरा भवति स च डित् । डित्वाट्टिलोप । पिता ॥ **आर् पञ्चसु** । ६५ । ऋकारस्यार् भवति पञ्चसु परेषु । पितरौ पितर । पितरम् पितरौ पितॄन् । ऋरम् ( प्र० २ सू० ७ ) पित्रा पितृभ्याम् पितृभि । पित्रे पितृभ्याम् पितृभ्य । ऋतोडुः ( प्र० ६ सू० ५२ ) पितु पितृभ्याम् पितृभ्य । पितु पित्रो पितॄणाम् ॥ **डौ** । ६६ । ऋकारस्यार् भवति डौ परे । पितरि पित्रो पितृषु । पितृ धि इति स्थिते ॥ **धेरर्** । ६७ । ऋकारान्तात्परस्य धेरर् भवति । स च डित् । डित्वाट्टिलोप । हे पित हे पितरौ हे पितर । एवं जामात्रादय । एवं नृशब्द । सेरा ( प्र० ७ सू० ६४ ) ना नरौ नर । नरम् नरौ नॄन् । न्रा नृभ्याम् नृभि । न्रे नृभ्याम् नृभ्य । ऋतो ड उ ( प्र० ६ सू० ५३ ) नु नृभ्याम् नृभ्य । नु न्रो ॥ **नॄ वा नामि दीर्घ** । ६८ । नृशब्दस्य नामि परे दीर्घो भवति । नृणाम्-नॄणाम् । डौ ( प्र० ६ सू० ६६ ) नरि न्रो नृषु । हे न हे नरौ हे नर । कर्तृशब्दस्य पञ्चसु विशेष । **स्तुरार्** । ६९ । सकारतृप्रत्ययसंबन्धिन ऋकारस्यार् भवति पञ्चसु परेषु । कर्तार् सि इति स्थिते । यदादेशस्तद्वद्भवति सेरा ( ६५ ) डित्वाट्टिलोप । कर्ता कर्तारौ कर्तार । कर्तारम् कर्तारौ कर्तॄन् । कर्त्रा कर्तृभ्याम् कर्तृभि । कर्त्रे कर्तृभ्याम् कर्तृभ्य । ऋतोडुः ( ५३ ) कर्तु कर्तृभ्याम् कर्तृभ्य । कर्तु कर्त्रो कर्तॄणाम् । कर्तारि कर्त्रो कर्तृषु । धेरर् ( ६७ ) हे कर्त हे कर्तारौ हे कर्तार इत्यादि । एवं नप्तृहोतृप्रशास्तृपोतृउद्गातृप्रभृतय ॥

**स्वसा नप्ता च नेष्टा च त्वष्टा क्षत्ता तथैव च ॥**
**होता पोता प्रशास्ता च ह्यष्टौ स्वस्रादय स्मृता ॥ २८ ॥**

**उकारान्तस्यापि क्रोष्टुशब्दस्य पञ्चस्वधिषु तृप्रत्ययान्तता वा वक्तव्या** । ७० । क्रोष्टु सि इति स्थिते । स्तुरार् ( प्र० ६ सू० ६९ ) सेरा ( प्र० ६ सू० ६५ ) क्रोष्टा क्रोष्टारौ क्रोष्टार । क्रोष्टारम् क्रोष्टारौ । अधौरिति विशेषणात् हे क्रोष्टो हे क्रोष्टवौ हे क्रोष्टव । शसि तृप्रत्ययान्तताभावात् क्रोष्टून् । अमि शसि तृप्रत्ययान्तता वेति केचित् । क्रोष्टुम् क्रोष्टून् ॥ **तृतीयादौ स्वरादौ तृप्रत्ययान्तता वा वक्तव्या** । ७१ । क्रोष्ट्रा-क्रोष्टुना क्रोष्टुभ्याम् क्रोष्टुभि । क्रोष्ट्रे क्रोष्टवे क्रोष्टुभ्याम् क्रोष्टुभ्य । क्रोष्टु क्रोष्टो क्रोष्टुभ्याम् क्रोष्टुभ्य । क्रोष्टु-क्रोष्टो क्रोष्ट्रो-क्रोष्ट्वो । कृताकृतप्रसङ्गी यो विधि स नित्य । नित्यानित्ययोर्मध्ये नित्यविधिर्बलीयान् । इति प्रथमनुडागमे कृते स्वरादित्वाभावात् तृप्रत्ययान्तता न भवति । क्रोष्टूनाम् । क्रोष्टरि-क्रोष्टौ क्रोष्ट्रो-क्रोष्ट्वो क्रोष्टुषु । ऋकारान्ता लृकारान्ता एकारान्ताश्चाप्रसिद्धा । कौमारास्तृप्रत्ययान्तस्य लृशब्दं पृथक्पठन्ति । अप्रसिद्धा इति वृद्धव्यवहारे तदभिधानादौ । तत्र एरिष्णुरविमाहते इत्येकाक्षरमालायां तथा अनेकार्थमञ्जर्याम् ॥

**ऋर्देत्यमातरि स्याद्देव्यामस्तु एतान्तरे ॥**
**वाय्वादित्ये महर्षौ च विष्णावे व प्रकीर्तितौ ॥ २९ ॥**

अत्र ऋकारस्य स्वरादौ । ऋरम् ( प्र० २ सू० ७ ) ऋ रौ र ।

कन् । रा कभ्याम् कभि । हेकृ हेरौ हेरः इत्यादि । लृवर्णस्य भागर्ण्यापितशब्दवत्प्रक्रिया । आ अलौ अल । अलम् अलौ लन् । ला लभ्याम् लभि । ले लभ्याम् लभ्य । उल् लभ्याम् लभ्य । उल् लो ऋणाम् । लि लो लृषु । हेअल् हेअलौ हेअल । इति लृशब्दरूपाणि । एकारान्तस्य तु उदश्चासौ ए श्चेति विग्रहे कृते विभक्तिलोपे कृते उदे इति समस्तं नाम । उदे उदयौ उदय । हेउदे हेउदयौ हेउदय । समानत्वाभावान्न धिलोप । उदयम् उदयौ उदय । उदया उदेभ्याम् उदेभि । उदय उदेभ्याम् उदेभ्य । उदे उदेभ्याम् उदेभ्य । उदे । ङस्ये ( प्र० ६ सू० ४३ ) स्यकारलोप । उदयो उदयाम् । उदयि उदयो उदेषु । ऐकारान्त पुंलिङ्ग सुरैशब्द ॥ **रैस्भि** । ७२ । रैशब्दस्याकारादेशो भवति सकारभकारादौ विभक्तौ परत । सुरा सुरायौ । स्वरादौ सर्वत्रायादेश । सुराय । सुरायम् सुरायौ सुराय । सुराय सुराभ्याम् सुराभि । सुराये सुराभ्याम् सुराभ्य । सुराय सुराभ्याम् सुराभ्य । सुराय सुरायो सुरायाम्। सुरायि सुरायो सुरासु । हेसुरा हेसुरायौ हेसुराय । एव रैशब्द । ओकारान्त पुंलिङ्गो गोशब्द । गो सि इति स्थिते ॥ **औरौ** । ७३ । ओकारस्यौकारादेशो भवति पञ्चसु परेषु गौ । औ आव् ( प्र० २ सू० १६ ) गावौ गाव ॥ **आम्शसि** । ७४ । ओकारस्यात्व भवति अमि शसि च परे । गाम् । औ आव् ( प्र० २ सू० १६ ) गावौ गा । गवा गोभ्याम् गोभि । गवे गोभ्याम् गोभ्य । ङस्ये ( प्र० ६ सू० ४३ ) स्यलोप । गो गोभ्याम् गोभ्य । गो गवो गवाम् ॥ **गोराम्नोऽन्ते छन्दसि** । ७५ । ऋबन्ते वर्तमानस्य गोशब्दस्यामो नुडागमो भवति । गोनाम् । गवि गवो गोषु । हेगौ हेगावौ हेगाव । औकारान्त पुंलिङ्गो ग्लौशब्द । तस्य हलादावविशेष । स्वरादौ आवादेश । ग्लौ ग्लावौ ग्लाव । हेग्लौ हेग्लावौ हेग्लाव । ग्लावम् । ग्लावौ ग्लाव । ग्लावा ग्लौभ्याम् ग्लौभि । ग्लावे ग्लौभ्याम् ग्लौभ्य । ग्लाव ग्लौभ्याम् । ग्लौभ्य । ग्लाव ग्लावो ग्लावाम् । ग्लावि ग्लावो ग्लौषु इत्यादि ॥ इति स्वरान्तपुंलिङ्गप्रक्रिया ६

अथ स्वरान्ता स्त्रीलिङ्गा प्रदर्श्यन्ते । तत्र आबन्तो गङ्गाशब्द । गङ्गा सि इति स्थिते ॥ **आप** । १ । आबन्तात्परस्य सेर्लोपो भवति । गङ्गा॥**औरी** ।२। आबन्तात्पर औरीत्वमापद्यते । अइए ( प्र० २ सू० ११ ) गङ्गे गङ्गा ॥ **धिरि** ।३। आबन्तात्परो धिरिर्भवति । हेगङ्गे हेगङ्गे हेगङ्गा । गङ्गाम् गङ्गे गङ्गा ॥ **टौसोरे** । ४ । आबन्तस्य टौसो परयोरेत्व भवति । एअय् ( प्र० २ सू० ९ ) गङ्गया गङ्गाभ्याम् गङ्गाभि ॥ **ङिता यट्** । ५ । आबन्तात्परेषा ङेङसिङस्ङि इत्येतेषा ङितां वचनानां यडागमो भवति । टकार स्थाननियमार्थ । गङ्गायै गङ्गाभ्याम् गङ्गाभ्य । गङ्गाया गङ्गाभ्याम् गङ्गाभ्य । गङ्गाया गङ्गयो गङ्गानाम् । आम्ङेर्भिस्श्च ( प्र० ६ सू० ६३ ) गङ्गायाम् गङ्गयो गङ्गासु । एव अम्बा अक्का अल्लाप्रभृतय । अम्बा अम्बे अम्बा शेष गङ्गावत् ॥ **अम्बादीना धौ**

**ह्रस्वः** । ६ । अम्बादीनां धौ परे ह्रस्वो भवति । हेअम्ब हेअम्बे हेअम्बाः । *यथाम्बाशब्दो द्विस्वरो मात्रर्थः । एवं ये द्विस्वरा मात्रर्थास्तेषां धौ परे ह्रस्वता स्यात्* । हेअक्क हेअक्के हेअक्काः । हेअल्ल हेअल्ले हेअल्लाः । अम्बादीनामिति कोऽर्थः । *अर्थवाचकानां जननीवाचकानां द्विस्वराणां शब्दानां धौ परे ह्रस्वो भवति* ॥ **हलकवतीनां न** । ७ । हलकवतीनां अम्बादीनां धौ परे ह्रस्वो न भवति । असंयोगा हलका ग्राह्याः । असंयोगा इति किम् । हेअम्बाडे हेअम्बाले हेअम्बिके । एवं श्रद्धामेधाशालामालाहेलादोलाप्रभृतयः । सर्वादीनां तु ङित्सु विशेषः ॥ **आपतः स्त्रियाम्** । ८ । अकारान्तान्नाम्नः स्त्रियां वर्तमानादाप् प्रत्ययो भवति । सर्वा सर्वे सर्वाः । सर्वाम् सर्वे सर्वाः । सर्वया सर्वाभ्याम् सर्वाभिः । सर्वाङे इति स्थिते ॥ **यटोच्च** । ९ । आबन्तात्सर्वादेः परस्य यटः सुडागमो भवति पूर्वस्य चापोऽकारो भवति । सर्वस्यै सर्वाभ्याम् सर्वाभ्यः । सर्वस्याः सर्वाभ्याम् सर्वाभ्यः । सर्वस्याः सर्वयोः । आम्ङेर्नियश्च ( प्र० ६ सू० ६३ ) सर्वस्याम् सर्वयोः सर्वासु । हेसर्वे हेसर्वे हेसर्वाः । एवं विश्वादीनां सर्वाशब्दवद्रूपं ज्ञेयम् । उभयशब्दस्य द्विवचनटाबभावत्वादन्यत्र प्रयोगः कर्तव्यः । नदीशब्दवद्रूपं ज्ञेयम् । द्वितीयातृतीयाशब्दयोस्तु ङित्सु वा सर्वाशब्दवद्रूपं ज्ञेयम् । प्रथमादयो गङ्गाशब्दवत् द्वयीत्रयीद्वितयीत्रितयीचतुष्टयीशब्दास्तु नदीवत् । सोमपा पुंवत् । जराशब्दस्य भेदः ॥ **जरायाः स्वरादौ जरस्वा वक्तव्यः** । १० । जर आप् इति स्थिते । दीर्घः । आपः । ( प्र० ७ सू० १ ) इति सेर्लोपः । जरा-जरसौ-जरे जरसः-जराः । जरसं-जराम् । जरसौ-जरे जरसः-जराः । जरसा-जरया जराभ्याम् जराभिः । जरसे-जरायै जराभ्याम् जराभ्यः । जरसः-जरायाः जराभ्याम् जराभ्यः । जरसः-जरायाः जरसोः-जरयोः जरसां-जराणाम् । जरसि जरायाम् जरसोः-जरयोः जरासु । हेजरे हेजरसौ-हेजरे हेजरसः-हेजराः । तदन्तविधिरप्येष्यते । एकदेशविकृतमनन्यवद्भवतीति न्यायात् । केचिद्वृद्धादाविनमत आश्रितामिच्छन्ति । जरस् स्वरादौ निर्जरस्यापि भवति । निर्जरः निर्जरसौ निर्जरौ निर्जरसः निर्जराः । निर्जरसम्-निर्जरम् निर्जरसौ-निर्जरौ निर्जरसः निर्जरान् । निर्जरसेन-निर्जरसा-निर्जरेण निर्जराभ्याम् ॥ **भिस ऐस् वक्तव्यः** । ११ । निर्जरसैः-निर्जरैः । निर्जरसे-निर्जराय निर्जराभ्याम् निर्जरेभ्यः । निर्जरसः-निर्जरसात्-निर्जरात् निर्जराभ्याम् निर्जरेभ्यः । निर्जरसः-निर्जरस्य निर्जरसोः-निर्जरयोः निर्जरसाम् निर्जराणाम् । निर्जरसि-निर्जरे निर्जरसोः-निर्जरयोः निर्जरेषु । हेनिर्जर हेनिर्जरसौ-निर्जरौ हेनिर्जरसः-हेनिर्जराः । इकारान्तः स्त्रीलिङ्गो बुद्धिशब्दः । तस्य पञ्चसु हरिशब्दवत्प्रक्रिया । बुद्धिः । औ यू ( प्र० ६ सू० ३८ ) बुद्धी बुद्धयः । हेबुद्धे हेबुद्धी हेबुद्धयः । बुद्धिम् बुद्धी बुद्धीः । पुंस इति विशेषणात्स्त्रियां शसः सकारस्य नकारादेशो न भवति । बुद्ध्या बुद्धिभ्याम् बुद्धिभिः ॥ **ङ्दुद्भ्याम्** । २१ । स्त्रियां वर्तमानाभ्यामिकारोकाराभ्यां परेषां ङितां वचनानां वा अटागमो भवति । इय स्वरे ( प्र० २ सू० १ ) । एद्वैद्वै ( प्र० २ सू० १२ ) बुद्ध्यै ( ङिति प्र० ६

सू० ४२ ) ए अय् ( प्र० २ सू० ९ ) बुद्धये बुद्धिभ्याम् बुद्धिभ्य. । बुद्धया । ङस्य ( प्र० ६ सू० ४३ ) बुद्धे बुद्धिभ्याम् बुद्धिभ्य । बुद्धया -बुद्धे बुद्धयो बुद्धीनाम् ॥ **स्त्रियां य्वोः** । १३ । स्त्रियाम् इश्च उश्च यू तयो इवर्णान्तादुवर्णान्ताच्च स्त्रिया वर्तमानात्परस्य ङेरामादेशो भवति । बुद्धयाम् । अडागमाभावे अमोऽप्यभाव । ङेरौ डित् ( प्र० ६ सू० ४४ ) बुद्धौ बुद्धयो बुद्धिषु । एव मतिभूतिधृतिकान्तिरुचिप्रभृतय । एव धेनुरज्जुतनुप्रभृतयोऽप्युकारान्ता स्त्रीलिङ्गा एतैरेव सूत्रैः सिद्ध्यन्ति।धेनु धेनू धेनव । धेनुम् धेनू धेनू । स्त्रीलिङ्गत्वान्नत्वाभाव। धेन्वा धेनुभ्याम् धेनुभि । धेन्वै-धेनवे धेनुभ्याम् धेनुभ्य । धेन्वा -धेनो धेनुभ्याम् धेनुभ्य । धेन्वा -धेनो धन्वो धेनूनाम् । धेन्वाम्-धेनौ धेन्वो धेनुषु । हेधेनो हेधेनू हेधेनव । ईबन्त स्त्रीलिङ्गो नदीशब्द । हसेप सेर्लोप ( प्र० ६ सू० ३६ ) नदी नद्यौ नद्य । नदीम् नद्यौ नदी । नद्या नदीभ्याम् नदीभि ॥ **ङितामट्** । १४ । स्त्रिया वर्तमानादीकारान्तादूकारान्ताच्च परेषां ङितां वचनानामडागमो भवति । नद्यै नदीभ्याम् नदीभ्य । नद्या -नदीभ्याम् नदीभ्य । नद्या नद्यो नदीनाम् । नद्याम् नद्यो नदीषु ॥ **धौ ह्रस्व.** । १५ । इयुवुस्थानवर्जितयोरधात्वोरीदूतो स्त्रीशब्दस्य च स्त्रिया धौ परे ह्रस्वो भवति । हेनदि हेनद्यौ हेनद्य । ह्रस्वनिधिसामर्थ्यान्न गुण । एव गौरीगौतमीमहीसरस्वतीब्रह्माणीकौमारीप्रभृतय । गौरी गौर्यौ गौर्य । हेगौरि हेगौर्यौ हेगौर्य । गौरीम् गौर्यौ गौरी इत्यादि।गौतमी गौतम्यौ गौतम्य । हेगौतमि । सरस्वती सरस्वत्यौ सरस्वत्य । हेसरस्वति । ब्रह्माणी ब्रह्माण्यौ ब्रह्माण्य । हेब्रह्माणि । कुमारी कुमार्यौ कुमार्य । हेकुमारि । मधुमती मधुमत्यौ मधुमत्य । हेमधुमति । इत्यादि ॥ **क्रोष्टु' स्त्रिया तृवद्भाव.** । १६ । क्रोष्ट्री क्रोष्ट्र्यौ क्रोष्ट्र्य । क्रोष्ट्रीम् शेष नदीवत् । हेक्रोष्ट्रि हेक्रोष्ट्र्यौ हेक्रोष्ट्र्य इत्यादि । ईकारान्तो लक्ष्मीशब्द । लक्ष्मीशब्दस्येबन्तत्वाभावात्सेर्लोपो नास्ति । लक्ष्मी लक्ष्म्यौ लक्ष्म्य । लक्ष्मीम् लक्ष्म्यौ लक्ष्मी. । शेष नदीवत् । हेलक्ष्मि हेलक्ष्म्यौ हेलक्ष्म्य । स्त्रीशब्दस्येबन्तत्वात्सेर्लोपोऽस्ति । स्त्री ॥ **स्त्रीभुवो.** । १७ । स्त्रीशब्दस्य भूशब्दस्य च इयुवौ भवत स्वरे परे । स्त्रियौ स्त्रिय । हेस्त्रि हेस्त्रियौ हेस्त्रिय ॥ **वाम्शसि** । १८ । स्त्रीशब्दस्य अमि शसि च परे वा इय् भवति । स्त्रियं स्त्रीम् स्त्रियौ स्त्रिय.-स्त्री । स्त्रिया स्त्रीभ्याम् स्त्रीभि । स्त्रियै स्त्रीभ्याम् स्त्रीभ्य । स्त्रिया स्त्रीभ्याम् स्त्रीभ्य । स्त्रिया स्त्रियो स्त्रीणाम् । स्त्रियाम् स्त्रियो स्त्रीषु इत्यादि । ईकारान्त श्रीशब्द । श्रयन्ते जना यामिति श्री । य्वोर्धातोरियुवौ स्वरे ( प्र० ६ सू० ६० ) श्रियौ श्रिय । श्रियम् श्रियौ श्रिय । श्रिया श्रीभ्याम् श्रीभि ॥ **वेयुव:** । १९ । इयुवन्तात्स्त्रियां वर्तमानात्परेषां ङितां वचनानां वा अडागमो भवति । न तु स्त्रीशब्दस्य विकल्पेन । श्रियै श्रिये श्रीभ्याम् श्रीभ्य । श्रिया -श्रिय श्रीभ्याम् श्रीभ्य । श्रिया -श्रिय श्रियो श्रियाम् । श्र्यादीनां वामो नुट् वक्तव्य । श्रीणाम् । श्रियाम्-श्रियि श्रियो श्रीषु । हेश्री हेश्रियौ हेश्रिय । एव धीह्रीप्रभृतयोऽप्यनीबन्ता ।धी धियौ धिय । हेधी हेधियौ हेधिय । ह्री ह्रियौ ह्रिय । हेह्री ॥

सर्वेभ्यः । सर्वस्मात् सर्वाभ्याम् सर्वेभ्यः । सर्वस्य सर्वयोः सर्वेषाम् । सर्वस्मिन् सर्वयोः सर्वेषु । हेसर्व हेसर्वे हेसर्वाणि । अन्यादीनां पञ्चानां विशेषोऽस्ति । अन्य सि इति स्थिते ॥ **त्वन्यादेः** ।८। त्वु अन्यादेः । अन्यादेर्गणात्परयोः स्यमोः त्वुर्भवति । शकारः सर्वादेशार्थः । उकार उच्चारणार्थः । वावसाने । ( प्र० ९ सू० ८ ) इति पक्षे दत्वमपि भवति । अन्यत्-अन्यद् अन्ये अन्यानि । पुनरप्येवम् । शेषं सर्ववत् । अन्यतरत्-अन्यतरद् अन्यतरे अन्यतराणि । इतरत्-इतरद् इतरे इतराणि । कतरत्-कतरद् कतरे कतराणि । कतमत्-कतमद् कतमे कतमानि । शेषं सर्ववद्रूपम् । प्रथमादयः कुलवत् । प्रथम प्रथमे प्रथमानि । अकारान्तो नपुंसकलिङ्गः सोमपाशब्दः । सोमपा सि इति स्थिते ॥ **नपुंसकस्य** । ९ । नपुंसकस्य ह्रस्वो भवति सर्वासु विभक्तिषु परतः । अतोऽम् ( प्र० ८ सू० १ ) सोमपम् सोमपे सोमपानि । हेसोमप शेषं कुलवत् । इकारान्तोऽस्थिशब्दः ॥ **नपुंसकात्स्यमोर्लुक्** । १० । नपुंसकलिङ्गात्परयोः स्यमोर्लुग्भवति । अस्थि ॥ **नामिनः स्वरे** । ११ । नाम्यन्तस्य नपुंसकस्य नुमागमो भवति विभक्तिस्वरे । परे अस्थिनी । अस्थीनि । पुनरप्येवम् ॥ **अस्थ्यादेरन्तुं शसादौ** । १२ । अत् चेत्यव्ययम् । अस्थ्यादीनाम् । शसादौ अस्थ्यादीनां नुमागमो भवति इकारस्य चाकारादेशो भवति शसादौ स्वरे परे । शस् आदिर्यस्य सः शसादिः टादि । शसादावित्यतद्गुणसंविज्ञानो बहुव्रीहिः । यथा चित्रगुर्देहधनः ॥ **अल्लोपः स्वरेऽम्वयुक्तात्छसादौ** । १३ । नान्तस्योपधाया अकारस्य लोपो भवति शसादौ स्वरे परे तद्धिते ईपि ईकारे च । मकारवकारान्तसंयोगादुत्तरस्य न भवति । अम्वयुक्तात्छसादावित्यत्र तद्गुणसंविज्ञानो बहुव्रीहिः । लम्बकर्णं इतिवत् । अत शसोऽपि ग्रहणम् । अस्थ्ना अस्थिभ्याम् अस्थिभिः । अस्थ्ने । अस्थिभ्याम् अस्थिभ्यः । अस्थ्नः अस्थिभ्याम् अस्थिभ्यः । अस्थ्नः अस्थ्नोः अस्थ्नाम् ॥ **वेङ्योः** । १४ । वेत्यव्ययम् । ङ्योः परयोरकारस्य लोपो भवति । अस्थ्नि-अस्थनि अस्थ्नोः अस्थिषु ॥ **इकृणां नपुंसके धौ वा गुणो वक्तव्यः** । १५ । इश्च उश्च ऋश्च तेषां इकृणाम् । उक्तं हि ॥

> संबोधने तूशनसस्त्रिरूपं सान्तं तथा
> नान्तमथाप्यदन्तम् ॥ माध्यन्दिनिर्वष्टि
> गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः ॥२१ ॥

इउण् ऋलृक् इति पाणिनीयानामिक्प्रत्याहारः । हेअस्थे-हेअस्थि हेअस्थिनी हेअस्थीनि । एवं दधिसक्थ्यक्षिप्रभृतयः । इकारान्तो वारिशब्दः । वारि वारिणी वारीणि । पुनरप्येवम् । वारिणा वारिभ्याम् वारिभिः । वारिणे वारिभ्याम् वारिभ्यः । वारिणः वारिभ्याम् वारिभ्यः । वारिणः वारिणोः वारीणाम् । वारिणि वारिणोः वारिषु । हेवारे-हेवारि हेवारिणी हेवारीणि ॥ **नपुंसकस्य** । १६ । नपुंसकस्य ह्रस्वो भवति स्वरादौ । नामिनः स्वरे ( सू० ११ ) इति नुमागमः । ग्रामणि ग्रामणिनी ग्रामणीनि । पुनरप्येवम् ॥ **टादावुक्तपुंस्कं पुंवट्टा** । १७ । उक्तपुंस्कं नाम्यन्त नपुंसकलिङ्गं टादौ स्वरे परे पुंवद्वा भवति ॥

**यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्तते ॥**
**नपुंसके तदेव स्यादुक्तपुंस्कं तदुच्यते ॥ ३२ ॥**

*ग्रामण्या-ग्रामणिना ग्रामणिभ्याम् ग्रामणिभिः । ग्रामण्ये-ग्रामणिने ग्रामणिभ्याम्* ग्रामणिभ्यः । ग्रामण्य-ग्रामणिन. ग्रामणिभ्याम् ग्रामणिभ्यः । ग्रामण्यः-ग्रामणिनः ग्रामण्योः-ग्रामणिनोः ग्रामण्याम् । नुमन्तस्यामि दीर्घ. । ग्रामणीनाम् । ग्रामण्याम् ग्रामणिनि ग्रामण्योः-ग्रामणिनो. ग्रामणिषु । हेग्रामणे-हेग्रामणि हेग्रामणिनी हेग्रामणीनि ॥

**एक एव हि यः शब्दस्त्रिषु लिङ्गेषु वर्तते॥**
**एकमेवार्थमाख्याति उक्तपुंस्कं तदुच्यते ॥ ३३ ॥**
**पीलुर्वृक्षः फलं पीलु पीलुने न तु पीलवे ॥**
**वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः ॥ ३४ ॥**

**ह्रस्वादेशे संध्यक्षराणामिकारोकारौ च वक्तव्यौ । १८।** सुष्ठु गायो यस्य तत् सुरि सुरिणी सुरीणि । पुनरप्येवम् । सुरिणा-सुराया । हेसुरे-हेसुरि हेसुरिणी हेसुरीणि । उकारान्तो मधुशब्दः । मधु मधुनी मधूनि । पुनरप्येवम् । स्वरादौ नामिन. स्वरे ( सू० ११ ) इत्यादि । ऋकारान्त' कर्तृशब्दः । कर्तृ कर्तृणी कर्तॄणि । पुनरप्येवम् । हेकर्ते-हेकर्तृ हेकर्तृणी हेकर्तॄणि । कर्त्रा-कर्तृणा इत्यादि । शोभना द्यौर्यस्य तत् सुद्यु सुद्युनी सुद्यूनि । हेसुद्यो-हेसुद्यु हेसुद्युनी हेसुद्यूनि । सुद्युना-सुद्युना इत्यादि सर्वमूह्यम् ॥ इति स्वरान्तनपुंसकलिङ्गप्रक्रिया ॥ ८ ॥

अथ हसान्ताः पुलिङ्गाः प्रदर्श्यन्ते । तत्र हकारान्तो अनडुहशब्दः । अनडुह् सि इति स्थिते ॥ **पञ्चस्वनडुहः । १ ।** पञ्चस्वनडुह आमागमो भवति ॥ **सावनडुहः । २ ।** अनडुहशब्दस्य सौ परे नुमागमो भवति ॥ **संयोगान्तस्य लोपः । ३ ।** संयोगान्तस्य लोपो भवति रसे पदान्ते च । हसेपः सेर्लोपः ( प्र० ६ सू० ३६ ) नुम्विधिसामर्थ्याद्दत्वाभाव. । अनड्वान् अनड्वाहौ अनड्वाहः । अनड्वाहम् अनड्वाहौ अनडुह । अनडुहा ॥ **वसां रसे । ४ ।** वस् स्रस् ध्वंस् भ्रम् अनडुह् इत्येतेषां रसे पदान्ते च दत्वं भवति । अनडुद्भ्याम् अनडुद्भिः । अनडुहे अनडुद्भ्याम् अनडुद्भ्यः । अनडुहः अनडुद्भ्याम् अनडुद्भ्यः । अनडुहः अनडुहो. अनडुहाम् । अनडुहि अनडुहोः । खसे चपा झसानाम् ( प्र० ४ सू० १८ ) अनडुत्सु ॥ **धावम् । ५ ।** अनडुहशब्दस्य धौ परे अमागमो भवति । हेअनड्वन् हेअनड्वाहौ हेअनड्वाह । गोदुहशब्दस्य भेदः ॥ **दादेर्घः । ६ ।** दादेर्धातोर्हकारस्य घत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । गोदुह् सि इति स्थिते ॥ **आदिजबानां झभान्तस्य झभाः स्ध्वोः । ७ ।** धातोर्झभान्तस्यादौ वर्तमानानां जबानां झभा भवन्ति सकारे ध्वशब्दे च परे नाम्नश्च रसे पदान्ते च ॥ **वावसाने । ८ ।** अवसाने वर्तमानानां झसानां जबा भवन्ति चपा वा ॥ **विरामोऽवसानम् । ९ ।** वर्णानामभावोऽवसानसंज्ञः स्यात् । गोधुक्-गोधुग् गोदुहौ गोदुहः । गोदुहम् गोदुहौ गोदुहः । गोदुहा । भकारादौ दादेर्घः ( सू० ६ )

इति घत्वे कृते आदिजबानां ( सू० ७ ) इत्यनेन दकारस्य घकारे कृते झबे जबाः ( प्र० २ सू० ३ ) गोधुग्भ्याम् गोधुग्भि । गोदुहे गोधुग्भ्याम् गोधुग्भ्य । गोदुह गोधुग्भ्याम् गोधुग्भ्य । गोदुह गोदुहो गोदुहाम् । गोदुहि गोदुहो । गोधुग् सुप् इति स्थिते । खसे चपा झसानाम् ( प्र० ४ सू० १८ ) इति ककार । पश्चात् किलात्य स कृतस्य ( प्र० ६ सू० २१ ) इति षत्वम् ॥ **कषसयोगे क्ष ।१०।** ककारषकारसयोगे क्ष इत्यक्षर भवति । गोधुक्षु । हेगोधुक् हेगोधुग् हेगोदुहौ हेगोदुह । मधुलिह्शब्दस्य भेद ॥ **हो ढ. । ११ ।** हकारस्य ढत्व भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । वावसाने ( सू० ८ ) मधुलिट् मधुलिड् मधुलिहौ मधुलिह । मधुलिहम् मधुलिहौ मधुलिह । मधुलिहा मधुलिड्भ्याम् मधुलिड्भि । हो ढ ( सू० ११ ) खसे चपा झसानाम् ( सू० १८ ) मधुलिट्सु । हेमधुलिट्-हे मधुलिड् हेमधुलिहौ हेमधुलिह इत्यादि । मित्रद्रुह्शब्दस्य भेद ॥ **द्रुहादीनां घत्वढत्वे वा । १२ ।** द्रुह् मुह् स्नुह् स्निह् इत्येतेषा हकारस्य घत्वढत्वे वा भवत धातोर्झसे परे नाम्नश्च रसे पदान्ते च । वावसाने ( सू० ८ ) मित्रध्रुग् मित्रध्रुक् मित्रध्रुड् मित्रध्रुट् मित्रद्रुहौ मित्रद्रुह । मित्रद्रुहम् मित्रद्रुहौ मित्रद्रुह । हेमित्रध्रुग् हेमित्रध्रुक् हेमित्रध्रुड्-हेमित्रध्रुट् । मित्रद्रुहा मित्रध्रुग्भ्याम्-मित्रध्रुड्भ्याम् मित्रध्रुग्भि मित्रध्रुड्भि इत्यादि । तथा तत्त्वमुह्शब्द । तत्त्वे मुह्यतीति तत्त्वमुक् तत्त्वमुग् तत्त्वमुट् तत्त्वमुड् तत्त्वमुहौ तत्त्वमुह । तत्त्वमुहम् तत्त्वमुहौ तत्त्वमुह । हेतत्त्वमुक् हेतत्त्वमुग् हेतत्त्वमुट् हेतत्त्वमुड इत्यादि । भारवाह्शब्दस्य भेद । होढ ( सू० ११ ) वावसाने ( सू० ८ ) भारवाट भारवाड् भारवाहौ भारवाह । भारवाहम् भारवाहौ ॥ **वाहो वौ शसादौ स्वरे । १३ ॥** वाह व औ शसादौ स्वरे । वाहो वाकारस्यौकारादेशो भवति शसादौ स्वरे परे भारौह । भारौहा भारवाड्भ्याम् भारवाड्भि । **श्वेतवाहुक्थशास् पुरोडाश् अवयाजा डस् रसे पदान्ते चेति वक्तव्यम् । १४ ।** डित्वाट्टिलोप । अत्वसो सौ ( सू० ६३ ) श्वेतवा श्वेतवाहौ श्वेतवाह । श्वेतवाहम् श्वेतवाहौ श्वेतवाह । अत्र वाहो वौ शसादौ स्वरे वेति केचित् । श्वेतौह । श्वेतौहा श्वेवाहा श्वेतवोभ्याम् श्वेतवोभि । श्वेतौहे-श्वेतवाहे श्वेतवोभ्याम् श्वेतवोभ्य । श्वेतौह -श्वेतवाह श्वेतवोभ्याम् श्वेतवोभ्य । श्वेतौह -श्वेतवाह श्वेतौहो -श्वेतवाहो श्वेतौहा-श्वेतवाहाम् । श्वेतौहि श्वेतवाहि श्वेतौहो -श्वेतवाहो श्वेतव सु-श्वेतवस्सु । अत्रया श्वेतवा पुरोडाश्वेते कृतदीर्घा सवुद्धौ निपात्यन्त । चकारादुक्थशा इति केचित् । हेश्वेतवा वेति केचित् । हे श्वेतव हेश्वेतवाहौ हेश्वेतवाह । श्वेतमाश्वन वहतीति श्वेतवा इति व्युत्पत्ति । उक्थशा उक्थशासौ उक्थशास । उक्थशासम् उक्थशासौ उक्थशास । उक्थशासा उक्थशोभ्याम् उक्थशोभि । उक्थशासे उक्थशोभ्याम् उक्थशोभ्य । उक्थश सु- उक्थशस्सु । हे उक्थशा -हे उक्थश हेउक्थशासौ हेउक्थशास इत्यादि । पुरोडा पुरोडाशौ पुरोडाश । पुरोडाशम् पुरोडाशौ पुरोडाश । पुरोडाशा पुरोडोभ्याम् पुरोडोभि । पुरोडाशे पुरोडोभ्याम् पुरोडोभ्य । पुरोड सु-पुरोडस्सु । हेपुरोडा -हेपुरोड हेपुरोडाशौ हेपुरोडाश ।

अनयाः अनयाजौ अनयाजः । अनयाजम् अनयाजौ अनयाजः । अनयाजा अनयोभ्याम् अनयोभिः । अनयाजे अनयोभ्याम् अनयोभ्य । अनय सु-अनयस्सु । हे अनयाः-हेअनयः हेअनयाजौ हेअनयाजः । तुरासाह्शब्दस्य भेदः । हो ढः ( सू०-११ ) ॥ **सहेः षः साढि** । १५ । सहेः सकारस्य षकारादेशो भवति साढि सति । वावसाने ( सू० ८ ) तुराषाट्-तुराषाड् तुरासाहौ तुरासाहः । तुरासाहम् तुरासाहौ तुरासाहः । तुरासाहा तुराषाड्भ्याम् तुराषाड्भिः । तुरासाहे तुराषाड्भ्याम् तुराषाड्भ्य. इत्यादि । हेतुराषाट्-हेतुराषाड् हेतुरासाहौ हेतुरासाहः । रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः ॥ **चतुराम् शौ च** । १६ । चतुर्शब्दस्यामागमो भवति पञ्चसु परेषु शौ च परे । चत्वारः चतुरः चतुर्भिः चतुर्भ्यः ॥ **रः संख्यायाः** । १७ । रेफान्तसंख्याया परस्यामो नुडागमो भवति । णत्वद्वित्वे । चतुर्णाम् ॥ **रः सुपि** । १८ । सप्तमीबहुवचने रेफस्य विसर्जनीयो नान्यरेफस्य । चतुर्षु । अत्र ज्ञापकं यत्चतुर्ष्विद सूत्रम् । तदन्तविधिरपीष्यते । प्रियाश्चत्वारो यस्य सः प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः । प्रियचत्वारम् प्रियचत्वारौ प्रियचतुरः । प्रियचतुरा प्रियचतुर्भ्याम् प्रियचतुर्भिः । गौणत्वे नुट् नेष्यते । प्रियचतुराम् । प्राधान्ये तु स्यादेव । परमचतुर्णाम् ॥ **धावम्** । १९ । चतुर्शब्दस्य धौ परे अमागमो भवति । हेप्रियचत्व हेप्रियचत्वारौ हेप्रियचत्वारः । नकारान्तो राजन्शब्दः । राजन् सि इति स्थिते । नोपधायाः ( प्र० ८ सू० ७ ) ॥ **नाम्नो नो लोपशधौ** । २० । नाम्नः नः लोपश् अधौ । नाम्नो नकारस्यानागमजस्य लोपश् भवति रसे पदान्ते चाधौ । चकाराक्कचिन्नाम्नो नकारस्य लोपश् न भवति । सुष्ठु हिनस्ति पापमिति सुहिन् । राजा राजानौ राजानः । राजानम् राजानौ । अल्लोपः स्वरे ( प्र० ८ सू० १३ ) स्तोः श्चुभिश्चुः ( प्र० ४ सू० ६ ) इति नकारस्य ञकारः ॥ **जञोर्ज्ञः** । २१ । जकारञकारसंयोगे ज्ञ इत्यक्षरं भवति । राज्ञः । राज्ञा राजभ्याम् । योगानामुभयतः सबन्धः । लोपशि पुनर्न संधिः ( प्र० २ सू० १८ ) । इति नियमात् । अङ्घौ ( प्र० ६ सू० ११ ) त्वात्व न । राजभिः । राज्ञे राजभ्याम् राजभ्यः । राज्ञः राजभ्याम् राजभ्यः । राज्ञः राज्ञोः राज्ञाम् राज्ञि । वेङनोः ( प्र० ८ सू० १४ ) राजनि राज्ञोः राजसु । अधानिति विशेषणाद्धेराजन् हेराजानौ हेराजानः । एवं यज्वन्नात्मन्सुधर्मन्प्रभृतयः । यज्वा यज्वानौ यज्वानः । यज्वानम् यज्वानौ । अम्वयुक्तादिति विशेषणादल्लोपो नास्ति । यज्वनः । यज्वना यज्वभ्यां यज्वभिः । यज्वने यज्वभ्याम् यज्वभ्य । यज्वनः । इत्यादि । हेयज्वन् हेयज्वानौ हेयज्वानः । आत्मा आत्मानौ आत्मानः । आत्मानम् आत्मानौ आत्मनः । आत्मना आत्मभ्याम् आत्मभिः इत्यादि । हेआत्मन् हेआत्मानौ हेआत्मानः । सुधर्मा सुधर्माणौ सुधर्माणः । सुधर्माणम् सुधर्माणौ सुधर्मणः । सुधर्मणा सुधर्मभ्याम् सुधर्मभिः इत्यादि । हेसुधर्मन् हेसुधर्माणौ हेसुधर्माणः । अन्ययज्वन्मघवन्शब्दानां पञ्चसु राजन्शब्दवत्प्रक्रिया । श्वा श्वानौ श्वानः । श्वानम् श्वानौ ॥ **श्वादेः** । २२ । श्वादेरकार उत्वं प्राप्नोति

इति घत्वे कृते आदिजबानां ( सू०७ ) इत्यनेन दकारस्य घकारे कृते झबे जबाः ( प्र० २ सू० ३ ) गोधुग्भ्याम् गोधुग्भि । गोदुहे गोधुग्भ्याम् गोधुग्भ्य. । गोदुह गोधुग्भ्याम् गोधुग्भ्य । गोदुह गोदुहो गोदुहाम् । गोदुहि गोदुहो । गोधुग् सुप् इति स्थिते । खसे चपा झसानाम् ( प्र० ४ सू० १८ ) इति ककार । पश्चात् किलात्प स कृतस्य ( प्र० ६ सू० ७१ ) इति षत्वम् ॥ **कषसंयोगे क्षः ।१०।** ककारषकारसंयोगे क्ष इत्यक्षर भवति । गोधुक्षु । हेगोधुक्-हेगोधुग् हेगोदुहौ हेगोदुह । मधुलिह्शब्दस्य भेद ॥ **हो ढ.** । ११ । हकारस्य ढत्व भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । वाऽवसाने ( सू० ८ ) मधुलिट् मधुलिड् मधुलिहौ मधुलिह । मधुलिहम् मधुलिहौ मधुलिह । मधुलिहा मधुलिड्भ्याम् मधुलिड्भि । हो ढ ( सू० ११ ) खसे चपा झसानाम् ( सू० १८ ) मधुलिट्सु । हेमधुलिट्-हेमधुलिड् हेमधुलिहौ हेमधुलिह इत्यादि । मित्रद्रुह्शब्दस्य भेद ॥ **द्रुहादीनां घत्वढत्वे वा** । १३ । द्रुह् मुह् स्नुह् स्निह् इत्येतेषां हकारस्य घत्वढत्वे वा भवत धातोर्झसे परे नाम्नश्च रसे पदान्ते च । वाऽवसाने ( सू० ८ ) मित्रध्रुग्-मित्रध्रुक् मित्रध्रुड् मित्रध्रुट् मित्रद्रुहौ मित्रद्रुह. । मित्रद्रुहम् मित्रद्रुहौ मित्रद्रुह । हेमित्रध्रुग् हेमित्रध्रुक्-हेमित्रध्रुड्-हेमित्रध्रुट् । मित्रद्रुहा मित्रध्रुग्भ्याम्-मित्रध्रुड्भ्याम् मित्रध्रुग्भि -मित्रध्रुड्भि इत्यादि । तथा तत्त्वमुह्शब्द । तत्त्वे मुह्यतीति तत्त्वमुक्-तत्त्वमुग्-तत्त्वमुट् तत्त्वमुड् तत्त्वमुहौ तत्त्वमुह । तत्त्वमुहम् तत्त्वमुहौ तत्त्वमुह । हेतत्त्वमुक् हेतत्त्वमुग्-हेतत्त्वमुट्-हेतत्त्वमुड् इत्यादि । भारवाह्शब्दस्य भेद । होढ ( सू० ११ ) वाऽवसाने ( सू० ८ ) भारवाट्-भारवाड् भारवाहौ भारवाह । भारवाहम् भारवाहौ ॥ **वाहो वौ शसादौ स्वरे** । १३ ॥ वाह व औ शसादौ स्वरे । वाहो वाकारस्यौकारादेशो भवति शसादौ स्वरे परे भारौह । भारौहा भारवाड्भ्याम् भारवाड्भि । **श्वेतवाहुक्थशास् पुरोडाश् अवयाजां डस् रसे पदान्ते चेति वक्तव्यम्** । १४ । डित्वाट्टिलोप । अत्वसौ सौ ( सू० ६३ ) श्वेतवा श्वेतवाहौ श्वेतवाह । श्वेतवाहम् श्वेतवाहौ श्वेतवाह । अत्र वाहो वौ शसादौ स्वरे वेति केचित् । श्वेतौह । श्वेतौहा श्वेतवाहा श्वेतवोभ्याम् श्वेतवोभि । श्वेतौहे-श्वेतवाहे श्वेतवाभ्याम् श्वेतवोभ्य । श्वेतौह -श्वेतवाह श्वेतवोभ्याम् श्वेतवोभ्य । श्वेतौह.-श्वेतवाह श्वेतौहो -श्वेतवाहो श्वेतौहा-श्वेतवाहाम् । श्वेतौहि-श्वेतवाहि श्वेतौहो -श्वेतवाहो श्वेतव सु-श्वेतवस्सु । अनया श्वेतवा पुरोडाश्वेते कृतदीर्घा सकुद्धौ निपात्यन्ते । चकारादुक्थशा इति केचित् । हेश्वेतवा वेति केचित् । हे श्वेतव हेश्वेतवाहौ हेश्वेतवाह । श्वेतमाश्वन वहतीति श्वेतवा इति व्युत्पत्ति । उक्थशा उक्थशासौ उक्थशास । उक्थशासम् उक्थशासौ उक्थशास । उक्थशासा उक्थशोभ्याम् उक्थशोभि । उक्थशासे उक्थशोभ्याम् उक्थशोभ्य । उक्थश सु- उक्थशस्सु । हे उक्थशा -हे उक्थश हेउक्थशासौ हेउक्थशास इत्यादि । पुरोडा पुरोडाशौ पुरोडाश । पुरोडाशम् पुरोडाशौ पुरोडाश । पुरोडाशा पुरोडोभ्याम् पुरोडोभि । पुरोडाशे पुरोडोभ्याम् पुरोडोभ्य । पुरोड सु-पुरोडस्सु । हेपुरोडा -हेपुरोड. हेपुरोडाशौ हेपुरोडाश ।

अवयाः अवयाजौ अवयाजः । अवयाजम् अवयाजौ अवयाजः । अवयाजा अवयोभ्याम् अवयोभिः । अवयाजे अवयोभ्याम् अवयोभ्यः । अवय सु-अवयस्सु । हे अवयाः-हेअवयः हेअवयाजौ हेअवयाजः । तुरासाह्शब्दस्य भेदः । हो ढः ( सू० ११ ) ॥ **सहेः षः साढि** । १५ । सहेः सकारस्य षकारादेशो भवति साढि सति । वाऽवसाने ( सू० ८ ) तुराषाट्-तुराषाड् तुरासाहौ तुरासाहः । तुरासाहम् तुरासाहौ तुरासाहः । तुरासाहा तुराषाड्भ्याम् तुराषाड्भिः । तुरासाहे तुराषाड्भ्याम् तुराषाड्भ्यः इत्यादि । हेतुराषाट्-हेतुराषाड् हेतुरासाहौ हेतुरासाहः । रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः ॥ **चतुराम् शौ च** । १६ । चतुर्शब्दस्यामागमो भवति पञ्चसु परेषु शौ च परे । चत्वारः चतुरः चतुर्भिः चतुर्भ्यः ॥ **रः संख्यायाः** । १७ । रेफान्तसंख्यायाः परस्यामो नुडागमो भवति । णत्वद्वित्वे । चतुर्ण्णाम् ॥ **रः सुपि** । १८ । सप्तमीबहुवचने रेफस्य विसर्जनीयो नान्यरेफस्य । चतुर्षु । अत्र ज्ञापकं यच्चतुर्ष्विद सूत्रम् । तदन्तविधिर्नेष्यते । प्रियाश्चत्वारो यस्य सः प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः । प्रियचत्वारम् प्रियचत्वारौ प्रियचतुरः । प्रियचतुरा प्रियचतुर्भ्याम् प्रियचतुर्भिः । गौणत्वे नुट् नेष्यते । प्रियचतुराम् । प्राधान्ये तु स्यादेव । परमचतुर्णाम् ॥ **धावम्** । १९ । चतुर्शब्दस्य धौ परे अमागमो भवति । हेप्रियचत्वः हेप्रियचत्वारौ हेप्रियचत्वारः । नकारान्तो राजन्शब्दः । राजन् सि इति स्थिते । नोपधायाः ( प्र० ८ सू० ७ ) ॥ **नाम्नो नो लोपशधौ** । २० । नाम्नः नः लोपश् अधौ । नाम्नो नकारस्यानागमजस्य लोपश् भवति रसे पदान्ते चाधौ । चकारात्क्वचिन्नाम्नो नकारस्य लोपश् न भवति । सुहु हिनस्ति पापमिति सुहिन् । राजा राजानौ राजानः । राजानम् राजानौ । अल्लोपः स्वरे ( प्र० ८ सू० १३ ) स्तोः श्चुभिश्चुः ( प्र० ४ सू० ६ ) इति नकारस्य ञकारः ॥ **जञोर्ज्ञः** । २१ । जकारञकारसंयोगे ज्ञ इत्यक्षरं भवति । राज्ञः । राज्ञा राजभ्याम् । योगानामुभयतः सम्बन्धः । लोपशि पुनर्न सन्धिः ( प्र० २ सू० १८ ) । इति नियमात् । अद्वौ ( प्र० ६ सू० ११ ) त्वात्वं न । राजभिः । राज्ञे राजभ्याम् राजभ्यः । राज्ञः राजभ्याम् राजभ्यः । राज्ञः राज्ञोः राज्ञाम् राज्ञि । वेङ्योः ( प्र० ८ सू० १४ ) राजनि राज्ञोः राजसु । अधात्विति विशेषणाद्धेराजन् हेराजानौ हेराजानः । एवं यज्वन्आत्मन्सुधर्मन्प्रभृतयः । यज्वा यज्वानौ यज्वानः । यज्वानम् यज्वानौ । अम्वयुक्तादिति विशेषणादल्लोपो नास्ति । यज्वनः । यज्वना यज्वभ्यां यज्वभिः । यज्वने यज्वभ्याम् यज्वभ्यः । यज्वनः । इत्यादि । हेयज्वन् हेयज्वानौ हेयज्वानः । आत्मा आत्मानौ आत्मानः । आत्मानम् आत्मानौ आत्मनः । आत्मना आत्मभ्याम् आत्मभिः इत्यादि । हेआत्मन् हेआत्मानौ हेआत्मानः । सुधर्मा सुधर्माणौ सुधर्माणः । सुधर्माणम् सुधर्माणौ सुधर्मणः । सुधर्मणा सुधर्मभ्याम् सुधर्मभिः इत्यादि । हेसुधर्मन् हेसुधर्माणौ हेसुधर्माणः । श्वन्युवन्मघवन्शब्दानां पञ्चसु राजन्शब्दवत्प्रक्रिया । श्वा श्वानौ श्वानः । श्वानम् श्वानौ ॥ **श्वादेः** । २२ । श्वादेर्वकार उत्वं प्राप्नोति

शसादौ स्वरे परे तद्धिते ईपि ईकारे च । तद्धिते स्वरे ■ न भवति । अत्र नियामक पाणिनीयसूत्रम् । श्वयुवमघोनामतद्धिते । तेन माघवन भवति । शुन । शुना श्वभ्याम् श्वभि । शुने श्वभ्याम् श्वभ्य । शुन श्वभ्याम् इत्यादि । हेश्वन् हेश्वानौ हेश्वान । युवा युवानौ युवान । युवानम् युवानौ । युवन्शब्दस्य वकारस्योत्वे कृते । सवर्णे दीर्घ सह ( प्र० २ सू० २० ) यून यूना युवभ्याम् युवभि । यूने युवभ्याम् युवभ्य इत्यादि । हेयुवन् हेयुवानौ हेयुवान । मघवा मघवानौ मघवान । मघवानम् मघवानौ । मघवन्शब्दस्योत्वे कृते । उओ ( प्र० २ सू०१३) मघोन । मघोना मघवभ्याम् मघवभि । मघोने । मघवभ्याम् मघवभ्य इत्यादि। हेमघवन् हेमघवानौ हेमघवान ॥ **मघवा बहुलम्** ।२३। मघवन्शब्दस्य वा तृ इत्यन्तादेश स्यात् । ऋकारो रित्कार्यार्थं । बहुलग्रहणात्सर्वे विधयो व्यभिचरन्ति । त्रितो नुम् ( सू० ६१ ) मघवान् । नश्चापदान्ते झसे (प्र० ४ स०२४) मघवन्तौ मघवन्त । मघवन्तम् मघवन्तौ मघवत० । मघवता मघवद्भ्याम् मघवद्भि । मघवते मघवद्भ्याम् मघवद्भ्य इत्यादि । हेमघवन् हेमघवन्तौ हेमघवन्त । ॥ "स किल सयुगमूर्ध्नि सहायता मघवत प्रतिपद्य महारथ" इति प्रयोगदर्शनात् ॥ **अर्वणस्त्रसावनञ** । २४ । नञ्वर्जितस्यार्वणस्तृ इत्यन्तादेश स्यादसौ विभक्तौ परत । अर्वा अर्वन्तौ अर्वन्त । अर्वन्तम् अर्वन्तौ अर्वत । अर्वता अर्वद्भ्याम् अर्वद्भि अर्वते अर्वद्भ्याम् अर्वद्भ्य इत्यादि । हेअर्वन् हेअर्वन्तौ हेअर्वन्त । नञ्वर्जितस्येति किम् । नोपधाया ( प्र० ८ सू० ७ ) अनर्वा अनर्वाणौ अनर्वाण । अनर्वाणम् अनर्वाणौ अनर्वण । अनर्वणा अनर्वभ्याम् अनर्वभि अनर्वसु इत्यादि । पथिन्शब्दस्य भेद ॥ **इतोऽत्पञ्चसु** । २५ । इत अत् पञ्चसु । पञ्चसु स्यादिषु पथ्यादीनामिकारस्याकारो भवति ॥ **थो न्थ** । २६ । पथ्यादीना थकारस्य न्थुडागमो भवति पञ्चसु परेषु । पन् थन् सि इति स्थिते ॥ **आ सौ** । २७ । आ सौ । पथ्यादीना टेरात्व भवति सौ परे । पन्था पन्थानौ पन्थान । पन्थानम् पन्थानौ ॥ **पथा टे.** । २८ । पथ्यादीनां टेर्लोपो भवति शसादौ स्वरे परे तद्धिते ईपि ईकारे च । पथ । पथा पथिभ्याम् पथिभि । पथे पथिभ्याम् पथिभ्य । पथ पथिभ्याम् पथिभ्य । पथ पथो पथाम् । पथि पथो पथिषु । हेपन्था हेपन्थानौ हेपन्थान । एव मथिन् ऋभुक्षिन् प्रभृतय । मन्था मन्थानौ मन्थान । ऋभुक्षा ऋभुक्षाणौ ऋभुक्षाण इत्यादि । दण्डिन्शब्दस्य भेद ॥ **इना शौ सौ** । २९ । इन् हन् पूषन् अर्यमन् इत्येतेषा शौ सौ चार्थो परे उपधाया दीर्घा भवति । दण्डी दण्डिनौ दण्डिन । दण्डिनम् दण्डिनौ दण्डिन । दण्डिना दण्डिभ्याम् दण्डिभि । दण्डिने दण्डिभ्याम् दण्डिभ्य । दण्डिषु इत्यादि । हेदण्डिन् हेदण्डिनौ हेदण्डिन । ब्रह्महा ब्रह्महणौ ब्रह्महण । ब्रह्महणम् ब्रह्महणौ । अल्लोप स्वरे ( प्र० ८ सू० १२ ) **हनो घ्ने** । ३० । हन घ्ने । हन्तेर्धातोर्हकारस्य घत्व भवति अव्यवधाने नकारे परे व्यवधाने ञिति णिति च परे ॥ घसयोगो णत्वनिषेधार्थ ॥ **हन्तेरत्पूर्वस्य** । ३१ । हन्तेरकारपूर्व-

स्यैव नस्य णत्वं स्यान्नान्यस्य । ब्रह्मघ्न । ब्रह्मघ्ना ब्रह्महभ्याम् ब्रह्महभि । ब्रह्मघ्ने ब्रह्मह-भ्याम् ब्रह्महभ्य । ब्रह्मघ्न ब्रह्महभ्याम् ब्रह्महभ्य । ब्रह्मघ्न ब्रह्मघ्नो ब्रह्मघ्नाम् । ब्रह्मघ्नि-ब्रह्महणि ब्रह्मघ्नो ब्रह्महसु । हेब्रह्महन् हेब्रह्महणौ हेब्रह्महण । पूषा पूषणौ पूषण । पूष-णम् पूषणौ पूष्ण । पूष्णा पूषभ्याम् पूषभि । पूष्णे पूषभ्याम् पूषभ्य । पूष्ण पूषभ्याम् पू-षभ्य । पूष्ण पूष्णो पूष्णाम् । पूष्णि- पूषणि । ङौ टिलोपो वेति केचित् । पू-षि पूष्णो पूषसु । हेपूषन् हेपूषणौ हेपूषण । अर्यमा अर्यमणौ अर्यमण । अर्य-मणम् अर्यमणौ अर्यम्ण । अर्यम्णा अर्यमभ्याम् अर्यमभि इत्यादि । हेअर्यमन् हेअ-र्यमणौ हेअर्यमण । सङ्ख्याशब्दा पञ्चन्प्रभृतयो बहुवचनान्तास्त्रिषु सरूपा । प-ञ्चन् जस् इति स्थिते ॥ **जश्शसोर्लुक्** । ३२ । षकारनकारान्तसङ्ख्याया परयो-र्जश्शसोर्लुग्भवति ॥ **लुकि न तन्निमित्तम्** । ३३ । लुकि सति तन्निमित्तं कार्यं न स्यात् । तेन नोपधाया ( प्र० ८ सू० ७ ) इति दीर्घो न । पञ्च पञ्च पञ्चभि पञ्चभ्य पञ्चभ्य ॥ **ष्णः** । ३४ । षकारनकारान्तसङ्ख्याया परस्यामो नुडागमो भवति । नोपधाया ( प्र० ८ सू० ७ ) नाम्नो नो लोपश्चर्यौ ( सू० २० ) पञ्चानाम् पञ्चसु । एवं सप्तन्नवन्दशन्प्रभृतय । अष्टन्शब्दस्य भेद ॥ **अष्टनो डौ वा** । ३५ । अष्टन्शब्दात्परयोर्जश्शसोर्वा डौ भवति । डित्वाट्टि-लोप । अष्टौ अष्ट अष्टौ अष्ट ॥ **वाऽऽसु** । ३६ । वा आ आसु । अष्टन्शब्दस्य आसु परासु विभक्तिषु वा टेरात्वं भवति । अष्टाभि -अष्टभि । अष्टाभ्य -अष्टभ्य । अष्टाभ्य -अष्टभ्य । अष्टानाम् । अष्टसु अष्टासु । गौणत्वेऽपि आत्वं जश्शसो-र्डौत्वं चेत्येके । प्रियाष्टा प्रियाष्टा प्रियाष्टानौ प्रियाष्टौ प्रियाष्टान -प्रियाष्टन प्रियाष्टौ प्रियाष्टा । प्रियाष्टान प्रियाष्टम् प्रियाष्टानौ प्रियाष्टौ प्रियाष्ट्न प्रियाष्टौ प्रियाष्टान् प्रियाष्टा । प्रियाष्ट्ना प्रियाष्टा प्रियाष्टाभ्यां प्रियाष्टभ्याम् प्रियाष्टाभि प्रियाष्टभि । प्रियाष्ट्ने प्रियाष्टै प्रियाष्टाभ्यां-प्रियाष्टभ्याम् प्रियाष्टाभ्य प्रियाष्टभ्य । प्रियाष्ट्न प्रिया-[illegible] प्रियाष्टाभ्यां प्रियाष्टभ्याम् प्रियाष्टाभ्य प्रियाष्टभ्य । प्रियाष्ट्न प्रियाष्टा प्रिया-ष्ट्नो प्रियाष्टौ प्रियाष्टां-प्रियाष्ट्नाम् । प्रियाष्ट्नि प्रियाष्टनि प्रियाष्टे प्रियाष्ट्नो प्रियाष्टौ प्रि-याष्टासु प्रियाष्टसु । हेप्रियाष्टन् हेप्रियाष्टा हेप्रियाष्टानौ-हेप्रियाष्टौ हेप्रियाष्टान -हेप्रियाष्टौ-हेप्रियाष्टा ॥

> जसि त्रीण्येव रूपाणि शसि चत्वारि वै पुन ॥
> ङावपि त्रीणि रूपाणि शेषे द्वे द्वे प्रियाष्टन ॥ ३५ ॥

मकारान्त इदम्शब्द ॥ **इदमोऽय् पुंसि** । ३७ । इदम अयम् पुंसि । *इदम्शब्दस्य पुंसि सिपरे अयमादेशो भवति सिलोपश्च । अयम् । [illegible]* त्यदादेरे ( प्र० ६ सू० ५५ ) रिति सर्नाकार । इद औ इति स्थिते ॥ **दस्य म** । ३८ । दस्य म । त्यदादीनां दकारस्य मत्वं भवति स्यादौ परे । औ औ-औ ( प्र० २ सू० १४ ) इमौ । सर्वादित्वाज्जसी ( प्र० ६ सू० २५ ) इमे । इ-मम् इमौ इमान् ॥ **अन टौसो** । ३९ । अन टौसो । इदमोऽनादेशो भवति टौसो परयो कृतस्य । टेन ( प्र० ६ सू० १० ) अनेन ॥ **ह्स्य** ॥ ४० ॥ हिम अ ।

इदम सकारे भकारे च परे अकारादेशो भवति कृतत्वस्य । त्यदादित्वा-दत्वसिद्धौ पुनरत्वविधान सर्वादेशार्थम् । तदाह। कृतत्वस्येति । अद्भी ( प्र० ६ सू० ११ ) त्यात्वम् । आभ्याम् ॥ **भिस्भिस्** । ४१ । इदमदसोर्भिस् भिसेव भवति। तेन भकारस्य अत्व न । एस्भि बहुत्वे ( प्र० ६ सू० १५ ) । एभि । इदम् ङे इति स्थिते । त्यदादेष्टेर स्यादौ ( प्र० ६ सू० ५५ ) सर्वादे स्मट् ( प्र० ६ सू० २८ ) स्म्य ( सू० ३९ ) अस्मै आभ्याम् एभ्य । ङसिरत् ( प्र० ६ सू०१६) अत ( प्र० ६ सू० २९ ) अस्मात् आभ्याम एभ्य । ङस्स्य ( प्र० ६ सू० १७ ) अस्य । अन टौसो ( सू० ३९ ) ओसि (प्र० ६ सू० १८) एअय् ( प्र० २ सू० ९ ) अनयो । सुडाम (प्र० ६ सू० ३० ।) स्म्य (३९ ।) एस्भि बहुत्वे ( १५ ) क्विलात् ( प्र० ६ सू० २१ ) एषाम् । ङि स्मिन् ( प्र० ६ सू० ३१ ) अस्मिन् अनयो एषु । त्यदादीनां सबोधनाभाव ॥ **इदमोऽप्यन्वादेशे द्वितीयाटौ स्वेनादेशो वक्तव्यः** ।४२। उक्तस्य पुनर्भाषणमन्वादेश ।एनम् एनौ एनान् । एनेन एनयो एनयो । प्रशाम्शब्दस्य भेद । **मो नो धातो** । ४३ । धातोर्मकारस्य नकारादेशो भवति रसे पदान्ते च । प्रशान् प्रशामौ प्रशाम । हे-प्रशान् हेप्रशामौ हेप्रशाम । प्रशामम् प्रशामौ प्रशाम । प्रशामा प्रशान्भ्याम् प्रशा भि इत्यादि । किंशब्दस्य भेद ।किंशब्दस्य त्यदादेष्टेर स्यादाविति सर्वनाकारे कृते सर्वशब्दवद्रूप ज्ञेयम् । क कौ के । कम् कौ कान् । केन काभ्याम् कै ।. कस्मै काभ्याम् केभ्य इत्यादि । धकारान्तस्तत्त्वबुध्शब्द तस्य रसे पदान्ते च आ-दिजबानां झभा तस्य झभा स्ध्वे ( सू० ७ ) वावसाने ( सू० ८ ) तत्वभुत् त-त्वभुद् तत्वबुधौ तत्वबुध । तत्वबुधम् तत्वबुधौ तत्वबुध । तत्वबुधा तत्वभुद्भ्या-म् तत्वभुद्भि । इत्यादि । हे तत्वभुत् हेतत्वभुद् हेतत्वबुधौ हेतत्वबुध । जका-रान्त सम्राज्शब्द ॥ **छशषराजादे. ष.** । ४४ । छकारान्तस्य शकारान्तस्य षकारान्तस्य राजृयजसृजमृजभ्राजादेश्च षकारो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । षस्य षत्व डत्वनिषेधार्थम् । तेन आख्याते इष्टीत्यादौ न भवति ॥ **षो ड** । ४५ । ष ड । षकारस्य डत्व भवति धातोर्झस परे नाम्नश्च रस प-दान्ते च । धावसाने ( सू० ८ ) ॥ **मोराजि सम क्वौ** । ४६ । क्विबन्ते रा-जतौ परे समो मस्य म एव स्यात् । तेनानुस्वाराभाव । सम्राट्-सम्राड् सम्राजौ सम्राज । सम्राजम् सम्राजौ सम्राज । सम्राजा सम्राड्भ्याम् सम्राड्भि इत्या दि । सम्राट्स । हेसम्राड् हेसम्राट् हेसम्राजौ हेसम्राज । एव विराजादय ॥ **युजेरसमासे** । ४७ । युजे सुटि नुम् स्यादसमासे ॥ **क्विन्प्रत्ययस्य कुः** । ४८ । क्विन्नन्तस्य धातो कवर्गोऽन्तादेश स्यादसमासे झलि पदान्ते च । प्रत्यय-शब्देन प्रत्ययान्तस्य ग्रहणम् । युङ् । अनुस्वारपरसवर्णौ ।युञ्जौ युञ्ज. । युञ्जम् युञ्जौ युज । युजा युग्भ्याम् युग्भि । युजे युग्भ्याम् युग्भ्य ।चो कु ( सू० ५२ ) खसे चपा ( प्र० ४ सू० १८ ) क्विलात् ( प्र० ६ सू० २१ ) कषसयोगे क्ष ( सू० १० ) युक्षु । हेयुङ् हेयुञ्जौ हेयुञ्ज इत्यादि । असमासे किम् । अश्वयुक्-

अश्वयुग् अश्वयुजौ अश्वयुजः । अश्वयुजम् अश्वयुजौ अश्वयुजः । अश्वयुजा अश्वयुग्भ्याम् अश्वयुग्भिः इत्यादि । समाध्यर्थस्य युजेर्न नुम् । युक् समाधिमानित्यर्थः । दकारान्तो द्विपाद्शब्दः । द्विपाद्-द्विपात् द्विपादौ द्विपादः । द्विपादम् द्विपादौ ॥ **पादः पत् । ४९ ।** पाद्शब्दस्य पदादेशः स्याच्छसादौ स्वरे परे तद्धिते ईपि ईकारे च । द्विपदः । द्विपदा द्विपाद्भ्याम् द्विपाद्भिः । द्विपदे द्विपाद्भ्याम् द्विपाद्भ्यः इत्यादि । हेद्विपात्-हेद्विपाद् हेद्विपादौ हेद्विपादः । दकारान्तास्त्यद्तद्यद्एतद्शब्दाः । त्यद् सि इति स्थिते ॥ **स्तः । ५० ।** स् तः । त्यदादेस्तकारस्य सत्वं भवति सौ परे । स्यः त्यौ त्ये । त्यम् त्यौ त्यान् । त्येन त्याभ्याम् त्यैः । त्यस्मै त्याभ्याम् त्येभ्यः । त्यस्मात् त्याभ्याम् त्येभ्यः । त्यस्य त्ययोः त्येषाम् । त्यस्मिन् त्ययोः त्येषु । सः तौ ते । तम् तौ तान् । तेन ताभ्याम् तैः । तस्मै इत्यादि । यः यौ ये । यम् यौ यान् । येन याभ्याम् यैः । यस्मै इत्यादि । एषः एतौ एते ॥ **एतदोऽन्वादेशे द्वितीयाटौस्स्वेनो वा वक्तव्यः । ५१ ।** उक्तस्य पुनर्भाषणमन्वादेशः । एतम्-एनम् एतौ-एनौ एतान्-एनान् । एतेन-एनेन एताभ्याम् एतैः । एतस्मै एताभ्याम् एतेभ्यः । एतस्मात् एताभ्याम् एतेभ्यः । एतस्य एतयोः-एनयोः एतेषाम् । एतस्मिन् एतयोः-एनयोः एतेषु । एतेन व्याकरणमधीतमेनं छन्दोऽध्यापय । छकारान्तस्तत्वप्राच्छ्शब्दः । छशषराजादेः षः ( सू० ४३ ) वाऽवसाने ( सू० ८ ) तत्वप्राट्-तत्वप्राड् तत्वप्राछौ तत्वप्राछः । तत्वप्राछम् तत्वप्राछौ तत्वप्राछः । तत्वप्राछा । छशषराजादेः ष. ( सू० ४३ ) षो डः । ( सू० ४४ ) तत्वप्राड्भ्याम् तत्वप्राड्भिः । तत्वप्राछे तत्वप्राड्भ्याम् तत्वप्राड्भ्यः । तत्वप्राछः तत्वप्राड्भ्याम् तत्वप्राड्भ्यः । तत्वप्राछः तत्वप्राछोः तत्वप्राछाम् । तत्वप्राछि तत्वप्राछोः तत्वप्राट्सु । थकारान्तोऽग्निमथ्शब्दः । वाऽवसाने ( सू० ८ ) अग्निमत्-अग्निमद् अग्निमथौ अग्निमथः । अग्निमथम् अग्निमथौ अग्निमथः । अग्निमथा अग्निमद्भ्याम् अग्निमद्भिः । इत्यादि । हेअग्निमत्-हेअग्निमद् हेअग्निमथौ हेअग्निमथः । चकारान्तः प्रत्यच्शब्दः ॥ **अञ्चेः पञ्चसु नुमागमो वक्तव्यः । ५२ ।** ॥ **च्वोः कुः । ५३ ।** चवर्गस्य कवर्गादेशो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । स्तोः श्चुभिः श्चुः । ( प्र० ४ सू० ६ ) संयोगान्तस्य लोपः ( सू० २ ) प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चम् प्रत्यञ्चौ ॥ **अञ्चेर्दीर्घश्च । ५४ ।** अञ्चेरकारस्य लोपो भवति पूर्वस्य च दीर्घः शसादौ स्वरे परे तद्धिते ईपि ईकारे च । प्रतीचः । निमित्ताभावे नैमित्तिकस्याप्यभावः । प्रतीचा प्रत्यग्भ्याम् प्रत्यग्भिः । प्रतीचे प्रत्यग्भ्याम् प्रत्यग्भ्यः । प्रत्यक्षु । हेप्रत्यङ् हेप्रत्यञ्चौ हेप्रत्यञ्चः ॥ **नाञ्चेः पूजायाम् । ५५ ।** पूजार्थस्याञ्चेरुपधाभूतस्य नस्य लोपो न स्यात् । अलुप्तनकारत्वान्न नुम् । क्विम्प्रत्ययस्य कुः (सू० ४७) संयोगान्तस्यलोपः (सू० २) प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चम् । प्रत्यञ्चौ नलोपाभावादकारस्यालोपः । प्रत्यञ्चः । प्रत्यञ्चा प्रत्यङ्भ्याम् प्रत्यङ्भिः इत्यादि ॥ **ङ्णोः कुक् टुक् शरि वा । २६ ।** ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि परे । प्रत्यक्षु-प्रत्यङ्षु । एवं तिर्यच्शब्दः । तिर्यङ्

तिर्यञ्चौ तिर्यञ्च । तिर्यञ्चम् तिर्यञ्चौ ॥ **तिरश्चादय.** । ५७ । तिरश्चादय शब्दा निपात्यन्ते शसादौ स्वरे परे तद्धिते ईपि ईकारे च । तिरश्च । तिरश्चा । तिर्यग्भ्याम् तिर्यग्भि । तिर्यक्षु । हेतिर्यङ् हेतिर्यञ्चौ हेतिर्यञ्च। **विष्वग्देवयोश्चटेरद्र्यञ्चतौ वप्रत्यये** । ५८ । अनयो सर्वनाम्नश्च टेरद्र्यादेश स्यात्प्रत्ययान्तेऽञ्चतौ परे । अमुमञ्चतीति विग्रहे । अदसष्टेरद्र्यादेश ॥ **अदसोऽसेर्दादु दो मः** । ५९ । अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य च म स्यात् । अदमुयङ् अमुयङ् अमुमुयङ् अदद्र्यङ् ॥

**परत: केचिदिच्छन्ति केचिदिच्छन्ति पूर्वत. ॥**
**उभयो. केचिदिच्छन्ति केचिदिच्छन्ति नोभयोः ॥ ३६ ॥**

विष्वद्र्यङ् देवद्र्यङ् । उदङ् उदञ्चौ उदञ्च । उदञ्चम् उदञ्चौ ॥ **उद ईत्** । ६० । उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेरकारस्येकारादेशो भवति शसादौ स्वरेपरे तद्धिते ईपि ईकारेच । उदीच । उदीचा । उदग्भ्याम् उदग्भि । उदक्षु हेउदङ् हेउदञ्चौ हेउदञ्च । एव सम्यच्छब्द । सम्यङ् सम्यञ्चौ सम्यञ्च । सम्यञ्चम् सम्यञ्चौ समीच । समीचा इत्यादि । तकारान्तो मरुच्छब्द । वावसाने (सू० ८) मरुत् मरुद् मरुतौ मरुत । मरुतम् मरुतौ मरुत । मरुता मरुद्भ्याम् मरुद्भि इत्यादि । हेमरुत् हेमरुद् हेमरुतौ हेमरुत । एवमग्निचित्प्रभृतय । अग्निचित्-अग्निचिद् अग्निचितौ अग्निचित । हेअग्निचित् हेअग्निचिद् हेअग्निचितौ हेअग्निचित । तकारान्त उकारानुबन्धो महच्छब्द ॥ **नितो नुम्** । ६१ । उश्च ऋश्च उ ऋ इत् यस्य स नित् तस्य नित नुम् । उकारानुबन्धस्य ऋकारानुबन्धस्य च नुमागमो भवति पुंसि पञ्चसु परेषु ॥ **न्सम्महतोर्धौ दीर्घः शौ च** । ५३ । नृच सुच अप्च महाश्च एतेषा समाहार न्सम्महत् तस्य न्सम्महत । अधौ दीर्घ शौ चेत्यव्ययम्। न्सन्तस्याप्शब्दस्य महच्छब्दस्य च दीर्घो भवति पञ्चसु परेषु धिवर्जितेषु शौ च परे । सयोगान्तस्य लोप (सू० ३) महान् । नश्चापदान्ते झसे (प्र०४सू०२४) महान्तौ महान्त । महान्तम् महान्तौ महत । महता महद्भ्याम् महद्भि । महते महद्भ्याम् महद्भ्य इत्यादि । हेमहन् हेमहान्तौ हेमहान्त । न्सन्तस्येत्यागमजनकार्युक्तसान्तस्य ज्ञेयम् । तेन कसशब्दस्य क्विबन्तस्य न दीर्घ । सयोगान्तस्य लोप (सू० ३) कन् कसौ कस । कसम् कसौ कस । कसा कन्भ्याम् कन्भि । कन्सु । हेकन् । शोभना आपो यस्मिन्नसौ स्वाप्-स्वाब् स्वापौ स्वाप । स्वापि तडागानि । उकारानुबन्धो भवच्छब्द ॥ **अत्वसोः सौ** । ६३ । अत्वसो सौ इति धातोर्नेष्यते । अत्वन्तस्यासन्तस्य च दीर्घो भवति धिवर्जिते सौ परे । भवान् भवन्तौ भवन्त । भवन्तम् भवन्तौ भवत । भवता भवद्भ्याम् भवद्भि । भवते भवद्भ्याम् भवद्भ्य । भवत भवद्भ्याम् भवद्भ्य । भवत भवतो भवताम् । भवति भवतो भवत्सु । हेभवन् हेभवन्तौ हेभवन्त । असन्तस्येत्यधुप्रत्ययान्तस्येति विवक्षितम् । तेन पिण्ड ग्रसतीति पिण्डग्र । पिण्डग्रसौ पि-

ण्डग्रस पिण्डग्रसम् पिण्डग्रसौ पिण्डग्रस इत्यादि । ऋकारानुबन्धस्य नुमागम एव । अत्वन्तत्वाभावान्न दीर्घ । त्रितो नुम् ( सू० ६१ ) सयोगान्तस्य लोप ( सू० ३ ) भवन् भवन्तौ भवन्त । भवन्तम् भवन्तौ भवत । भवता भवद्भ्याम् भवद्भि । भवत्सु इत्यादि । हेभवन् हेभवन्तौ हेभवन्त । एव पचत्शब्द । पचन् पचन्तौ पचन्त । पचन्तम् पचन्तौ पचत । पचत्सु इत्यादि । हेपचन् हेपचन्तौ हेपचन्त ॥ **द्विरुक्तानां जक्षादीनां च शतुर्नुम्प्रतिषेध पुँल्लिङ्गे नित्य वक्तव्यो नपुसके वा शौ च** । ६४ । दधत् दधद् दधतौ दधत । दधतम् दधतौ दधत । दधता दधद्भ्याम् दधद्भि इत्यादि । नपुसके दधत दधद् दधती दधति दधन्ति । जक्ष जागृ दरिद्रा शास् दीधी वेवी चकास् एते जक्षादय । शकारान्तो निश्शब्द । छशषराजादे ( सू० ४३ ) इति षत्वम् । षो ड ( सू० ४४ ) इति डत्वम् । वावसाने (सू० ८) निट् निड् निशौ निश । निशम् निशौ निश । निशा निड्भ्याम् निड्भि । निट्सु इत्यादि । हेनिट् हेनिड् हेनिशौ हेनिश । षकारान्त षष्शब्दो नित्यं बहुवचनान्तस्त्रिषु सरूप । षष् जस् इति स्थिते । जस्शसोर्लुक् ( सू० ३२ ) षो ड ( सू० ४५ ) वावसाने ( सू० ८ ) षट्-षड्२षड्भि षड्भ्य षड्भ्य । ष्ण ( सू०३४ ) इति नुट् । षो ड ( ४५ ) षड् नाम् इति स्थिते ॥ **डूण.** । ६५ । डू ण । सर्वासबन्धिनो डकारस्य णत्व भवति नामि परे । ष्टुभि ष्टु ( प्र० ४ सू० ८ ) षण्णाम् । क्वचिदपदान्तेऽपि पदान्तताश्रयणीया । षष् सु इति स्थिते । षो ड ( ४५ ) खसे चपा ( प्र० ४ सू० १८ ) इति टकारे कृते । षट्सु इत्यत्र ष्टुभि ष्टु ( ८ ) इति सकारस्य षत्वे प्राप्ते पदान्तताश्रयणीया । टोरन्त्या ( प्र० ४ सू० १२ ) दिति ष्टुत्वनिषेध ॥ **दोषाम्** । ६६ । दोष्सजुष्आशिष्पुहपिषुम-भृतीना षकारस्य रेफो भवति रसे पदान्ते च । दो दोषौ दोष । दोषम् दोषौ । शसादावन्यतता वा वक्तव्या । दोष -दोष्ण । दोषा-दोष्णा दोर्भ्यां दोषभ्याम् दोर्भि -दोषभि । दोषे दोष्णे दोर्भ्यां-दोषभ्याम् दोर्भ्य -दोषभ्य । दोष -दोष्ण । दोर्भ्यां दोषभ्याम् दोर्भ्य दोषभ्य । दोष -दोष्ण दोषो दोष्णो दोषा-दोष्णाम् । येऽशौ ( प्र० ८ सू० १४ ) दोष्णि दोषणि दोषि दोषो -दोष्णो दोष् सु इति स्थिते दोषाम् ( ६६ ) इति विसर्गे । शषसे वा ( प्र० ५ सू० ) इति सत्वे कृते किलात् ( प्र० ६ सू० २१ ) इति षत्वम् । नुम्विसर्जनीयशर्व्यवधानेऽपि किलादिति सस्य षत्व वाच्यम् । कृताकृतप्रसङ्गी यो विधि स नित्य । दोष्षु-दो षु-दोष्षु । हेदो हेदोषौ हेदोष । सप्तमीबहुवचने कृत्रिमत्वाद्विसर्ग । एव सजुष्शब्द ॥ **सजुषाशिषो रसे पदान्ते च दीर्घो वक्तव्य** । ६७ ॥ ष्वान्तिहसे ( प्र० १० सू० ७ ) इति सिद्धे इद न वक्तव्यम् । अथवा तस्यैवेद सूत्रकम् दोषाम् ( ६६ ) सजू सजुषौ सजुष । सजुषम् सजुषौ सजुष । सजुषा सजूर्भ्याम् सजूर्भि । सजूष्षु-सजू षु इत्यादि । हेसजू हेसजुषौ हेसजुष । सकारान्त पुस्शब्द । पुस् सि इति स्थिते ॥ **पुसोऽसुङ्** । ६८ । पुस्शब्दस्य अ-

सुडादेशो भवति पुंसि पश्चसु परेषु । डकारोऽन्त्यादेशार्थः । उकारो नुम्विधानार्थः ॥

रेफः स्वरपरं वर्णं दृष्ट्वा ऽऽरोहति तच्छिरः ॥
पुरः स्थितं यदा पश्येदधः सक्रमते स्वरम् ॥ ३७ ॥

अनुस्वारो नमस्यैव यावत्तद्देशयोगतः ॥
मूर्ध्नि सङ्गं लभेत्तावन्नेक्षते पुरतः स्वरम् ॥ ३८ ॥

**मः स्वरे** । ६९ । अनुस्वारस्य मकारो भवति स्वरे परे । पुमम् सि इति स्थिते । मितो नुम् ( सू० ६१ ) न्सम्महत ( सू० ६२ ) इति दीर्घः । सयोगान्तस्य लोपः ( सू० ३ ) हसेपः सेर्लोपः ( प्र० ६ सू० ३६ ) पुमान् पुमांसौ पुमांसः । पुमांसम् पुमांसौ पुसः । पुंसा । पुंसि पुंसो । पुस् सु इति स्थिते॥ **असंभवे पुंसः कक्सौ** । ७० । असभव इति कोऽर्थः । वेदान्तैकवेद्यस्य परमात्मनो बहुत्वासंभवे वाच्ये सति पुंसुशब्दस्य ककागमौ भवति सुपि परे। ककारः कित्कार्यार्थः अकार उच्चारणार्थः ॥ **स्कोराद्योश्च** । ७१ । संयोगाद्यौ सकारककारयोर्लोपौ भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । किलात् ( प्र० ६ सू० २१ ) इति सस्य षत्वम् । कषसयोगे क्षः ( सू० १० ) पुक्षु । ननु पुंक्षित्यत्र मकार एव सयोगादिर्न सकारस्तर्हि कथं लोपः । पक्षे अत्र स्कोराद्योश्चेत्यनेन संयोगाद्यस्य लोपे प्राप्ते मकारस्यैव लोपो भवतु न तु सकारस्य। आदित्वाभावात् । सयोगश्चस्तु पुस् इत्यत्र शिरसि मकार एव । तस्मादादित्व द्विविधम् । मुख्यत्वमापेक्षिकत्व च । अत्र सस्यादित्वमापेक्षिकम् । पुस् क इत्यत्र ककारापेक्षया सकारः आदिः सकारापेक्षया मकारः आदिरिति सकारस्यैव लोपः । हेपुमन् हेपुमांसौ हेपुमांसः । एवं विद्वस्शब्दः । विद्वान् विद्वांसौ विद्वांसः । विद्वांसम् विद्वांसौ ॥ **वसोर्व उः** । ७२ । वसो सबन्धी वकारः उत्वं प्राप्नोति शसादौ स्वरे परे तद्धिते ईपि ईकारे च । विदुषः । विदुषा। वसां रसे ( सू० ४ ) इति दत्वम् । विद्वद्भ्याम् विद्वद्भिः । विदुषे विद्वद्भ्याम् विद्वद्भ्यः । विद्वत्सु । हेविद्वन् इत्यादि। तद्धिते वैदुष्यम् । एवं तस्थिवस्प्रभृतयः । तस्थिवान् तस्थिवांसौ तस्थिवांसः । तस्थिवांसम् तस्थिवांसौ । निमित्ताभावे नैमित्तिकस्याप्यभावः । इटो वकारमुद्दिश्य प्राप्तत्वाद्वस्योत्वे तन्निवृत्तिः । आतोऽनापि ( पू० २ प्र० १ सू० १२३ ) इत्यलोपः । तस्थुषः । तस्थुषा तस्थिवद्भ्याम् तस्थिवद्भिः । तस्थिवत्सु इत्यादि । हेतस्थिवन् हेतस्थिवांसौ हेतस्थिवांसः । सकारान्तः शुश्रुवस्शब्दः । शुश्रुवान् शुश्रुवांसौ शुश्रुवांसः । शुश्रुवांसम् शुश्रुवांसौ शुश्रुवस् शस् इति स्थिते । वसोर्व उ ( सू० ७२ ) य्वोर्धातोरियुवौ स्वरे ( प्र० ६ सू० ६० ) स्वरहीनं परेण सयोज्यम् । किलात् ( प्र० ६ सू० २१ ) इति षत्वम् । शुश्रुषः । शुश्रुषा । वसां रसे ( सू० ४ ) खसे चपा ( प्र० ४ सू० १८ ) शुश्रुवत्सु । हेशुश्रुवन् हेशुश्रुवांसौ हेशुश्रुवांसः । एवं पेचिवान् पेचिवांसौ पेचिवांसः । पेचिवांसं पेचिवांसौ । शसि वस्योत्वे कृते यदागम-

त्यादिद्रलोप.। पेचुषः। पेचुषा पेचिवद्भ्याम् इत्यादि। सकारान्तो जगिमस्शब्द । जगिमवान् जगिमवांसौ जगिमवांस । जगिमवांसम् जगिमवांसौ। इट ककारमुद्दिश्य प्राप्तत्वाद्वस्योत्वे कृते इटोऽपि निवृत्ति । गमा स्वरे ( वृ० २ प्र० १ सू० १०३ ) इत्यनेन उपधालोप । जग्मुष । जग्मुषा जगिमवद्भ्याम्। जगिमवत्सु इत्यादि। जगन्वान् जगन्वांसौ जगन्वांस । जगन्वांसम् जगन्वांसौ। शसि वस्योत्वे कृते वकारनिमित्तस्य मो नो धातो ( सू० ५२ ) इति नकारस्यापि मकार । गमा स्वरे ( १०७ ) इति उपधालोप जग्मुष । जग्मुषा जगन्वद्भ्याम् इत्यादि। एव जघन्वान् जघन्वांसौ जघन्वांस । जघन्वांसम् जघन्वांसौ जघ्नुष । जघ्नुषा जघन्वद्भ्याम् इत्यादि। सकारान्त सुवचस्शब्द.। अत्वसो सौ ( सू० ६३ ) सुवचा सुवचसौ सुवचस । सुवचसम् । सुवचसौ इत्यादि। हेसुवच हेसुवचसौ हेसुवचस । एव चन्द्रमस्प्रभृतय । अत्वसो सौ ( सू० ६३ ) हसेप सेर्लोप ( प्र० ६ सू० ३६ ) चन्द्रमा चन्द्रमसौ चन्द्रमस । चन्द्रमसम् चन्द्रमसौ चन्द्रमस । चन्द्रमसा चन्द्रमोभ्याम् चन्द्रमोभि । चन्द्रमस्सु-चन्द्रम सु । हेचन्द्रम हेचन्द्रमसौ हेचन्द्रमस इत्यादि। उशनस्शब्दस्य भेद ॥ उशनसाम्। ७३। उशनस् पुरुदसस् अनेहस् इत्येतेषा सेर्धेडा भवति।डिन्त्वाट्टिलोप । उशना उशनसौ उशनस । उशनसम् उशनसौ उशनस । उशनसा उशनोभ्याम् उशनोभि । उशनस्सु उशन सु इत्यादि। उशनसो धौ नान्तताऽदन्तता वा वक्तव्या। हेउशनन्-हेउशन हेउशन. हेउशनसौ हेउशनस । उभयनिषेधे रूपत्रयम्। सबोधने तूशनसस्त्रिरूपमिति वचनात्। पुरुदमा पुरुदसौ पुरुदसस इत्यादि। अनेहा अनेहसौ अनेहस । अनेहसम् हेअनेह इत्यादि। अदस्शब्दस्य भेद । त्यदादेष्टे ( प्र० ६ सू० ४५ ) इति सर्वत्राकार. अद सि इति स्थिते ॥ सौ स्त्र. । ७४। अदसो दकारस्य सौ परे सत्व भवति ॥ सेरौ। ७५। अदस सेरौकारादेशो भवति। असौ। द्विवचने अदस् औ इति स्थिते ॥ दस्य मः। ७६ । त्यदादीना दकारस्य मत्व भवति स्यादौ परे ओऔऔ ( प्र० २ सू० १४ ) अमौ इति स्थिते ॥ मादू । ७७। उश्च ऊश्च ऊ अदसो मकारात्परस्य ह्रस्वस्य ह्रस्व उकारादेशो भवति दीर्घस्य च दीर्घ ऊकारादेशो भवति। अमू। सर्वादित्वाज्जसी ( प्र० ६ सू० २५ ) दस्य म ( ७६ ) अइए ( प्र० २ सू० ११ ) अमे इति स्थिते ॥ एरी बहुत्वे। ७८। ए ई बहुत्वे। बहुत्वे सति मकारात्परस्य अदस एकारस्य ईकारादेशो भवति। अमी। ईकारविधिसामर्थ्यान्नत्वकार । अमुम् अमू अमून्। मत्वोत्वे कृते टानाऽस्त्रियाम्। अमुना अमूभ्याम् अमीभि । अदस् ङे इति स्थिते। ङकारो ङित्कार्यार्थ । त्यदादेष्टे स्यादौ (प्र० ६ सू० ५५) दस्य म (सू० ७६) सर्वादेः स्मट् ( प्र० सू० २८ ) मादू ( सू० ७७ ) अमुष्मै अमूभ्याम् अमीभ्य । त्यदादेष्टेर स्यादौ ( ५५ ) दस्य म ( ७६ ) ङसित् ( प्र० ६ सू० १६ ) अत ( प्र० ६ सू० २९ ) सवर्णे दीर्घ ( प्र० २ सू० २० ) मादू ( ७७ ) अमुष्मात् अमूभ्याम् अमीभ्य । ङस्य ( प्र० ६ सू० १७ ) मादू ( ७७ ) किलात् ( प्र०

६ सू० २१ ) अमुष्य अमुयोः अमीषाम् । अमुष्मिन् अमुयोः अमीषु ॥ **सामान्ये अदसः कः स्यादिवच्च** । ७९ । सामान्येऽर्थे वाच्ये सति अदस्शब्दात्परः कः प्रत्ययो भवति क. स्यादिवज्ज्ञेय. । एकस्योच्चारणेन बह्वर्थो लभ्यते तत्सामान्यम् । त्यदादेष्टेः स्यादौ ( ५५ ) दस्य मः (७६) मादू ( ७७ ) अमुकः अमुकौ अमुके । अमुकम् अमुकौ अमुकान् । अमुकेन अमुकाभ्याम् अमुकैः इत्यादि । शेषं सर्वशब्दवद्रूपं ज्ञेयम् । चकारात्सात्परस्योत्वम् तेन त्यदादेष्टेः ( ५५) सौ सः (प्र० ६ सू० ७४ ) मादू ( ७७ ) अमुक. इत्यादि । इत्यपि भवति ॥

॥ इति हसान्तपुल्लिङ्गप्रक्रिया ॥ ९ ॥

---

अथ हसान्ताः स्त्रीलिङ्गा. प्रदर्श्यन्ते ॥ तत्र हकारान्त उपानह्शब्दः ॥ **नहो धः** । १ । नहो हकारस्य धकारादेशो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । वाऽवसाने ( प्र० ९ सू० ८ ) उपानत्-उपानद् उपानहौ उपानहः । खसे चपा झसानाम् ( प्र० ४ सू० १८ ) उपानत्सु । हेउपानत्-हेउपानद् हेउपानहौ हेउपानहः । वकारान्तो दिव्शब्दः ॥ **दिव औ** । २ । दिवः औ । दिवो वकारस्य औकारादेशो भवति सौ परे । इय स्वरे ( प्र० २ सू० १ ) द्यौः दिवौ दिवः॥ दिवम् ॥ **धामि** । ३ । दिवो वकारस्य धा आत्वं भवति अमि परे । द्याम् दिवौ दिव. । दिवा ॥ **उ रसे** । ४ । उ रसे । दिवो वकारस्य उकारादेशो भवति रसे पदान्ते च । द्युभ्याम् द्युभिः । दिवे द्युभ्याम् द्युभ्यः । दिवः । द्युषु । हेद्यौः हेदिवौ हेदिवः । रेफान्तश्चतुर्शब्दो बहुवचनान्त. ॥ **त्रिचतुरोः स्त्रियां तिसृचतसृवत्** । ५ । त्रिचतुरो. स्त्रियां तिसृचतसृ ऋतोरित्यव्ययम् । स्त्रियां वर्तमानयोस्त्रिचतुर्शब्दयोरित्तह चतसृ इत्येतावादेशौ भवतः । ऋकारश्च ऋवत् । ततः स्तुरार् ( प्र० ६ सू० ६८ ) इत्यारू भवति ऋ रम् ( प्र० २ सू० ७ ) तिस्रः तिस्र. तिसृभिः तिसृभ्यः तिसृभ्यः ॥ **तिसृचतसृशब्दयोर्नामि दीर्घत्वं न वक्तव्यम्** । ६ । छन्दसि वा दीर्घत्वम् । तिसृणां-तिसृणाम् । तिसृषु । चतस्र. चतस्रः चतसृभि. चतसृभ्य. चतसृभ्यः चतसृणाम्-चतसृणाम् चतसृषु । त्रियामिति त्रिचतुरोर्विशेषणात्स्त्रियां गौणयोर्नैतावादेशौ स्तः । प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः प्रियत्री प्रियत्रय. । बुद्धिवत् । यदा स्त्रियां पुरुषौ लिङ्गान्तरे गौणौ तदादेशौ स्त एव । प्रियास्तिस्रो यस्य सः प्रियतिसा । सेरा ( प्र०६ सू०६३ ) प्रियतिस्रौ प्रियतिस्रः । प्रियतिस्रम् प्रियतिस्रौ प्रियतिस्रः । प्रियतिस्रा प्रियतिसृभ्याम् प्रियतिसृभिः । प्रियतिसृषु । क्लीबे प्रियास्तिस्रो यस्य तत्प्रियतिसृ प्रियतिसृणी प्रियतिसृणि । एवं प्रियाश्चतस्रो यस्य सः प्रियचतसा प्रियचतस्रौ प्रियचतस्रः । क्लीबे । प्रियचतसृ प्रियचतसृणी प्रियचतसृणि । रेफान्तो गिर्शब्दः ॥ **र्व्योर्विहसे** । ७ । धातोरिकारोकारयोर्दीर्घो भवति रेफवकारयोर्हसपरयोः । गीः गिरौ गिरः । गिरम् गिरौ गिरः । गिरा गीर्भ्याम् गीर्भिः । हेगी. हेगिरौ हे-

गिरः। एवं पुरधुरादयः। धकारान्तः समिध्शब्दः।वाऽवसाने। (प्र० ९ सू०८) समित्-समिद् समिधौ समिधः। समिधम् समिधौ समिधः। समिधा समिद्भ्याम् समिद्भिः। खरि च ५ झसानाम् (प्र० ४ सू० १८) समित्सु। भकारान्तः। ककुभ्शब्दः। वाऽवसाने (प्र० ९ सू० ८) ककुप्- ककुब् ककुभौ ककुभः। ककुभम् ककुभौ ककुभः। ककुभा ककुब्भ्याम् ककुब्भिः। ककुप्सु।हेककुप्- हेककुब् हेककुभौ हेककुभः। दकारान्तास्त्यदादयः। त्यदादेष्टेरः स्यादौ (प्र० ६ सू० ५५) इति सर्वत्राकारः। आवतः स्त्रियाम् (प्र०७ सू०८) इति आप्। पकारः सिलोपार्थः। सवर्णे दीर्घत्वे कृते स्त्रीलिङ्गे सर्वशब्दवद्रूपं ज्ञेयम्॥ स्तः। ८। त्यदादेस्तकारस्य सौ परे सत्वं भवति। स्या। औ-री (प्र०७ सू०२१) अइए(प्र० १ सू० ११) त्ये त्याः।सा ते ताः। या ये याः। एषा एते एताः। एताम्-एनाम् एते-एने एताः-एनाः। एतया-एनया।एतयोः-एनयोः। का के काः। मकारान्त इदम्शब्दः॥ इयं स्त्रियाम्। ९। इदम्शब्दस्य स्त्रियामियं भवति सिसहितस्याइयम् इमे इमाः। इमाम् एनाम् इमे-एने इमाः-एनाः। अन टौसोः (प्र० ९ सू० ३९) टौसोरे (प्र० ७ सू०४) अनया-एनया आभ्याम् आभिः। इदम् ङे इति स्थिते। त्यदादेष्टेरः स्यादौ (प्र० ९ सू० ५५) दस्य मः (प्र० ९ सू० ३७) आवतः स्त्रियाम् (प्र० ७ सू० ८) ङि तां यट् (प्र० ७ सू० ५)यटोश्च (प्र० ७ सू० ९) स्म्यः (प्र० ९ सू० ३९) सवर्णे दीर्घः (प्र० २ सू० २०) अस्यै आभ्याम् आभ्यः। अस्याः आभ्याम् आभ्यः। अस्याः अनयोः- एनयोः आसाम्। आम्डोर्नित्यश्च (प्र० ६ सू० ६२) अस्याम् अनयोः-एनयोः आसु। चकारान्तस्त्वच्शब्दः। चोः कुः (प्र० ९ सू०५२) इति कुत्वम्। वाऽवसाने (प्र० ९ सू० ८) त्वक्-त्वग् त्वचौ त्वचः। त्वचम् त्वचौ त्वचः। त्वचा त्वग्भ्याम् त्वग्भिः। चोः कुः (५२) निमित्तात् (प्र० ६ सू० २१) कपसंयोगे क्षः (प्र० ९ सू १०) त्वक्षु। हेत्वक्-हेत्वग् हेत्वचौ हेत्वचः। एवम् ऋक्शुवाच्प्रभृतयः। पकारान्तोऽप्शब्दो नित्यं बहुवचनान्तः स्त्रीलिङ्गः। न्सम्महतां धौ दीर्घः शौ च (प्र०९ सू० ६२) आपः।अपः॥ भिद्पाम्। १०। भि द् अपाम्। अबादीनां भकारे परे दत्वं भवति।अद्भिः अद्भ्यः अद्भ्यः अपाम् अप्सु हे आपः।अबादीनामित्यादिग्रहण गौणत्वेऽपि दत्वार्थम्। अप्शब्दस्य पक्षसु यद्रूपं तत् स्वप्शब्दस्यरूपम्। अबादीनामित्यत्र अपः पाठे अप्शब्दस्यैव वक्तव्ये अपामित्यत्र बहुवचनात् अप् स्वप् बह्वप् एते ग्राह्याः। स्वाम्पि तडागानि बह्वाम्पि तडागानि। शोभना आपो यस्मिन् प्रदेशे स्वाप् स्वापौ स्वापः। हेस्वप् इत्यादि। शकारान्तो दिश्शब्दः॥ दिशाम्। ११। दिश् निश् स्पृश् इत्यादीनां रसे पदान्ते च कुत्वं भवति। दिश् निश् दृश् स्पृश् मृश् स्रज् ऋत्विज् दधृष् दृक्ष् उष्णिह् अञ्च् युज् क्रुञ्च् एते दिशामिति बहुवचनेन गृह्यन्ते। वाऽवसाने (सू० ८) दिक्-दिग् दिशौ दिशः। दिशम् दिशौ दिशः। दिशा दिग्भ्याम् दिग्भिः। दिशे। कुत्वम्। निमित्तात् (सू

२१ ) दिशु । हेदिक्–हेदिग् । दृक्–दृग् दृशौ दृश । स्पृक्–स्पृग् स्पृशौ स्पृश । स्रक्–स्रग् स्रजौ स्रज । ऋत्विक्–ऋत्विग् ऋत्विजौ ऋत्विज । दध्रक्–दध्रग् दध्रक्षौ दध्रक्ष । दधृक्–दधृग् दधृक्षौ दधृक्ष । उष्णिक्–उष्णिग् उष्णिहौ उष्णिह । षकारान्तस्त्विष्शब्द । षो ड (प्र० ९ सू० ४४) वाऽवसाने (प्र० ९ सू० ८) त्विट् त्विड् त्विषौ त्विष । त्विषम् त्विषौ त्विष । त्विषा त्विड्भ्याम् त्विड्भि । त्विट्सु त्विट्त्सु । हेत्विट्–हेत्विड् हेत्विषौ हेत्विष ॥ **सजुषाशिषो रसे पदान्ते च दीर्घो वक्तव्य** । १२ । सजू सजुषौ सजुष । आशी आशिषौ आशिष । आशिषम् आशिषौ आशिष । आशिषा आशीर्भ्याम् आशीर्भि इत्यादि । आशी षु–आशीष्षु । हेआशी हे आशिषौ हेआशिष । स्त्रीलिङ्गत्यदस शब्दस्य सौ न विशेष । असौ । द्विवचनादौ त्यदादेष्ट ( प्र० ६ सू० ५५ ) अत्व कृतेऽनन्तरम् आवत स्त्रियाम् ( प्र० ७ सू० ८ ) इत्याप् । समान दीर्घ सह ( प्र० २ सू० २० ) विभक्तिकार्यं प्राक् पश्चात्सादू ( प्र० ९ सू० ७७ ) अमू अमू । अमूम् अमू अमू । अमुया अमूभ्याम् अमूभि । अमुष्यै अमूभ्याम् अमूभ्य । अमुष्या अमूभ्याम् अमूभ्य । अमुष्या अमुयो अमूषाम् । अमुष्याम् अमुयो अमूषु ॥ इति हसान्तस्त्रीलिङ्गप्रक्रिया ॥ १० ॥

---

अथ हसान्ता नपुंसकलिङ्गा प्रदर्श्यन्ते ॥ तत्र रेफान्तो वार्शब्द । नपुंसकात्स्यमोर्लुक् ( प्र० ८ सू० १० ) रेफस्य विसर्ग । वा । ईमौ ( प्र० ८ सू० २ ) वारी । अयम् इति निषेधाण्णत्वं भवति । जस्शसो शि । ( प्र० ८ सू० ३ ) वारि । पुनरपि वा वारी वारि । वारा वार्भ्याम् वार्भि । वार्षु । वार्षु इत्यत्र न विसर्ग दोषामिति सूत्रेण कृतस्यैव रेफस्य सप्तमीबहुवचने परे विसर्गो नास्त्येति वक्तव्यात् । हेवा हेवारी हेवारि । चतुर्शब्दस्य चतुराम् शौ च ( प्र० ९ सू० १६ ) इत्याम् । चत्वारि चत्वारि चतुर्भि चतुर्भ्य चतुर्भ्य । र सङ्ख्याया ( प्र० ९ सू० १७ ) चतुर्णाम् चतुर्षु । नकारान्तोऽहन्शब्द ॥ **अह्न स** । १ । अहन्शब्दस्य नकारस्य सकारो भवति रसे पदान्ते च । नपुंसकात्स्यमोर्लुक् ( प्र० ८ सू० १० ) सोर्विसर्ग ( प्र० ६ सू० ४ ) अह । ईमौ ( प्र० ८ सू० २ ) वेडयो । ( प्र० ८ सू० १४ ) अह्नी–अहनी । नोपधाया ( प्र० ८ सू० ७ ) अहानि । पुनरपि अह अह्नी अहनी अहानि । अल्लोप स्वरे ( प्र० ८ सू० १३ ) अकारलोप । अह्ना । अह्न स ( प्र० ११ सू० १ ) सोर्विसर्ग ( ० ) हवे ( प्र० ५ सू० ७ ) उ ओ ( प्र० २ सू० १३ ) अहोभ्याम् अहोभि । अह्ने अहोभ्याम् अहोभ्य । वेडयो ( १४ ) अह्नि–अहनि । अह्न स ( १ ) सोर्विसर्ग ( ४ ) अहस्सु अह सु । हे अह हेअह्नी–हेअहनी हेअहानि । ब्रह्मन्शब्दस्य रसे पदान्ते च नलोप । नपुंसकात्स्यमोर्लुक् ( प्र० ८ सू० १० ) नाम्नो नो लोपशधौ ( प्र० ९ सू० २० ) ब्रह्म । ईमौ ( २ ) ब्रह्मणी । जस्शसो शि ( ३ ) नोपधाया ( ७ ) ब्रह्माणि । पुनरपि ब्रह्म ब्रह्मणी ब्रह्माणि । ब्रह्मणा । नाम्नो नो लोपशधौ

( २० ) ब्रह्मभ्याम् ब्रह्मभि । ब्रह्मणेब्रह्मभ्याम् ब्रह्मभ्यः । ब्रह्मसु इत्यादि ॥ **संबोधने नपुसकानां नलोपो वा वक्तव्य ।२।** हेब्रह्म हेब्रह्मन् हेब्रह्मणी हेब्रह्माणि । एव चर्मन्वर्मन्कर्मन्प्रभृतय । चर्म चर्मणी चर्माणि पुनरपि । वर्म वर्मणी वर्माणि पुनरपि । एव व्योमन्शब्द । व्योम । ईमौ (प्र० ८ सू० २) वेडयो. (प्र० ८ सू० १४) व्योम्नी-व्योमनी व्योमानि । पुनरपि ॥ **नान्ताद्दन्ताच्छन्दसिङिश्योर्वा लोपो वक्तव्यः ॥ ३ ॥ छन्दस्यागमजानागमजयोर्लोपालोपौ च वक्तव्यौ ।४।** परमे व्योमन् । सर्वभूतानि । सर्वा इत्यत्र शिलोपे कृते नलोप. । दीर्घत्व नातिवर्तते । निमित्ताभावे नैमित्तिकस्याप्यभाव इत्येतस्यानित्यत्वभावित्वात् । त्यदादीनां स्यमोर्लुकि कृते टेरत्व न भवति। यस्मात्। स्यादाविति विशेषणात्। लुकि न तन्निमित्त (प्र० ६ सू० ५८) नपुसकात्स्यमोर्लुक् (प्र० ८ सू० १०) वावसाने (प्र० ९ सू० ८) त्यत् त्यद् । त्यदादेष्टेर. स्यादौ (प्र० ६ सू० ५५) इति सर्वत्राकारः । ईमौ (२) त्ये । जस्शसो शिः (प्र० ८ सू० ५) नोपधायाः (प्र० ८ सू०७) त्यानि । पुनरपि । शेष सर्वत्र ।तत्-तद् ते तानि । पुनरपि । यत्-यद् ये यानि । पुनरपि। एतत्-एतद् एते एतानि । पुनरपि ॥ **इदमेतदोर्द्वितीयैकवचने नपुसके एनद्वा वाच्यः ।५।** एतत्-एतद् एनत्-एनद् एते-एने एतानि-एनानि।एतेन-एनेन इत्यादि। किम् के कानि । पुनरपि ।इदम् इमे इमानि पुनरपि इदम् एनत् । एनद् इमे एने इमानि-एनानि । अनेन-एनेन इत्यादि । नपुसकात्स्यमोर्लुक् (१०)चोःकुः (प्र० ९ सू० ५३) वावसाने (८) प्रत्यक्-प्रत्यग् । ईमौ (२) अच्चेदीर्घश्च (प्र० ९ सू० ५४) प्रतीची । जस्शसो. शि. (५) नुमयम (प्र० ९ सू० ५) स्तो. श्चुभि. श्चुः (प्र० ४ सू० ६) प्रत्यञ्चि पुनरपि । शेष पूर्ववत्। तकारान्तो जगच्छब्द. । वावसाने (८) जगत्-जगद् । ईमौ (२) जगती । नुमयम (प्र० सू० ५) नश्चापदान्ते झसे (प्र० ४ सू० २४) जगन्ति । पुनरपि । महत् महद् महती । न्सम्महतो० (प्र० ९ सू० ६२) नश्चापदान्ते झसे (२४) महान्ति । पुनरपि । सकारान्ताः पयस्वचस्यशस्तेजस्प्रभृतय. । पय. पयसी । न्सम्महतो० (६२) पयांसि । पुनरपि । वच. वचसी वचांसि । पुनरपि । यशः यशसी यशांसि । पुनरपि । तेज तेजसी तेजांसि। इत्यादि । अदस्शब्दस्य स्यमोर्लुकि कृते स्तोर्विसर्ग. (प्र०६सू० ४) अद. । द्विवचनादौ टेरत्वे कृते मत्वेत्वे कृते । अमू । त्यदादेष्टेर स्यादौ (प्र० ६सू० ५५) दस्य म. (प्र० ९ सू० ७५) जस्शसो शि. (प्र० ८ सू० ३) नुमयम (५) नोपधाया (प्र० ८ सू० ७) मादू (प्र० ९ सू० ७६) अमूनि । पुनरपि । अमुना । अद्भि (प्र० ६ सू० ११) मादू (७६) अमूभ्याम् एस्भि (प्र० ६ सू० १५) एरी बहुत्वे (प्र० ९ सू० ७७) अमीभि । सर्वादे स्मट् (प्र० ६ सू० २८) एऐ ऐ (प्र० २ सू० १२) मादू (७६) अमुष्मै अमूभ्याम् अमीभ्य । ङसिरत् (प्र० ६ सू० १६) अत (प्र० ६ सू० २९) सवर्णे दीर्घ सह (प्र० २ सू० २०)

मादू ( ७६ ) अमुष्मात् अमूभ्याम् अमीभ्य । ङस्य ( प्र० ६ सू० १७ ) मादू ( ७६ ) अमुष्य। ओसि ( प्र० ६ सू० १८ ) एअय् ( प्र० २ सू० ९ ) अमुयो । सुडाम ( प्र० ६ सू० ३० ) एस्भि बहुत्वे ( १५ ) अमीषाम् । ङि स्मिद् ( प्र० ६ सू० ३१ )अमुष्मिन् अमुयो । एस्भि बहुत्वे ( १५ ) किलात् ( प्र०६ सू० २१ ) अमीषु ॥ ॥ इति हसान्तनपुंसकलिङ्गप्रक्रिया ॥ ११ ॥

---

अथ युष्मदस्मदो स्वरूप निरूप्यते ॥ ॥ तयोश्च वाच्यलिङ्गत्वात्त्रिष्वपि लिङ्गेषु समान रूपम् । अव्ययान्यलिङ्गानि । अलिङ्गे युष्मदस्मदी ॥ **त्वमह सिना** । १ । सिसहितयोर्युष्मदस्मदास्त्वमहमित्येतावादेशौ भवतो यथासङ्ख्येन । त्वम् । अहम् ॥ **युवावौ द्विवचने** । २ । युष्मदस्मदोर्द्विवचने परे युव आव इत्येतावादेशौ भवत ॥ **आमौ** । ३ । युष्मदस्मदो पर औ आम् भवति । सवर्णे दीर्घ सह ( प्र० २ सू० २० ) युवाम् आवाम् ॥ **यूय वय जसा** । ४ । जसा सहितयोर्युष्मदस्मदोर्यूय वयमित्येतावादेशौ भवत । यूयम् वयम् ॥ **त्वन्मदेकत्वे युष्मदस्मदो** । ५ । त्व मदित्येतावादेशौ भवत एकत्वे गम्यमाने ॥ **आम्स्भौ** । ६ । आ अम्स्भौ । युष्मदस्मदोष्टेरात्व भवति अमि सनारे भिसि च परे । अमृशसोरस्य ( प्र० ६ सू० ६ ) त्वाम् माम् । युवाम् आवाम् । त्यदोदेष्टे ( प्र० ६ सू० ५५ ) इत्यत्र कृते शसि दीर्घत्वम् ॥ **शसो नो वक्तव्य** । ७ । युष्मान् अस्मान् । त्व मदेकत्वे ( प्र० १२ सू० ५) **ए टाड्यो** । ८ । युष्मदस्मदोष्टेरेत्व भवति टा ङि इत्येतयो परयो । ए अय् ( प्र० २ सू० ९ ) त्वया मया । युवावौ द्विवचने ( २ ) अद्भि ( प्र० ६ सू० ११ ) युवाभ्याम् आवाभ्याम् । आम्स्भौ ( ६ ) युष्माभि अस्माभि ॥ **तुभ्य मह्य ङया** । ९ । ङया सहितयोर्युष्मदस्मदोस्तुभ्य मह्य इत्येतावादेशौ भवत । तुभ्यम् मह्यम् । युवाभ्याम् आवाभ्याम् ॥ **भ्यसृभ्यम्** । १० । युष्मदस्मदो परा भ्यस् ऽभ्य भवति । शकारो भकारादेशव्यावृत्त्यर्थ । तेनात्वैत्वे न भवत । त्यदोदेष्टे (५५) युष्मभ्यम् अस्मभ्यम् ॥ **ङसिभ्यसो श्तु** । ११। पञ्चम्या ङसिभ्यसो श्तुर्भवति । शकार सर्वादेशार्थ । उकार उच्चारणार्थ । त्वत् मत् । युवाभ्याम् आवाभ्याम् । त्यदादेष्टे ( प्र० ६ सू० ५५ ) युष्मत् अस्मत् ॥ **तव मम ङसा** । १२ । ङसा सहितयोर्युष्मदस्मदोस्तव मम इत्येतावादेशौ भवत । तव मम। युवावौ द्विवचने (प्र० १२ सू० २ ) ओसि ( प्र० ६ सू० १८) ए अय् ( प्र० २ सू० ९ ) युवयो आवयो ॥ **सामाकम्** । १३ । युष्मदस्मदो पर साम आकम् भवति । त्यदादेष्टे ( ५५ ) युष्माकम् अस्माकम् । त्वमदेकत्वे ( प्र० १२ सू० ५ ) ए टाड्यो (प्र० १२ सू० ८ ) एअय् ( ९ ) त्वयि मयि । युवयो आवयो । आम्स्भौ ( प्र० १२ सू० ६ ) युष्मासु अस्मासु । प्रधानयोर्गौणत्वे रूपविशेषो निरूप्यते । यदा एकत्वे द्वित्वे च युष्मदस्मदी

समासार्थस्तु अन्यसंख्यस्तदा त्वन्मदौ युवावौ च भवतः । वैपरीत्ये तु न स्तः । सिजस्ङेङस्सु परेषु ये आदेशास्ते सदा भवेयु । तथा चोक्तं पाणिनीये ॥

समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी ॥
समासार्थोऽन्यसंख्यश्चेद्युवावौ त्वन्मदावपि ॥ ३९ ॥

सिजस्ङेङस्सु परत आदेशाः स्युः सदैव ते ॥
त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥ ४० ॥

एते परत्वाद्बाधन्ते युवावौ विषये स्वके ॥
त्वन्मदावपि बाधन्ते पूर्वविप्रतिषेधतः ॥ ४१ ॥

द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी ॥
तयोर्द्व्येकतार्थत्वान्न युवावौ त्वमावपि ॥ ४२ ॥

समासश्चान्वये नाम्नाम् ( प० १६ सू० १ ) इति समाससंज्ञायाम् । अत्यादयः क्रान्ताद्यर्थे द्वितीयया । क्रान्ताद्यर्थे अत्यादयो द्वितीयया सह समस्यन्ते स द्वितीयातत्पुरुष समासो भवतीति तत्पुरुषः समासः । त्वां मां वा अतिक्रान्त इति विग्रहे । अतित्वम् अत्यहम् । अतित्वाम् अतिमाम् । अतियूयम् अतिवयम् । अतित्वाम् अतिमाम् । अतित्वाम् अतिमाम् । अतित्वान् अतिमान् । अतित्वया अतिमया । अतित्वाभ्याम् अतिमाभ्याम् । अतित्वाभिः अतिमाभिः । अतितुभ्यम् अतिमह्यम् । अतित्वाभ्याम् अतिमाभ्याम् । अतित्वभ्यम् अतिमभ्यम् । अतित्वत् अतिमत् । अतित्वाभ्याम् अतिमाभ्याम् । अतित्वत् अतिमत् । अतितव अतिमम । अतित्वयोः अतिमयोः । अतित्वाकम् अतिमाकम् । आमि ङेरेत्वं केचिदिच्छन्ति । अतित्वयाम् अतिमयाम् । अतित्वयि । अतिमयि । अतित्वयोः अतिमयोः । अतित्वासु अतिमासु । युवाम् आवां वा अतिक्रान्त इति विग्रहे । अत्र सिजस्ङेङस्सु प्रागवत् । औअमौट्सु तुल्यम् । अतित्वम् अत्यहम् । अतियुवाम् अत्यावाम् । अतियूयम् अतिवयम् । अतियुवाम् अत्यावाम् । अतियुवाम् अत्यावाम् । अतियुवान् अत्यावान् । अतियुवया अत्यावया । अतियुवाभ्याम् अत्यावाभ्याम् । अतियुवाभिः अत्यावाभिः । अतितुभ्यम् अतिमह्यम् । अतियुवाभ्याम् अत्यावाभ्याम् । अतियुवभ्यम् अत्यावभ्यम् । अतियुवत् अत्यावत् । अतियुवाभ्याम् अत्यावाभ्याम् । अतियुवत् अत्यावत् । अतितव अतिमम । अतियुवयोः अत्यावयोः । अतियुवाकम् अत्यावाकम् । अतियुवयाम् अत्यावयाम् । इति केचित् । अतियुवयि अत्यावयि । अतियुवयोः अत्यावयोः । अतियुवासु अत्यावासु । युष्मान् अस्मान् वा अतिक्रान्त इति विग्रहे । अतित्वम् अत्यहम् । अतियुष्माम् अत्यस्माम् । अतियूयम् अतिवयम् । अतियुष्माम् अत्यस्माम् । अतियुष्माम् अत्यस्माम् । अतियुष्मान् अत्यस्मान् । अतियुष्मया अत्यस्मया । अतियुष्माभ्याम् अत्यस्माभ्याम् । अतियुष्माभिः अत्यस्माभिः । अतितुभ्यम् अतिमह्यम् । अतियुष्माभ्याम् अत्यस-

स्माभ्याम् । अतियुष्मभ्यम् अत्यस्मभ्यम् । अतियुष्मत् अत्यस्मत् । अतियुष्माभ्याम् अत्यस्माभ्याम् । अतियुष्मत् अत्यस्मत् । अतितव अतिमम । अतियुष्मयो अत्यस्मयो । अतियुष्माकम् अत्यस्माकम् । अतियुष्मयाम् अत्यस्मयाम् । इति केचित् । अतियुष्मयि अत्यस्मयि । अतियुष्मयो अत्यस्मयो । अतियुष्मासु अत्यस्मासु । अनेनैव प्रकारेण सर्वमुन्नेयम् ॥ इति युष्मदस्मत्स्वरूपप्रक्रिया ॥ १२ ॥

---

अथानयोरादेशविशेषविधिर्निरूप्यते ॥ ॥ **युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमे वांनौ वस्नसौ । १ ।** युष्मदस्मदोर्यथासंख्येनामी आदेशाः स्युः । कीदृशयोः षष्ठीचतुर्थीद्वितीयासहितयोः । सहितग्रहणात्तुनयोः पुत्र युष्मत्पुत्र । आवयोः पुत्र अस्मत्पुत्र इत्यादौ विभक्तिलोपे कृते आदेशा नेति ज्ञेयम् । तत्रैकवचनेन सह तेमे भवतः । द्विवचनेन वां नौ बहुवचनेन वस्नसौ ॥

**स्वामी ते स समायातः स्वामी मे सांप्रतं गतः ॥**
**नमस्ते भगवन् ! भूयो देहि मे मोक्षमव्ययम् ॥ ४३ ॥**
**स्वामी वां स जहातोर्ध्वदंष्ट्रो नौ दानयाचनाम् ॥**
**राजा वां दास्यते दानं ज्ञानं नौ मधुसूदनः ॥ ४४ ॥**
**देवो वामवताद्विष्णुर्नरकान्नौ जनार्दनः ॥**
**स्वामी वो बलवान् राजा स्वामी नोऽसौ जनार्दनः ॥ ४५ ॥**
**नमो वो ब्रह्मविद्भ्यो ज्ञानं नो दीयतां धनम् ॥**
**सानन्दान्वः प्रपश्याम पश्यामो नः सुदुःखिनः ॥ ४६ ॥**

**त्वा मामा । २ ।** अमा सहितयोर्युष्मदस्मदोस्त्वा मा इत्येतावादेशौ भवतः ॥

**पश्यामि त्वा मदालीढं पश्य मा मद्भेदकम् ॥**
**पश्यामि त्वा जगत्पूज्यं पश्य मा जगतां पतिम् ॥ ४७ ॥**

**नादौ । ३ ।** पादादौ वर्तमानयोर्युष्मदस्मदोर्नैते आदेशा भवन्ति ॥

**मम स्वामी भवेत्कृष्णस्तव स्वामी महेश्वरः ॥**
**तव मित्राणि यानि स्युर्मम मित्राणि तान्यपि ॥ ४८ ॥**
**तव ये शत्रवो राजन् ! मम तेऽप्यतिशत्रवः ॥**
**संबोधनपदादग्रे न भवन्ति वसादयः ॥ ४९ ॥**

अग्ने तव । देवास्मान्पाहि ॥ **पदात्परयोरनयोरेते आदेशा वक्तव्याः । ४ ।** त्वां पातु । मां पातु ॥ **एते आदेशा अन्वादेशे नित्यमनन्वादेशे वा वक्तव्याः । ५ ।**

**यस्त्वं विश्वस्य जनकस्तस्मै ते विष्णवे नमः ॥**
अनन्वादेशे तु त्वं मे मम वा देवोऽसि ॥ **विद्यमानपूर्वात्प्रथमान्तात्पर-**

**येरनयोरन्वादेशेऽप्येते आदेशा वा वक्तव्याः । ६ ।**

**भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम् ॥ ५० ॥**

**अचाक्षुषज्ञानार्थधातूनां योगे नैते आदेशा वक्तव्याः । ७ ।** चेतसा त्वामीक्षते ध्यायति स्मरतीति वा । चाक्षुषज्ञानार्थधातुयोगे तु भक्तस्त्वा पश्यति । चक्षुषा युक्तायुक्तेऽपि निषेधः । भक्तस्त्वद्रूपं ध्यायति । ध्यायते रूपेण सह सम्बन्धाद्ध्यानेन युक्तं रूपं तद्रूपेण युक्तस्य तवेत्यस्य युक्तायुक्तत्वात् ॥

**संबोधनपदादग्रे न भवन्ति वसादयः ॥**

**विशेष्यपूर्वं संबोधनेतरपूर्वं संबोधनं हित्वा अन्यस्मात्संबोधनात्परयोर्नैते आदेशा भवन्ति । ८ ।** इति केचित् ॥

**देवास्मान्पाहि नृहरे! विष्णोऽस्मान्पाहि सर्वतः ॥ ५१ ॥**

विशेष्यपूर्वात् । हरे कृपालो नः पाहि । संबोधनेतरपूर्वात् । सर्वदा रक्ष देव नः ॥ **चादिभिश्च । ९ ।** चादिभिरपि योगे नैते आदेशा भवन्ति ॥

**युवयोरावयोश्चेशो हरिर्मामेव रक्षतु ॥**
**तुभ्यं मह्यं च देवेशो दद्याच्छं तुभ्यमेव च ॥ ५२ ॥**

च वा ह अह एव । आदिशब्देनैते पञ्चैव गृह्यन्ते नान्ये । नचवाहाहैवयुक्ते इति पाणिनीयवचनात् । सक्षाद्योगेऽस्य निषेधः । न पुनर्युक्ते शिवो हरिश्च मे स्वामीत्यादौ इति आदेशविशेषप्रक्रिया ॥ १३ ॥

---

**चादिर्निपातः । १० ।** च वा ह अह एव एवं नूनम् पृथक् विना नाना स्वस्ति अस्ति दोषा मृषा मिथ्या मिथस् अथ अथो हम् श्वस् उच्चैस् नीचैस् स्वर् अन्तर् प्रातर् पुनर् भूयस् आहो स्वित् सह नमस् ऋते अन्तरेण अन्तरा अलम् हतम् । असमानोनाः प्रतिषेधे । ईषत् किल खलु वै आरात् दूरात् भृश यत् तत् । स्वराश्च । इत्येवमादिर्गणो निपातसंज्ञो भवति । द्रव्यवचनो नेति ज्ञेयम् ॥ **तत्रादिर्विभक्त्यर्थे निपात्यते । ११ ।** तस्मिन्निति तत्र । यस्मिन्निति यत्र । कस्मिन्निति कुत्र कुह क्व । अस्मिन्निति अत्र । तस्मिन्काले तदा । यस्मिन्काले यदा । कस्मिन्काले कदा । अन्यस्मिन्काले अन्यदा । सर्वस्मिन्काले सर्वदा । तेन प्रकारेण तथा । येन प्रकारेण यथा । केन प्रकारेण कथम् । अनेन प्रकारेण इत्थम् । सर्वथा उभयथा अन्यथा अन्यतरथा इतरथा । तस्मादिति ततः । यस्मादिति यतः । अस्मादिति अतः । कुतः अमुतः युष्मत्तः अस्मत्तः भवत्तः । सार्वविभक्तिकस्तस् इत्येके । पूर्वतः सर्वतः पूर्वस्मिन्निति पुरस्तात् । अधरस्मिन्नित्यधस्तात् । परस्मिन्निति परेण–परस्तात् ॥ **आहिश्च दूरे । १२ ।** दूरेऽर्थे वाच्ये सति आहिच् प्रत्ययो भवति । दक्षिणस्यां दिशि दूरे इति दक्षिणाहि वसन्ति

चाण्डालाः । चकारादाच् । दक्षिणा ॥ **किमः सामान्ये चिदादिः । १३ ।** सर्वविभक्त्यन्तात्किंशब्दात्सामान्येऽर्थे चित् चन च इत्येते प्रत्यया भवन्ति । कश्चित् कश्चन कचित् कचन ॥ **तदधीनकार्त्स्न्ययोर्वासात् । १४ ।** तदधीनार्थे कार्त्स्न्यार्थे वा सात्प्रत्ययो भवति । राज्ञोऽधीनं राजसात् । सर्वं भस्म इति भस्मसात् । अग्नेः अधीनमित्यग्निसात् । सात्प्रत्ययस्य षत्वं नेच्छन्ति ॥ **ऊर्युररीस्वीकरणे ।१५।** ऊरीकृत्य उररीकृत्य ॥ **सद्यादिः काले निपात्यते ।१६।** सद्य अद्य सपदि अधुना इदानीम् सम्प्रति साम्प्रतम् पूर्वेद्युः परेद्युः आशु शीघ्रम् झटिति तूर्णम् अपरेद्युः यर्हि तर्हि जोषम् मौनम् अन्येद्युः ॥ **प्रादिरुपसर्गः । १७ ।** प्र परा अप अनु सम् अव निर् निस् दुर् दुस् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप अव् अन्तर् आविर् । अयं गण उपसर्गसंज्ञकः ॥ **प्राग्धातोः । १८ ।** उपसर्गाः प्राग्धातोः प्रयोक्तव्याः ॥ **तदव्ययम् । १९ ।** तदिदं प्रादिचादिशब्दरूपमव्ययसंज्ञं भवति ॥ **क्त्वाद्यन्तं च । २० ।** क्त्वाद्यन्तं शब्दरूपमव्ययसंज्ञं भवति । क्त्वा च्वि ल्यप् तुम् णम् डाच् वतु आम् था त्यप् शस् सु इत्यादि । कृत्वा गत्वा भूत्वा इत्यादि । प्रणम्य कर्तुं गातुं द्रुत्या-करोति घटवत् कुतस्तराम् ॥ **अव्ययाद्विभक्तेर्लुक् । २१ ।** अव्ययात्परस्या विभक्तेर्लुक् भवति । आपश्चेति वक्तव्यम् ॥ **न शब्दनिर्देशे ।२२।** अव्ययानां शब्दत्वेन रूपनिर्देशे सति विभक्तेर्लुग्भवति । अव्ययानां न च लिङ्गादिनियमः । तदुक्तं च ॥

> सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ॥
> वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ ५३ ॥

उक्तान्यलिङ्गान्यव्ययानि ॥ १४ ॥

---

अधुना लिङ्गविशेषविविक्षापयिषया स्त्रीप्रत्ययाः प्रस्तूयन्ते ॥ आबतः स्त्रियाम् ( प्र० ७ सू० ८) जाया माया श्रद्धा मेधा धारा इत्यादि ॥ **अजादेश्चाप् च-स्त्रकत्वः । १ ।**

> अजाश्वाकोकिलाबालावत्सादौ त्रिफलादिके ॥
> ईबादेरपवादार्थमजादेर्ग्रहणं पृथक् ॥ ५४ ॥

अजादेश्चेति चकारग्रहणाच्छूद्रा कन्यकेत्यादौ प्रथमवयोवाचकत्वेन जातिवाचकत्वेन च ईप् प्राप्तः सोऽजादित्वान्न भवतीति सूचितम् । अजा एडका कोकिला बाला शूद्रा गणिका इत्यादि ॥ **काप्यतः । २ ।** कापि इ अतः । स्त्रियां कापि परे पूर्वस्याकारस्य इकारो भवति कन्यकादौ न भवति । करोतीति कारिका । पचतीति पाचिका । पठतीति पाठिका ॥

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ॥
आपं चैव हलन्तानां यथा वाचा निशा दिशा । ५५ ।

अवगाह्य वगाह्य । अपिहितम् पिहितम् । अपिधानम् पिधानम् ॥ **ह्रस्वो वा स्त्रियाम्** । ३ । कापि परे तरादौ च पूर्वस्य ह्रस्वो वा भवति । ततमरूपकल्पास्तरादयः । वेण्येव वेणिका वेणीका । नद्येव नदिका नदीका । अतिशयेन प्रशस्या इति श्रेयसी । अतिशयेन श्रेयसी इति श्रेयसितरा श्रेयसीतरा ॥ **तरतः पूर्वस्य पुंवत्** । ४ । श्रेयस्तरा । विदुषितरा-विदुषीतरा-विद्वत्तरा । भवतितरा-भवतीतरा-भवत्तरा । सतितरा-सतीतरा-सत्तरा । नौकादौ न भवति ॥ **आबन्तस्यानाबन्तस्यापि कप्रत्यये परे बहुव्रीहौ वा** ।५। बहुमालकः-बहुमालाकः । सुसोमपाकः-सुसोमपकः । यामहृगादेरेव विवक्षा । निश्चीय पतत्वनेकेष्वर्थेष्विति निपाताः । निपातानामनेकार्थत्वात् । उक्तं हि ॥

निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः ॥
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥ ५६ ॥

**न्रण ईप्** । ६ । नकारान्तादृकारान्तादण्णन्ताच्च स्त्रियामीप् प्रत्ययो भवति । दण्डिनी कारिणी मालिनी । ईपि राज्ञो अल्लोपो वक्तव्यः । राज्ञी । श्वादे. ( प्र० १ सू० २२ ) शुनी पत्री हर्त्री औपगवी ॥ **यस्य लोपः** । ७ । इश्च अश्च यः तस्य लोपो भवति स्वरे यकारे च परे । विभक्तिस्वरं प्रत्ययं च वर्जयित्वान्यस्मिन्स्वरे यकारे च परे इति ज्ञेयम् । तेन देवी वातायुः कर्णायुः इत्यत्र न भवति । समासतद्धितप्रत्ययेष्वयं विधिर्वेदितव्यः ॥ **स्वस्रादीनामृकारान्तानां संख्यावाचिनां च नेप् वक्तव्यः** । ८ ।

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ॥
याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥ ५७ ॥

स्वसा दुहिता सीमा पञ्चेत्यादि ॥ **पादन्तात्स्त्रियामीप् वा वक्तव्यः** । ९ । द्विपदी-द्विपात् ॥ **ऋचि पादन्ताट्टाबेव वक्तव्यो न ईप्** ।१०। पादः पद् ( प्र० १ सू० ४९ ) द्विपदा ऋक् ॥ **अन्नन्ताद्बहुव्रीहेर्डाप् वा वाच्यः** । ११ । बहुसीमा बहुसीमे बहुसीमाः । पक्षे बहुसीमा बहुसीमानौ बहुसीमानः । बहुयज्वा बहुयज्वे बहुयज्वाः । पक्षे बहुयज्वा बहुयज्वानौ बहुयज्वानः ॥ **उपधालोपिनोऽन्नन्ताद्बहुव्रीहेरीप् वा** । १२ । बहुराज्ञी बहुराज्यौ । पक्षे डाप् । बहुराजा बहुराजे डापोऽप्यभावे बहुराजा बहुराजानौ ॥ **संख्यादेर्दाम्न ईप्** । १३ । द्विदाम्नी ॥ **ष्टितः** । १४ । षकारटकारउकारऋकारानुबन्धाच्च स्त्रियामीप्प्रत्ययो भवति । षु च टु च उश्च ऋश्च एषां समाहारः ष्टि । ष्टि इत् यस्येति ष्टित् । तस्मात् ष्टितः । षु यावी । ट् कुरुची । उ गोमती । ऋ पचन्ती । पठन्ती ॥ **धातोरुदितो न** । १५ । पर्णध्वत् उखास्रत् ॥ **अप्ययोर्यादिरप्यम्** । १६ । अप्रत्ययप्रत्ययसंबन्धिनोऽकारात्परस्य नदुर्नित्यं नुमागमो भवति

ईकारे ईपि च परे । अः पचन्ती पठन्ती दीव्यन्ती ॥ **वादीपोः शतुः । १७ ।** अवर्णात्परस्य शतुर्वा नुमागमो भवति ईकारे ईपि च परे । नुदती नुदन्ती ॥ **नदादेः । १८ ।** नदादेर्गणात्स्त्रियामीप्प्रत्ययो भवति । नदी गौरी गौतमी । नदादिराकृतिगणः । तेन चतुर्थी पञ्चमी द्वादशी पौर्णमासी इत्यादि ॥ **ईप्यनडुहो वाम् वक्तव्यः । १९ ।** अनड्वाही-अनडुही ॥ **हायनाद्वयसि च । २० ।** द्विहायनी । चतुर्हायणी ॥ **पुरुषाद्वा परिमाणे । २१ ।** द्विपुरुषी-द्विपुरुषा वा परिखा ॥**इन्द्रादेरानीप्च । २२ ।** इन्द्रादेर्गणात्स्त्रियामानीप्प्रत्ययो भवति । इन्द्रादेरित्यादिशब्दादिन्द्र-ब्रह्मन्-रुद्र-भव-शर्व-मृड-वरुणादयः । इन्द्राणी ॥ **ब्रह्मन्शब्दस्य नलोपो वाच्यः । २३ ।** ब्रह्माणी । रुद्राणी।मृडानी।वरुणानी। चकारान्मातुलाचार्यसूर्योपाध्यायार्यक्षत्रियेभ्यो वा ॥ **अर्यक्षत्रियाभ्यां वा स्वार्थे । २४ ।** अर्याणी-अर्या ॥ **हिमारण्ययोर्महत्त्वे । २५ ।** महद्धिमं हिमानी। महदरण्यमरण्यानी ॥ **यवाद्दोषे । २६ ।** दुष्टो यवो यवानी ॥ **यवनाल्लिप्याम् । २७ ।** यवनानां लिपिर्यवनानी ॥ **ईप्समाहारे गुणश्च । २८ ।** त्रयाणां समाहारः त्रयी ॥ **पुंयोगे च । २९ ।** पुंयोगे च स्त्रियामीप्प्रत्ययो भवति । शूद्रस्य भार्या शूद्री । गणकी ॥ **गोपालिकादीनां न । ३० ।** गोपालिका पशुपालिका ॥ **सूर्याद्देवतायां चाप् । ३१ ।** सूर्यस्य स्त्री देवता सूर्या । अन्या सूरी ॥ **जातेरयोपधात् । ३२ ।** जातिवाचिनोऽयकारोपधादकारान्तात्स्त्रियामीप्प्रत्ययो भवति । अस्त्रीविषयादिति वाच्यम् । तेन मक्षिका बलाका इत्यादौ न ॥ **गवयहयमुकयमत्स्यमनुष्याणां न निषेधः । ३३ ।** गवयी इत्यादि । शूकरी । हंसी । कुक्कुटी । ब्राह्मणी । अयकारोपधग्रहणात्क्षत्रिया वैश्या ॥ **शूद्राज्जातौ न । ३४ ।** शूद्रस्य जातिः शूद्रा ॥ **महत्पूर्वात्तु ईप् । ३५ ।** महाशूद्री आभीरजातिः । पुंयोगे च । महाशूद्रस्य भार्या महाशूद्री ॥ **प्रथमवयोवाचिनोऽत ईप् वक्तव्यः । ३६ ।** कन्याशब्दात्र । कुमारी । किशोरी । कलभी । प्रथमवयोग्रहणाद्वृद्धा स्थविरा इत्यत्र न । वधूटी चिरण्टी इत्यत्र ईप् भवत्येव । अदुग्रहणाच्छिशुः ॥ **स्वाङ्गाद्वा । ३७ ।** स्वाङ्गवाचिनो वा स्त्रियामीप्प्रत्ययो भवति । सुमुखी-सुमुखा । मृगाक्षी-मृगाक्षा । तन्वङ्गी-तन्वङ्गा । सुष्ठु आसमन्तादङ्ग स्वाङ्गम् । स्वस्य प्राणिनो अङ्ग स्वाङ्गमित्युङ्गाङ्गिभावेन ज्ञानादेरपि स्वाङ्गत्व स्यात् । अतः स्वाङ्गलक्षणमाह ॥

> प्राणिस्थमद्रवन्मूर्त्तं स्वाङ्गं स्यादविकारजम् ॥
> तत्र दृष्टमतस्थं चेत्स्थितं तद्वच्च तादृशि ॥ ५८ ॥

पूर्वार्धस्य प्रत्युदाहरणानि । सुमुखा शाला अप्राणिस्थत्वात् । सुस्वेदा द्रवत्वात् । सुज्ञाना अमूर्तत्वात् । सुशोफा विकारजत्वात् । उत्तरार्धस्योदाहरणानि । सुकेशी सुकेशा वा रथ्या अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् । सुस्तनी-सुस्तना वा प्रतिमा । प्राणिवदप्राणिसदृशे स्थितत्वात् । स्वाङ्गत्वेऽपि वक्तव्यस्य व्यभिचारितत्वात् ।

ओष्ठादिषु विकल्प । वदनादिषु न वक्तव्य । बिम्बोष्ठी-बिम्बोष्ठा । चारुकर्णी-चारुकर्णा । समदन्ती-समदन्ता । चन्द्रवदना । मृगनयना ॥ **नखमुखयोश्च सञ्ज्ञायां नेष्** । ३८ । शूर्पणखा गौरमुखा ॥ **नासिकाशब्दात्केवलान्नेष्** । ३९ । नासिका ॥ **कृदिकारादक्तेरीप् वा वक्तव्य** । ४० । अङ्गुली-अङ्गुलि । धूली-धूलि । आजी-आजि । अक्तेरिति विशेषणात्कृति भूतिः ॥ **ऐ च मन्वादेः** । ४१ । मन्वादेर्गणात्स्त्रियामीप्प्रत्ययो भवति ऐकारादेशश्च । चकारान्मनोष्टेरौ वा । आदिशब्दान्मन्वग्निवृषाकपिपूतक्रतुकुसितकुसीदा ग्राह्या । मनोर्भार्या मनायी-मनावी । अत्र विकल्पेन पक्षे मनु । अग्नेर्भार्या अग्नायी । पूता क्रतवो यस्येति पूतक्रतु । पूतक्रतोर्भार्या पूतक्रतायी इत्यादि ॥ **पत्न्यादयः** । ४२ । पत्न्यादय शब्दा निपात्यन्ते । पाणिग्रहणकर्ता पति तस्य स्त्री पत्नी यज्ञयोगे एव । अन्यत्र ग्रामं पति स्त्री । समान पतिर्यस्या सा सपत्नी । भर्तृयोगे एव अन्तर्वत्नी । अन्यत्र अन्तर्वती । पतिवत्नी सभर्तृका अन्या पतिमती । सखी अशिश्वी अधंजरती युवती । प्रथम सूर्योऽञ्चति यस्यां सा प्राची । पश्चादञ्चति यस्यां सा प्रतीची । उदीची । नृशब्दस्य णीप्प्रत्ययो भवति ॥ **णीपि परे नुर्वृद्धिर्वाच्या** । ४३ । नारी । दारशब्दो नित्य बहुवचनान्त पुंल्लिङ्ग । दारा । दारान् । दारै । दारेभ्य । दारेभ्यः । दाराणाम् । दारेषु ॥ **वोर्गुणात्** । ४४ । उकारान्ताद्गुणवाचिनो वा स्त्रियामीप्प्रत्ययो भवति । पट्वी-पटु । मृद्वी-मृदु । तन्वी-तनु ॥ **रुरुयोगोपधात्** । ४५ । गुरु । पाण्डु ॥ **उत ऊः** । ४६ । उकारान्तात् ऊप्रत्ययो भवति । पङ्गु-पङ्गू । वामोरु-वामोरू । याशब्दात् रज्ज्वादौ न भवति । रज्जु । धेनु ॥ **युनस्तिः** । ४७ । युवन्शब्दात्स्त्रियां ति प्रत्ययो भवति । युवति । एभ्यो नामत्वात्स्यादय । आव ताडाप (प्र० ७ सू० १) इति सिलोप । ईबन्ताद्वसेप. सेर्लोप. (प्र० ६ सू० ३६) ॥ इति स्त्रीप्रत्ययप्रक्रिया ॥ १४ ॥

---

अथ विभक्त्यर्थो निरूप्यते ॥ तत्र क्रियासिद्धावुपकारक कारकम् । तच्च षड्विधम् ॥

> कर्ता कर्म च करण सम्प्रदान तथैव च ॥
> अपादानाधिकरणे चेत्याहु कारकाणि षट् ॥ ५९ ॥
>
> उक्तानुक्ततया द्वेधा कारकाणि भवन्ति षट् ॥
> उक्ते तु प्रथमैव स्यादनुक्ते तु यथाक्रमम् ॥ ६० ॥

तानि विभक्तिरित्यभिधीयते । लिङ्गार्थे प्रथमा । १ । धातुप्रत्ययातिरिक्तमर्थवच्छब्दस्य लिङ्ग तस्यैवार्थे सत्तामात्रे प्रथमा विभक्तिर्भवति । लिङ्गार्थे प्रथमा एतस्य सूत्रस्योदाहरणानि उच्चै नीचैरित्यादीनि । साउका-

रकभेदशून्यं वस्तु सत्ता । लिङ्गादयोऽपि प्रथमार्था इति केचित् । आदिशब्दाल्लिङ्ग-वचनपरिमाणमात्रेऽपि प्रथमा । कृष्णः श्रीः ज्ञानम् । वचने । एकः द्वौ बहवः । परिमाणे । खारी द्रोणः आढकम् ॥

अष्टमुष्टि भवेत्किञ्चित्किञ्चिदष्टौ च पुष्कलम् ॥
पुष्कलानि च चत्वारि आढकं परिकीर्तितम् ॥ ६१ ॥

चतुर्भिराढकैर्द्रोणः खारी षोडशभिश्च तैः ॥

रूपसङ्ग्रहः ॥

रविरिव राजते राजा रोचते कुमारी रोरूयते ॥
बोभुज्यते भुवं भूपालः प्रागास्तां रामलक्ष्मणौ ॥ ६२ ॥

मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ॥
परगुणपरमाणून्पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ ६३ ॥

कुमाराः शेरते स्वैरं रोरूयन्ते च नारकाः ॥
जेगीयन्ते च गीतज्ञा मेम्रीयन्ते रुजार्दिताः ॥ ६४ ॥

आमन्त्रणे च । आमन्त्रणे आभिमुख्यीकरणे प्रथमा विभक्तिर्भवति ।

मां समुद्धर गोविन्द प्रसीद परमेश्वर ॥
कुमारी स्वैरमासाथां क्षमध्वं भोस्तपस्विनः ॥ ६५ ॥

भोस् भगोस् अघोस् । ३ । एते शब्दा निपात्यन्ते धिविषये । भवद्भगव-दघवच्छब्दानां भोस् भगोस् अघोस् इत्येतच्छब्दरूपत्रयं क्रमेण निपात्यते ॥

क्षमस्व भो दुराराध्य भगोस्तुभ्यं नमोऽस्तु ते ॥
अधीष्व भो महाप्राज्ञ घातयाघोः स्वघस्मरम् ॥ ६६ ॥

शेषाः कार्ये ।४। कर्तृसाधनयोर्दानपात्रे विशेषणयोः सम्बन्ध आधाराधारयोः शेषा विभक्तयो द्वितीयाद्या एष्वर्थेषु भवन्ति । कार्ये कर्मकारके उत्पाद्ये आप्ये संस्कार्ये विकार्ये च द्वितीया विभक्तिर्भवति ॥ कर्तुरीप्सिततमं कर्म ।५। कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् । हरिं भजति ॥ तथायुक्तं चानीप्सितम् । ६ । ईप्सिततमवत्क्रियया युक्तमनीप्सितमपि कारकं कर्मसंज्ञं स्यात् तथानीप्सितं त्रिविधम् । द्वेष्यमितरच्च । विषं भुङ्क्ते ग्रामं गच्छंस्तृणं स्पृशति । तच्च कर्मकारकं चतुर्विधम् । उत्पाद्यम् आप्यं संस्कार्यं विकार्यं च । उत्पाद्य-मुत्पाद्यं वा यदभूत्वा भवति तदुत्पाद्यम् । यत्सिद्धमेव प्राप्यते तदाप्यम् । संस्कारो नाम कारकजन्यो गुणः कश्चिद्गुणातिशयो वा गुणाधानं मलापकर्षो वा इति

चतुर्विधः संस्कारः । संस्कारमर्हतीति संस्कार्यम् । विकारो नाम पूर्वावस्थापरित्यागेनावस्थान्तरप्राप्तिः ॥

**घटं करोति कारुको रूपं पश्यति चाक्षुषः ॥**
**राज्यं प्राप्नोति धर्मिष्ठः सोमं सुनोति सोमपाः ॥ ६७ ॥**

कटादिकमुत्पाद्यादि चतुर्विधं कर्म । गुणातिशयः संस्कार्यम् । व्रीहीन् यज्ञार्थं प्रोक्षति प्रोक्षणेन । व्रीहिषु कश्चिद्गुणातिशयो जन्यते । गुणाधानमलापकर्षयोरुदाहरणम् । वस्त्रं रञ्जयति देवदत्तः । रजको वस्त्रं क्षालयति ॥

**अभिसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ॥**
**द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ ६८ ॥**

अभितो ग्रामं सर्वतो ग्रामं नदी वहति । धिग्देवदत्त देवदत्तस्य धिक् ॥ **उपर्यध्यधसः सामीप्ये** ॥ ७ ॥ एषां द्वे स्तः देशतः कालतश्च सामीप्ये ॥ **तस्य परमाम्रेडितम्** । ८ । द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात् । उपर्युपरि पुरोहितं याचकाः पतन्ति । अधोऽधो नगरं निधानानि सन्ति । परितः समयानिकषाहाप्रतियोगेऽपि । परितः कृष्णं गोपाः । निकषा समया सामीप्ये । समया ग्रामम् उपवनानि वर्तन्ते । निकषा ग्रामं निहतः शत्रुः । हा कृष्णाभक्तम् । तस्य शोच्यतेत्यर्थः । बुभुक्षितं न प्रतिभाति किंचित् ॥ **लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः** । ९ । एष्वर्थेषु विषयभूतेषु प्रत्यादयः कर्मप्रवचनीयसंज्ञाः स्युः ॥ **कर्मप्रवचनीययुक्ते द्वितीया** । १० । एतेन योगे द्वितीया स्यात् । लक्षणे । वृक्षं प्रतिपरिअनु वा विद्योतते विद्युत् । इत्थंभूताख्याने । भक्तो विष्णुं प्रतिपर्यनु वा । भागे । लक्ष्मीर्हरिं प्रतिपरिअनु वा हरेर्भाग इत्यर्थः । वीप्सायाम् । वृक्षं वृक्षं प्रतिपरिअनु वा सिञ्चति ॥ **कालाध्वनोर्नैरन्तर्ये** । ११ । अविच्छिन्नसंयोगत्वं नैरन्तर्यम् । कालाध्ववाचकशब्दानां नैरन्तर्येऽर्थे वाच्ये सति द्वितीया विभक्तिर्भवति । मासमधीते देवदत्तः । क्रोशं पर्वतः । नैरन्तर्ये किम् । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ॥ **कर्तरि प्रधाने क्रियाश्रये साधने च** । १२ । प्रधाने कर्तरि क्रियासिद्ध्युपकारके करणेऽर्थे च तृतीया विभक्तिर्भवति ।

**क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ॥**
**विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥ ६९ ॥**

**भिन्नः शरेण रामेण रावणो लोकरावणः ॥**
**कराग्रेण विदीर्णोऽपि वानरैर्युध्यते पुनः ॥ ७० ॥**

**प्रकृत्यादिभ्यः** । १३ । प्रकृत्यादिभ्यः शब्देभ्यस्तृतीया स्यात् । प्रकृत्या चारुः । प्रायेण अलसः । सुखेन याति । गोत्रेण गार्ग्यः । गार्ग्योऽस्य गोत्रमित्यर्थः ॥

**दानपात्रे संप्रदानकारके चतुर्थी । १४ ।** सम्यक् श्रेयोबुद्ध्या प्रदीयते यस्मै तत्सम्प्रदानकारकम् । वेदविदे गां ददाति । अन्यत्र राज्ञो दण्डं ददाति । रजकस्य वस्त्रं ददाति ॥

> ददाति दण्डं पुरुषो महीपतेर्न चाविभक्त्या
> न च दानकाम्यया ॥ यद्दीयते वासनया
> सुपात्रे तत्संप्रदानं कथितं कवीन्द्रैः ॥ ७१ ॥

अनभिहिते इत्येव । दानीयो विप्रः । क्वचित्सम्यक्श्रेयोबुद्ध्यभावेऽपि चतुर्थी । व्याजेन रथवे करमिति महाकाव्यप्रयोगदर्शनात् । तच्च सम्प्रदानं त्रिविधम् । प्रेरकमनिराकर्त्रनुमन्तृ चेति ॥

> त्यागेन कर्मणा व्याप्तं प्रेरकं चानुमन्तृ च ॥
> अनिराकर्तृ चेत्येतत्संप्रदानं त्रिधा स्मृतम् ॥ ७२ ॥

देहीति प्रेरयतितत्प्रेरकम् । यथा बटवे भिक्षां ददाति । यत्तु इदमहं ददामीत्युक्तेऽनुमन्यते ओमित्याह तदनुमन्तृ । यथा शिष्यो गुरवे गां ददाति । यत्तु नानुमन्यते न निराकरोति तदनिराकर्तृ । यथा सूर्यायार्घ्यं ददाति ॥ **क्रियया यमभिप्रैति सोऽपि संप्रदानम् । १५ ।** पत्ये शेते ॥ **विश्लेषावधौ पञ्चमी । १६ ।** विश्लेषो विभागस्तत्र योऽवधिः स चलतया अचलतया वा विवक्षितस्तत्रापादाने पञ्चमी । विश्लेषो नाम संयोगपूर्वको विभागः । आधाराधेययोर्मध्ये आधारत्वेन ज्ञायमानः सोऽवधिः । आधीयतेऽनेनासौ आधारः । आधातुं योग्यः आधेयः । धावतोऽश्वात्पतति । भूभृतोऽवतरति गङ्गा ॥ **संबन्धे षष्ठी । १७ ।**

> भेद्यभेदकयोः श्लिष्टः संबन्धोऽन्योन्यमुच्यते ॥
> द्विष्ठो यद्यपि संबन्धः षष्ठ्युत्पत्तिस्तु भेदकात् ॥ ७३ ॥

> भेद्यं विशेष्यमित्याहुर्भेदकं तु विशेषणम् ॥
> विशेष्यं तु प्रधानं स्यादप्रधानं विशेषणम् ॥ ७४॥

प्रधानाप्रधानयोर्मध्येऽप्रधाने षष्ठी । क्रियान्वयि प्रधानं क्रियानन्वय्यप्रधानम् ॥

> राज्ञः स पुरुषो ज्ञेयो पित्रोरेतत्प्रपूजनम् ॥
> गुरूणां वचनं पथ्यं कवीनां रसवद्वचः ॥ ७५ ॥

सेव्यसेवकभावसंबन्धः पूज्यपूजकभावसंबन्धो बोध्यबोधकभावसंबन्धो याच्ययाचकभावसंबन्ध इति संबन्धषट्कमिदं ॥ **आधारे सप्तमी । १८ ।** आधारो नामाधिकरणम् । षड्विधमधिकरणम् । औपश्लेषिकं सामीप्यकमभिव्यापकं वैषयिकं नैमित्तिकमौपचारिकं चेति । औपश्लेषिकं त्रिविधम् । एकदेशवृत्त्यभिव्याप्यवृत्ति व्यग्रवृत्तीति केषांचिन्मतम् ॥

कटे शेते कुमारोऽसौ वटे गावः सुशेरते ॥
तिलेषु विद्यते तैलं हृदि ब्रह्मामृतं परम् ॥ ७६ ॥

युद्धे संनह्यते धीरोऽङ्गुल्यग्रे करिणां शतम् ॥
भूभृत्सु पादपाः सन्ति गङ्गायां वरवालुकाः ॥ ७७ ॥

**भावे सप्तमी** । १९ । क्रियालक्षणं भावस्तत्रापि सप्तमी । प्रसिद्धक्रियया अप्रसिद्धक्रियया लक्षणबोधनं भावः । देवे वर्षति चौर आयातः । पतत्यंशुमालिनि पतितोऽरातिः ॥ **विनासहनमऋते निर्धारणस्वाम्यादिभिश्च** । २० । एतैरपि योगे द्वितीयाद्या विभक्तयो भवन्ति । विना पापं सर्वं फलति । अन्तरेणाक्षिणी जीवितेन किम् । अन्तरा त्वां मां हरिरित्यादिपदाद्याप्यम् ॥ **अधिशीङ्स्थासां कर्म** । २१ । अधिपूर्वाणामेषामाधारः कर्मसंज्ञः स्यात् । अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः ॥ **अभिनिविशश्च** । २२ । अभिनीत्येतत्सङ्घातपूर्वस्य विशतेर्धातोराधारः कर्मसंज्ञः स्यात् । ग्राममभिनिविशते ॥ **उपान्वध्याङ्वसः** । २३ । उपादिपूर्वस्य वसतेराधारः कर्मसंज्ञः स्यात् । आवसत्यनावसति उपवसति अनुवसति अधिवसति ॥ **सहादियोगे तृतीयाऽप्रधाने** । २४ । सह सदृश साकं सार्धं सममिति सहादयः । सह शिष्येणागतो गुरुः । सदृशश्चैत्रो मैत्रेण । साकं नयनाभ्यां श्लक्ष्णा दन्ताः । सार्धं धनिना धृतः साधुः । समं शिष्याभ्यामधीते । समं शिष्येण गुरुणा भुज्यते ॥ **अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया** । २५ । दास्या संयच्छते कामुकः । धर्म्ये तु भार्यायै संयच्छति ॥ **वारणार्थयोगे तृतीया** । २६ । अलं विवादेन ॥ **नमःस्वस्तिस्वाहास्वधालंवषड्योगे चतुर्थी** । २७ नमो नारायणाय । स्वस्ति राज्ञे । सोमाय स्वाहा । पितृभ्यः स्वधा । अलं मल्लो मल्लाय । वषट् इन्द्राय ॥ **रुच्यर्थानां प्रीयमाणः** । २८ । रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः सम्प्रदानसंज्ञः स्यात् । हरये रोचते भक्तिः ॥ **ऋतआदियोगे पञ्चमी** । २९ । ऋते अन्य. आरात् इतरः अञ्चूत्तरपद दिग्वाचकः शब्द. आहि आच् एते ऋतआदय. । अन्यशब्देनान्यार्था गृह्यन्ते । ऋते ज्ञानान्न मुक्तिः । अन्यो गृहाद्विहारः । आराद्वनात् । इतरो ग्रामात् ॥ **ऋतेयोगे द्वितीयापि** । ३० । ज्ञानमृतेचकाराद्विनादियोगे तृतीयापञ्चम्यौ स्तः । विना ज्ञानात् । ज्ञानेन विना ॥ **यतश्च निर्धारणम्** । ३१ । द्रव्यगुणक्रियाजातिभिः समुदायात्पृथक्करणं यतस्तत्र षष्ठीसप्तम्यौ स्तः । भवतां मध्ये यो दण्डी स आयातु भवत्सु वा । क्रियापराणां भगवदाराधकः श्रेष्ठः क्रियापरेषु वा । गवां गोषु वा कृष्णा गौ. सम्पन्नक्षीरा । तेषां वा एतेषु क्षत्रियः शूरतम ॥ **स्वाम्यादिभिश्च** । ३२ । स्वाम्यादिभिरपि योगे षष्ठीसप्तम्यौ स्त. । गोषु स्वामी गवां स्वामी । गवामधिपति. गोष्वधिपति. ॥ **कर्तृकार्ययोरक्तादौ कृति षष्ठी** । ३३ । कर्तरि कार्ये च षष्ठीविभक्तिर्भवति क्तादिवर्जितकृदन्ते शब्दे प्रयुज्यमाने । व्यासस्य कृति. ।

का कृतिरित्यर्थः । भातस्य श्रवणम् ॥ **उभयप्राप्तौ कर्मणि** । ३४ । उभयो प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् । चित्र गवां दोहोऽगोपेन ॥ **स्मृतौ च कार्ये** । ३५ । स्मृत्यर्थे धातौ प्रयुज्यमाने च कार्ये षष्ठी भवति । मातुः स्मरति मातर स्मरतीत्यस्मिन्नर्थे । चकाराद्द्वितीयापि । मातरं स्मरति ॥ **न लोकाव्ययनिष्ठाखलर्थतृनाम्** । ३६ । एषां प्रयोगे षष्ठी न । लादेशाः । कुर्वन् कुर्वाणः सृष्टिं हरिः । उः । हरिं दिदृक्षुः अलंकरिष्णुर्वा । उक । दैत्यान्घातुको हरिः । अव्ययम् । जगत्सृष्ट्वा । सुखं कर्तुम् । निष्ठा । विष्णुना हता दैत्याः । दैत्यान् हतवान् विष्णुः । खलर्थः । ईषत्करः प्रपञ्चो हरिणा । तृन् । कर्ता लोकान् ॥ **हेतौ तृतीया पञ्चमी च वक्तव्या** । ३७ । अनित्य. शब्दः कृतकत्वेन कृतकत्वात्कृत्रिमत्वात् ॥ **भयहेतौ पञ्चमी च वक्तव्या**। ३८ । चौराद्बिभेति । व्याघ्राद्रस्यति । विद्युत्पाताच्चकित. ॥ **षष्ठी च हेतुप्रयोगे** । ३९ । हेतुप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । चकारात्सर्वादियोगे तृतीयापि । अन्नस्य हेतोर्वसति । कस्य हेतोर्नागतः । केन हेतुना वा नागत. ॥ **इत्थंभावे तृतीया** । ४० । कंचित्प्रकारं प्राप्त इत्थंभाव' । शिष्य पुत्रेण पश्यति । ससारमसारेण पश्यति ॥ **येनाङ्गविकारः** । ४१ । येन विकृतेनाङ्गेनाङ्गिनोऽङ्गविकारो लक्ष्यते तस्मादङ्गात्तृतीया विभक्तिर्भवति । अक्ष्णा काण. । पादेन खञ्जः । श्रवणेन बधिरः । विकारो द्विविध. । न्यूनत्वाश्रित आधिक्याश्रितश्च । मुखेन त्रिलोचन. । वपुषाचतुर्भुजः ॥ **जनिकर्तुः प्रकृतिः** । ४२ । जायमानस्य कार्यस्योपादानमपादानसंज्ञं भवति । तत्रापादाने पञ्चमी । यस्मात्प्रजाः प्रजायन्तेतद्ब्रह्मेति॥ **आङादियोगे** । ४३ । आङादियोगे पञ्चमीविभक्तिर्भवति । आङ् मर्यादाया मभिविधौ च । अपपरी वर्जने । एत आङादयः । आपाटलिपुत्राद्वृष्टो देवः । आपालेभ्यो हरिभक्तिः । आदिशब्दात्परित्रिगर्तेभ्यो वृष्टो देवः । अपत्रिगर्तेभ्यो वृष्टो देवः । तादर्थ्ये चतुर्थी वक्तव्या ॥

> संयमाय श्रुतं धत्ते नरो धर्माय संयमम् ॥
> धर्मं मोक्षाय मेधावी धनं दानाय भुक्तये ॥ ७८ ॥

आशिषि चतुर्थी । रामे चिरं सौभाग्य भूयात् ॥ **क्रुधद्रुहेर्ष्यासूयार्थानां यंप्रति कोपः** । ४४ । क्रुधाद्यर्थानां प्रयोगे यंप्रति कोपः स संप्रदानसंज्ञः स्यात् । हरये क्रुध्यति द्रुह्यति ईर्ष्यति असूयति । द्रुहादयोऽपि कोपप्रभवा एव गृह्यन्ते । सोपसर्गयो. क्रुधद्रुहोर्योगे द्वितीया वक्तव्या । क्रूरमभिक्रुध्यति । मित्रमभिद्रुह्यति । अपराधमारोपयति ॥ **क्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वक्तव्या** । ४५ । हर्म्यात्प्रेक्षते । हर्म्यमारुह्य प्रेक्षत इत्यर्थः । आसनात्प्रेक्षते आसने उपविश्य प्रेक्षत इत्यर्थः ॥

> क्यबर्थो दृश्यते यत्र क्यबन्तं नैव दृश्यते ॥
> तदेव हि क्यब्लोपित्वं ज्ञातव्यं च सदा बुधैः ॥ ७९ ॥

दिति वाच्यम् । ५४ । कुरून्स्वपिति मासमास्ते गोदोहमास्ते क्रोशमास्ते ॥ **गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ । ५५।** गत्याद्यर्थानां शब्दकर्मकाणामकर्मकाणां चाणौ य कर्ता स णौ कर्म स्यात् ॥

> शत्रूनगमयत्स्वर्गं वेदार्थं स्वानबोधयत् ॥
> आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ॥ ८६ ॥
> आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ॥
> गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ॥ ८७ ॥
> बुद्धिभक्षार्थयोः शब्दकर्मणा च निजेच्छया ॥
> प्रयोज्यकर्मण्यन्येषा ण्यन्तानां लादयो मताः ॥ ८८ ॥

गौर्दुह्यते पयः । अजा ग्रामं नीयते । बोध्यते माणवकं धर्मं माणवको धर्ममिति वा । देवदत्तो ग्रामं गम्यते । अकर्मकाणां कालादिकर्मणां च कर्मणि भावे च लकार इष्यते । मासो मासं वा आस्यते देवदत्तेन । णिजन्तात्तु प्रयोज्ये प्रत्यय । मासमास्यते माणवक ॥ **तत्प्रयोजको हेतुश्च । ५६ ।** कर्तुः प्रयोजकः कर्तृसंज्ञो हेतुसंज्ञश्च स्यात् । स्वार्थं परित्यज्य अन्यार्थाभिधायित्वमुपसर्जनत्वम् । क्रियाजन्यफलशालित्वं कर्मत्वम् । साक्षात्सम्बन्धेन क्रियान्वयित्वं मुख्यत्वम् । परम्परासम्बन्धेन क्रियान्वयित्वं गौणत्वम् ॥ इति कारकप्रक्रिया ॥ १५ ॥

---

अथार्थद्वाभिमन्तिविशिष्टानां पदानां समासो निरूप्यते ॥ **समासश्चान्वये नाम्नाम् । १ ।** नाम्नामन्वययोग्यत्वे सत्यत्र समासो भवति । चकारात्तद्धितोऽपि। ततो भार्यापुरुषस्येत्यादौ समासो न भवति । स च षड्विध । अव्ययीभावस्तत्पुरुषो द्वन्द्वो बहुव्रीहि कर्मधारयो द्विगुश्चेति । अव्ययस्य अव्ययेन वा भवन सोऽव्ययीभाव । १ । स एवाभिम पुरुष प्रधान यस्यासौ तत्पुरुष । २ । द्वन्द्वायते उभयपदार्थो येनासौ द्वन्द्व । ३ । बहु समातिरिक्त व्रीहि प्रधान यस्मिन्नसौ बहुव्रीहि । ४ । कर्म भेदक धारयतीति कर्मधारय । ५ । द्वाभ्यां गच्छतीति द्विगु । ६ । पूर्वपदप्रधानोऽव्ययीभाव । द्विगुतत्पुरुषौ परपदप्रधानौ । द्वन्द्वकर्मधारयौ चोभयपदप्रधानौ । बहुव्रीहिरन्यपदप्रधान । यत्रानेकसमासप्राप्तिस्तत्र उभयपदप्रधानो बलवान् । तस्य क्रियाभिसम्बन्धात् । इदमेकस्मिन्समसिते पदेऽनेकसमासप्राप्तिस्तद्विषयम् । निषादस्थपति याजयेदित्यत्र तत्पुरुषबहुव्रीहिकर्मधारयप्राप्तौ सत्यां निर्णयमाह । समानाधिकरणव्यधिकरणयोर्मध्ये समानाधिकरणो बलवान् । एकविभक्त्यन्तमेकार्थनिष्ठत्व सामानाधिकरण्यम् । नील च तदुत्पल च नीलोत्पलम् । भिन्नविभक्त्यन्त भिन्नार्थनिष्ठत्व वैयधिकरण्यम् । ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वं च समासप्रयोजनम् । अधि स्त्री इति स्थिते । स्त्रीशब्दाद्द्वितीयैकवचनम् । स्त्रियमधिकृत्य भवतीति विग्रहेऽन्ययोग्यार्थसमर्थकं पदसमुदायो विग्रहो वाक्यमिति यावत् ॥ **पूर्वं समासे अव्ययाना पूर्वनिपातो वक्तव्यः ॥ २ ॥ पूर्वे-**

**व्ययेऽव्ययीभावः** । ३ । अव्यये पूर्वपदे सति योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति । इति समाससंज्ञायाम् ॥ **समासप्रत्यययोः** । ४ । समासे वर्तमानाया विभक्तेः प्रत्यये च परे विभक्तेर्लुग्भवति नामसंज्ञायां स्यादिविभक्तिर्भवति ॥ **स नपुंसकम्** । ५ । सोऽव्ययीभावः समासो नपुंसकलिङ्गो भवति । नपुंसकत्वाद्ध्रस्वत्वम् ॥ **अव्ययीभावात्** । ६ । अव्ययीभावात्परस्याविभक्तेर्लुग्भवति । अधिस्त्रि गृहकार्यम् । रायमतिक्रान्तमतिरि कुलम् । नावमतिक्रान्तमतिनु जलम् ॥ **अत्याद्यः क्रान्ताद्यर्थे द्वितीयया** । ७ । क्रान्ताद्यर्थे वर्तमाना अत्याद्यो द्वितीयया सह समस्यन्ते स तत्पुरुषसंज्ञकः समासो भवति ॥ **न्हस्वादेशो संध्यक्षराणामिकारेकारौ च वक्तव्यौ** । ८ ॥ **यथाऽसादृश्ये** । ९ । यथाशब्दोऽसादृश्ये वर्तमानः समस्यते सोऽव्ययीभावः समासो भवति । योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्य चेति यथार्थाः । शक्तिमनतिक्रम्य करोतीति यथाशक्ति करोति । सादृश्ये त्विम् । यथा हरिस्तथा हरः । कुम्भस्य समीपमिति विग्रहे समासादिपूर्ववत् । अव्ययीभावात् ( प्र० १६ सू० ६ ) इति प्राप्ते ॥ **अतोऽमनतः** । १० । अकारान्तादव्ययीभावात्परस्याविभक्तेरम् भवति । अत यजायतः । तथा ॥ पाणिनीये ॥ **नाव्ययीभावादतोऽम्त्वपञ्चम्याः** । ११ । अदन्तादव्ययीभावान्न सुपो लुक् तस्य पञ्चमीं विनामादेशः स्यात् । उपकुम्भ वर्तते ॥ **वा टाङ्योः** । १२ । टा ङि इत्येतयोर्वा अम् भवति । अतोऽमनतः ( प्र० १६ सू० १० ) वा टाङयोः । अत्र टाङि एतत्पञ्चम्यास्तृतीयासप्तम्योर्द्विवचनबहुवचनयोरप्युपलक्षणम् । तेन द्विवचनबहुवचनयोरपि वा अम् भवति न लुक् । पञ्चम्यास्तु अम्लुकोर्निषेधः । उपकुम्भेन कृतमुपकुम्भकृतम् । उपकुम्भं देहि । अनत इति विशेषणादुपकुम्भादानय । उपकुम्भ देशः । उपकुम्भं निधेहि, उपकुम्भे निधेहि ॥ **अवधारणार्थे यावति च** । १३ । अवधारणार्थे यावच्छब्दे प्रयुज्यमाने अव्ययपूर्वपदाभावेऽपि योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति । यावन्त्यमत्राणि तावतो ब्राह्मणानामन्त्रयस्वेति यावदमत्रम् ॥ **यावदवधारणे** । १४ । अवधारणार्थे यावच्छब्दो नित्य समस्यते ॥ **आङ्मर्यादाऽभिविध्योः** । १५ । मर्यादायामभिविधौ च आङ् वा समस्यते । पाटलिपुत्रं मर्यादीकृत्येत्यापाटलिपुत्रम् । बालानभिव्याप्येत्याबालम् । तेन विनेति मर्यादा । तेनसहेत्यभिविधिः ॥ **पारमध्ये षष्ठ्या वा** । १६ । पारमध्यशब्दौ षष्ठ्या वा समस्येते । एदन्तौ निपातौ सूत्रात् ॥ **प्रथमानिर्दिष्टं समासउपसर्जनम्** । १७ । समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥ **उपसर्जनं पूर्वम्** । १८ । समासे उपसर्जनं प्राक् प्रयोज्यम् । गङ्गायाः पारे इति पारेगङ्ग–गङ्गापारे । गङ्गायाः मध्ये इति मध्येगङ्गम्–गङ्गामध्ये । मक्षिकाणामभावो निर्मक्षिकं वर्तते ॥ **अमादौ तत्पुरुषः** । १९ । द्वितीयाद्यन्ते पूर्वपदे सति योऽन्वयः स तत्पुरुषसंज्ञकः समासो भवति ॥ **द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः** । २० । अन्वये सति समस्यते स

तत्पुरुष. । कृष्ण श्रित कृष्णश्रित । ग्राम प्राप्तो ग्रामप्राप्त. । अन्वये इति किम् । पश्य कृष्ण श्रितस्त्व साधून् । दात्रेण छिन्न दात्रच्छिन्नम् । यूपाय दारु यूपदारु । वृकेभ्यो भय वृकभयम् । राज्ञ पुरुषो राजपुरुष । अक्षेषु शौण्ड, अक्षशौण्ड ॥ **क्वचिदमायन्तस्य परत्वम् । २१ ।** अग्नौ आहित इत्याहिताग्नि. । पूर्वं भूत इति भूतपूर्वः ॥ **पिशाचादेः सभादीनां नपुंसकत्वं वा । २२ ।** पिशाचानां सभा इति पिशाचसभम् । पिशाचसभा । गृहस्थूणम्-गृहस्थूणा । शशोर्णम्-शशोर्णा । भिन्नपदे णत्वाभावस्तथापि समासे सति क्वचिदेकपद्य णत्वहेतु । शराणां वन शर-वणम् । आम्राणां वनमाम्रवणम् ॥ **सञ्ज्ञायां वा । २३ ।** त्रीणि नयनानि यस्यासौ त्रिणयन त्रिनयन ॥ **पानस्यवा । २४ ।** सुराया पान सुरापानम्-सुरा-पाणम् ॥ **नञि । २५ ।** नञि पूर्वपदे सति योन्य स तत्पुरुषसञ्ज्ञक समासो भवति ॥ **नञ् । २६ ।** नञ् सुबन्तेन समस्यते । नञ उभयार्थत्व प्रसिद्धम् । तथा चोक्त वार्तिककारेण ॥

> उभौ नञौ समाख्यातौ पर्युदासप्रसज्यकौ ॥
> पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ॥ ८९ ॥
> प्राधान्य तु विधेर्यत्र प्रतिषेधोऽप्रधानता ॥
> पर्युदास. स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ ९० ॥
> अप्राधान्य विधेर्यत्र प्रतिषेधे प्रधानता ॥
> प्रसज्यप्रतिषेधोऽय क्रियया सह यत्र नञ् ॥ ९१॥

न ब्राह्मणोऽब्राह्मण ॥ **ना । २७ ।** समासे सति नञोऽकारादेशो भवति नाकादिवर्जम् । नाक नक्र नग तनूनपात् नख नपुंसक नक्षत्र नकुल नासत्य नमुचि नर इत्यादि । नाक नमुचि नकुल नागर नासिका नमेरु ननान्द्र नभसी नान्तरीय नक्र नख नग नद नपाद नवेद नासत्य नापित नघुष नक्षत्र इत्येते नाकादय येनचिह्निता । उभयथापि नाकादौ न भवति ॥ **अनुस्वरे । २८ ।** समासे सति नञोऽनादेशो भवति स्वरे परे ॥ **अनादेशोऽपदान्तवद्वाच्यः । २९ ।** तेन सृन ( प्र० ४ सू० १६ ) इति न द्वित्वम् । अश्वादन्योऽनश्व. । धर्मविरुद्धोऽधर्म । ग्रहणाभावोऽग्रहणम् । तदन्यतद्विरुद्धतदभावेषु नञ् वर्तते । तस्मादन्यस्तदन्य । तेन विरुद्धस्तद्विरुद्ध । तस्य अभावस्तदभाव । तदन्यश्च त-द्विरुद्धश्च तदभावश्च तदन्यतद्विरुद्धतदभावास्तेषु ॥ **चार्थे द्वन्द्व । ३० ।** समु-च्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थास्तेषु चार्थेषु द्वन्द्व समासो भवति । तत्रेश्वर गुरु च भजस्वेति प्रत्येकमेकक्रियासंबन्धे समुच्चये समासो नास्ति । बटो भिक्षा-मट गां चानयेति क्रमेण क्रियाद्वयसंबन्धेऽन्वाचये समासो नास्ति । नाम्नां परस्प-रमसंबन्धात् । इतरेतरयोगे समाहारे चार्थे द्वन्द्व समासो भवति ॥ **द्वन्द्वेऽल्पस्वरप्रधानेऽकारेकारान्तानां पूर्वनिपातो वक्तव्यः । ३१ ।** पटुश्च गुप्तश्च पटुगुप्तौ । इतरेतरयोगे द्विवचनम् । चकार उक्तार्थानामप्रयोग । अग्निश्च मारुतश्च अग्निमारुतौ । भोक्ता च भोग्यश्च भोक्तृभोग्यौ । धवश्च खदिरश्च धवख-

दिरौ ॥ **देवताद्वन्द्वे पूर्वपदस्य वा दीर्घो वक्तव्यः । ३२ ।** वाग्रहणा-
त्त्वविध भवत्यग्निमारुतावित्यादौ । अग्निश्च सोमश्च अग्नीषोमौ ॥ **अग्न्यादेः सो-
मादीनां षत्वं वक्तव्यम् । ३३ ।** इन्द्रश्च बृहस्पतिश्च इन्द्राबृहस्पती ॥ **ए-
कवद्भावो वा समाहारे वक्तव्यः । ३४ ।** समाहारस्यैकत्वात्समाहारे एक-
वचनं सिद्ध एव । तर्हि वाग्रहणं किमर्थम् । वाग्रहणात्क्वचिद्द्वयोरपीतरेतरयोगे
एकवचनं क्वचिद्बहूनामितरेतरयोग एकवचनम् । शशाश्च कुशाश्च पलाशाश्च श-
शकुशपलाशाः-शशकुशपलाशम् ॥ **अन्यादीनां विभक्तिलोपे कर्मव्यति-
हारे पूर्वपदस्य सगागमो भवति । ३५ ।** अन्योन्यमेकक्रियाकरणं कर्म-
व्यतिहारः । अन्यश्च अन्यश्च अन्योन्यं विप्रा नमन्ति । परश्च परश्च परस्परम् ।
परस्परमित्यत्र कस्कादित्वाद्विसर्गोपध्मानीयाभावः ॥ **एकत्वे द्विगुद्वन्द्वौ । ३६ ।**
एकत्वे वर्तमानौ द्विगुद्वन्द्वौ नपुंसकलिङ्गौ भवतः ॥ **संख्यापूर्वो द्विगुः । ३७ ।**
संख्यापूर्वः समासो द्विगुर्निगद्यते ॥ **समाहारेऽत ईप् द्विगुः । ३८ ।** समाहा-
रेऽर्थे द्विगुः समासो भवति ततोऽकारान्तादीप् प्रत्ययो भवति ॥ **पात्राद्यन्तो
द्विगुर्नैवन्तः । ३९ ।** पञ्चानां पात्राणां समाहारः पञ्चपात्रम् । त्रिभुवनम् । त्रि-
भुवनम् । चतुष्पथम् । दशानां ग्रामाणां समाहारो दशग्रामं । पञ्चाग्नयः समाहृता
इति पञ्चाग्नि । पञ्चानां गवां समाहारः पञ्चगु । नपुंसकत्वाद्ध्रस्वत्वम् । निश्कल
हरितः ॥ **बहुव्रीहिरन्यार्थे । ४० ।** अन्यपदार्थप्रधानो यः समासः स बहुव्री-
हिसंज्ञो भवति । बहु धनं यस्य स बहुधनः । अस्ति धनं यस्य सोऽस्तिधनः ।
अव्ययत्वादस्त्यादीनां पूर्वनिपातः । अन्यपदप्राधान्याद्बहुव्रीहिः । अन्तरङ्गं यस्यासा-
वन्तरङ्गः । बहिरङ्गः । ऊर्ध्वमुखः ॥ **तेन सहेति तुल्ययोगे । ४१ ।** सहेत्ये-
तत्तृतीयान्तेन समस्यते स तुल्ययोगबहुव्रीहिः ॥ **सहादेः सादिः । ४२ ।** स-
हादीनां सादिर्भवति । पुत्रेण सह वर्तमानः सपुत्रः । सो वेति पक्षित्व । सहपुत्रो
वा गतः । तुल्ययोगवचनं प्रायिकम् । कर्मणा सह वर्तमानः सकर्मकः । सलोम-
कः । यस्य प्रधानस्यैकदेशो विशेषणतया गम्यते स तद्गुणसंविज्ञानो बहुव्रीहि-
र्लम्बौ कर्णौ यस्य स लम्बकर्णः ॥ **बहुव्रीहौ विशेषणसप्तम्यन्तयोः पू-**

बहुव्रीहौ । अप्रजा सुप्रजा दुष्प्रजा अमेधा दुर्मेधा सुमेधा ॥ **धर्मादनिच् केवलात् । ५० ।** केवलात्पूर्वपदात्परो यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच् प्रत्ययः स्यात् । कल्याणधर्मा । सुधर्मा । केवलादिति किम् । परमः स्वो धर्मो यस्य स परमस्वधर्मः ॥ **जायाया निङादेशो बहुव्रीहौ वक्तव्यो यलोपश्च । ५१ ।** लक्ष्मीजानिः ॥ **उत्पूतिसुसुरभिभ्यो गन्धशब्दस्येकारान्तादेशो बहुव्रीहौ वक्तव्यः । ५२ ।** उद्गन्धिः । पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः ॥ **आगन्तुकस्यैकवचनान्तस्य वा । ५३ ।** सुगन्धिः आपणः—सुगन्धो वा ॥ **अल्पाख्यायां च । ५४ ।** अल्पपर्यायो गन्धशब्दः । सूपोऽल्पो यस्मिन् तत्सूपगन्धि भोजनम् । घृतगन्धि । वेति क्वचित् । सूपगन्धम् । घृतगन्धम् ॥ **उपमानाच्च । ५५ ।** पद्मस्येव गन्धो यस्येति पद्मगन्धिः । मतान्तरे विकल्पः ॥ **ऊधसोऽनङ् । ५६ ।** ऊधोन्ताद्बहुव्रीहेरनङादेशः स्यात्स्त्रियाम् । कुण्डोध्नी गौः । पुंसि तु कुण्डोधा गोगणः ॥ **धनुषश्च । ५७ ।** शार्ङ्गं धनुर्यस्य स शार्ङ्गधन्वा ॥ **संज्ञायां वा । ५८ ।** शतधन्वा—शतधनुः ॥ **पुंवद्वा । ५९ ।** समासे सति समानाधिकरणे पूर्वस्य स्त्रीलिङ्गस्य पुंवद्वा भवति । वाग्रहणात्कल्याणीप्रिय इत्यादौ न भवति । पुंवद्भावादीपो निवृत्तिः । रूपवद्भार्यः ॥ **अन्यार्थे । ६० ।** स्त्रीलिङ्गस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति ॥ **यङ्मानिन्त्वथरतसतरपादौ चारूप्ये । ६१ ।** एनीवाचरतीति एनायते । पत्न्यादित्वात्तो न । पण्डितमानिनी । पट्व्या भावः पटुत्वम् । अल्पपटुः देहीति अल्पशः । पटुतमा । पटुतरा । पटुकल्पा । पटुदेश्या । पटुदेशीया । अरूप्य इति किम् । शुभ्ररूप्या । प्रियादौ न । प्रियाभक्तिः । मनोज्ञा सुभगा दुर्भगा क्षान्ता कल्याणी चपला वामना सचिवा समा वामा कान्ता बाला तनया दुहिता स्वसा । इति प्रियादयः ॥ **एषु परेषु भाषितपुंस्कस्य स्त्रीप्रत्ययान्तस्य न पुंवत् । ६२ ॥ ऊङ्प्रत्ययान्तस्य च न पुंवत् । ६३ ।** वामोरूभार्यः ॥ **अभाषितपुंस्कस्य च न पुंवत् । ६४ ।** गङ्गाभार्यः ॥ **कोपधपूरणीसंज्ञानां च न पुंवत् । ६५ ।** पाचकाभार्यः । पञ्चमीभार्यः । दत्ताभार्यः ॥ **जातिवाचकस्वाङ्गवाचकाथईसदन्तस्य न पुंवदमानिनि । ६६ ।** ब्राह्मणीभार्यः । सुकेशीभार्यः । अमानिनीति किम् । ब्राह्मणमानिनी ॥ **शुद्धजितरक्तविकारार्थवर्जितवृद्धिवान्तस्य न पुंवत् । ६७ ।** मैथिलीजायः । शुद्धजितरक्तविकारार्थवर्जितेति किम् । वैयाकरणभार्यः कापायकन्थः हैममुद्रिकः । वाग्रहणादियं व्यवस्था ॥ **गोः । ६८ ।** गोशब्दस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति । पञ्च गावो यस्यासौ पञ्चगुः । संख्यासुव्याघ्रादिपूर्वस्य पादशब्दस्याकारस्य लोपो वक्तव्यः । सहस्रं पादा यस्यासौ सहस्रपात् । व्याघ्रस्य पादाविव पादौ यस्यासौ व्याघ्रपात् । शोभनौ पादौ यस्य स सुपात् । पादः पत् ( प्र० ९ सू० ४८ ) द्विपद् द्विपदा द्विपदी त्रिपदी । नदादित्वान्ङीप् ॥ **टाड्या । ६९ ।** समासे सति ट अ ड य इत्येते प्रत्यया भवन्ति ॥

टश्च तत्पुरुषे ज्ञेयो अकारो द्वन्द्व एव च ॥
डकारस्तु बहुव्रीहौ यकारोऽनियमो मतः ॥ १२ ॥

अचिन्त्यो महिमा यस्य सोऽचिन्त्यमहिम ॥ नो वा। ७०। नान्तस्य पदस्य टेलापो वा भवति स्वरे यकारे च परे। वामहणात्क्वचिन्न भवति पि तूपधालोपश्च। अहो मध्य मध्याह्न। द्वयोरह्नो समाहारो द्व्यह्न ॥ रात्राह्नाहा. पुंसि। ७१। एते पुंस्येव स्यु। सांगत्र। सर्वाह्न। द्व्यह्न। कवीनां राजा इति कविराज। टचार ईवर्थं महिराजा एरित (प्र० १४ सू० १४) राज्ञां पू इति राजपुरम्। अप्रत्यय। वाक्च मनश्च वाङ्मनसम्। श्वा यु (प्र० ९ सू० ५२) श्वभ्रे भ्रमा वा (प्र० ४ सू० २) दक्षिणस्यां दिशि पन्था इति दक्षिणापथ। अहश्च रात्रिश्च अहोरात्रम्। अप्रत्यय ॥ अहोरात्रमित्यत्र नपुंसकत्व वा वक्तव्यम्। ७२। अहोरात्र। द्वौ च त्रयश्च द्वित्रा। द्व्यष्टा। बहुव्रीहिसंज्ञायां बहुवचनं जस्। बहवो राजानो यस्यां सा बहुराजा नगरी। अत्र टिलोपे कृते आवत स्त्रियाम् (प्र० ७ सू० ८) इत्याप् डप्रत्यय। बहव कर्तारो यस्यासौ बहुकर्तृको याग ॥ कर्मधारयस्तुल्यार्थे। ७३। पदद्वय तुल्यार्थे एकार्थनिष्ठत्वे सति कर्मधारयसंज्ञक: समासो भवति। नील च तदुत्पल च नीलोत्पलम्। रक्ता चासौ लता च रक्तलता। पुमांश्चासौ कोकिलश्च पुंस्कोकिल ॥ पुंसः खपे तयार्थाजिते च अम्परे सयोगान्तस्यलोपो वक्तव्यः। ७४। तेन पुंस्यान पुंक्षीर भवति ॥ नाम्नश्च कृता समास। ७५। प्रादेरुपसर्गस्य नाम्नश्च कृदन्तेन समास स तत्पुरुषसंज्ञो भवति। यथाशरदुशब्दस्यान्ययस्य क्रीडदरीशब्दयोश्च्विप्रत्ययान्तादेश कृदन्तेन समासस्तत्पुरुषो भवति। प्रकृष्टो वाद प्रवाद। कुम्भकार। सहादे सादि (प्र० १६ सू० ४१) सहसमिरसाँ सध्रिसमितिरय। सह अञ्चतीति सध्र्यङ् सम्यञ्चतीति सम्यङ्। तिर अञ्चतीति तिर्यङ्। क्वचिन्न भवति। सह चरतीति सहचर ॥ कुगतिप्रादय। ७६। कुशब्दो गतिसंज्ञा प्रादयश्च समर्थेनान्येन समस्यन्त स तत्पुरुष। कुपुरुष। कुत्सितमन्न कदन्नम् ॥ कुत्सितेपदर्थयो। ७७। कुत्सितेपदर्थयोर्वर्तमानस्य कुशब्दस्य वा क त् वत् इष्यते आदेशा भवति तत्पुरुषे न तु बहुव्रीहौ। बहुव्रीहौ तु। कुत्सिता त्रिया यस्यासौ कुत्रिय। कुत्सिता उष्ट्रा यस्य स कुष्ट्र। कुत्सित पन्था यस्मिन्नसौ कुपथा दश ॥ कावचवदुष्णे। ७८। उष्णशब्दे परे कुशब्दस्य वा कव कवा इष्यते आदेशा भवति। कु ईषदुष्ण कोष्णम्—कवोष्णम्—कदुष्णम्। कु ईषत् लवण कालवणम् ॥ पुरुषे वा। ७९। पुरुषशब्दे परे कुशब्दस्य वा कादेशो भवति तत्पुरुषे ॥

> विभाषा पुरुषे का स्यान्नियमेन हले परे ॥
> अचि त्रिरथवदे को. कत्काक्षे वा पुरुषे पथि ॥ ९२ ॥
> ईषदर्थे च वाच्ये स्युरन्नाुष्णे वाकरवा ॥

कुत्सितास्त्रय कत्त्रय। कद्रथ कद्वद काक्ष कापथ कुपथ कुपुरुष कापुरुष. ॥ षष उत्व दधोर्ङढो। ८०। षष उत्व दतृदशधासूत्तरपदादे ष्टुत्वंच धासु वा भवतीति वाच्यम्। बहुवचन जस्। जसशसोर्लुक् (प्र० ९ सू० ३२)

नाम्नो नो लोपशधौ ( प्र० ९ सू० २० ) षड्भिरधिका दश षोडश । षट्प्रकारमिति षोढा । धासु वावक्तव्यमिति विकल्पात् षस्योत्वाभावे षो ड ( प्र० ९ सू० ४४ ) इति षस्य डत्वम् । षड्धा । संख्याया. प्रकारे धा ( प्र० १७ सू० ११७ ) अव्ययाद्विभक्तेर्लुक् ( प्र० १३ सू० २५ ) षड्दन्ता यस्य इति विग्रहे ॥ **विभक्तिलोपे कृते दन्तस्य दतृ** । ८१ । षट् दन्ता यस्याऽसौ षोडन् ॥ **तद्बृहतोः करपत्योश्चौरदेवतयोः सुट् तलोपश्च** । ८२ । बृहतां पति बृहस्पति । तत् कर' तस्कर ॥ **महतष्टेराकारो भवति समानाधिकरणे** । ८३ । महांश्चासौ ईश्वरश्च महेश्वर ॥ **दिवो द्यावा** । ८४ । दिवुशब्दस्य द्यावादेशो भवति । द्यौश्च भूमिश्च द्यावाभूमी । आकृतिगणोऽयम् । सिद्ध शब्दाकारमुपलभ्य तदनुसारेणादेशविधान क्रियते यत्र स आकृतिगण ॥ **अलुक् क्वचित्** । ८५ । समासे हृदन्तेऽपि विभक्तेर्लुग्भवति । कृच्छ्रान्मुक्त. । अप्सु योनिर्यस्येत्यप्सुयोनि । उरसि लोमानि यस्याऽसौ उरसिलोम । हृदि स्पृशतीति हृदिस्पृक् । कण्ठेकाल वाचोयुक्ति दिशोदण्ड पश्यतोहर इत्यादि ॥ **समासे समानाधिकरणे शाकपार्थिवादीनां मध्यमपदलोपो वक्तव्य**' । ८६ । शाकप्रियश्चासौ पार्थिवश्च शाकपार्थिव । देवपूजकश्चासौ ब्राह्मणश्च देवब्राह्मण ॥ **आदेश्च द्वन्द्वे** । ८७ । द्वन्द्वसमासे सति आदिपदस्य लोपो भवति । माता च पिता च पितरौ । दुहिता च पुत्रश्च पुत्रौ । श्वश्रूश्च श्वशुरश्च श्वशुरौ । **ऋतां द्वन्द्वे** । ८८ । ऋकारान्तानां द्वन्द्वसमासे सति पूर्वपदस्य वा आकारो वक्तव्य । मातापितरौ ॥ **द्वन्द्वे सर्वादिर्वा वा** । ८९ । वर्णाश्च आश्रमाश्च इतरे च वर्णाश्रमेतरे-वर्णाश्रमेतरा ॥ **व्यधिकरणे बहुव्रीहौ मध्यमपदलोपो वक्तव्य**. । ९० । कुमुदस्य गन्ध इव गन्धो यस्यासौ कुमुदगन्धि ॥ **उपमानाच्च** । ९१ । उपमानाद्गन्धशब्दस्येकार स्यात् । हंसस्य गमनमिव गमन यस्या सा हंसगमना ॥ **द्विसंख्ये संज्ञायाम्** । ९२ । द्विगावयवसंख्यावाचकशब्दादुत्तरपदतुल्यार्थौ संज्ञायां समस्यते ॥ त्रिपुरम् । संज्ञायामिति पदेन नित्यसमासो दर्शित । अविग्रहो नित्यसमास । अन्यस्त्वस्वपदविग्रहोऽपि भवति । अस्वपदेन समासत्यतिरिक्तेनार्थ पदेन विग्रहो वाक्य यत्र सनित्य तेन लम्बौ कर्णौ यस्य स लम्बकर्ण । दाशरथि इत्यादि स्वपदविग्रह । अस्वपदविग्रहो नित्य । यस्मिन् समासार्थबोधक वाक्य न तिष्ठति स नित्य । दक्षिणाग्नि । सतमान ॥ ॥ इति समासप्रक्रिया ॥ १६ ॥

---

अथ तद्धिता निरूप्यन्ते ॥ **अपत्ये अण्** । १ । नाम्नोऽपत्येऽर्थेऽण्प्रत्ययो भवति । उपगोरपत्यं पुमानिति विग्रहे । उपगो अण् इति स्थिते । समासवत्पदयो. ( प्र० १६ सू० ४ ) इति षष्ठीलोप । णकारो वृद्ध्यर्थं इत्संज्ञ ॥ **आदिस्वरस्य ञ्णिति च वृद्धि** । २ । स्वराणां मध्ये य आदिस्वरस्तस्य वृद्धिर्भवति ञिति णिति च तद्धिते परत । उकारस्यौकारो वृद्धि ॥ **योऽन्त्यस्वरे** । ३ ।

उकारस्य ओकारस्य च अव् भवति स्वरे यकारे च परे । कृत्तद्धितसमासाश्चेति नामत्वम् । नामत्वात्स्याद्यः । औपगवः । वशिष्ठस्यापत्यं वाशिष्ठः । गौतमस्यापत्यं गौतमः । शिवादिभ्यश्चेत्यण् प्रत्ययः । अन्यथा इञः प्राप्तिः । शिवस्य अपत्यं शैवः । विदेहस्यापत्यं वैदेहः ॥ **उरण्** ।४। मातृशब्दस्य ऋकारस्य उर् भवति अणि परे । यो रः ( प्र० ९ सू० ४४ ) त्वन्मदेकत्वे ( प्र० १२ सू० ५ ) इति सूत्रनिर्देशात्क्वचिदपदान्तेऽपि झलानां—जशा दृष्टव्याः । पञ्चानां मातॄणामपत्यं पाञ्चमातुरः । तिसॄणां मातॄणामपत्यं त्रैमातुरः । द्वयोर्मात्रोरपत्यं द्वैमातुरः ॥ **अत इञनृषेः** ।५। अकारान्तान्नाम्नोऽनृषिशब्दादपत्येऽर्थे इञ्प्रत्ययो भवति । यस्य लोपः ( प्र० १४ सू० ७ ) देवदत्तस्यापत्यं दैवदत्तिः । श्रीधरस्यापत्यं श्रैधरिः । दशरथस्यापत्यं दाशरथिः । पौरदारिः । क्वचिदार्षशब्दादपि भवति । तेन औद्दालकिः ॥ **बाह्वादेश्च** ।६। बाह्वादेः पर इञ्प्रत्ययो भवत्यपत्येऽर्थे । बाहोः अपत्यं बाहविः । उपबिन्दोरपत्यमौपबिन्दविः । कृष्णस्यापत्यं कार्ष्णिः । उडुलोम्नोऽपत्यमौडुलोमिः । नो वा (प्र० १६ सू० ६९) अग्निशर्मणोऽपत्यमाग्निशर्मिः ॥ **ण्यायनणेयण्णीयागर्गनडात्र्यादिस्त्रीपितृष्वस्रादेः** ।७। गर्गादेर्नडादेरत्र्यादेः स्त्रीलिङ्गात्पितृष्वस्रादेश्च ण्य आयनण् एयण् णीय इत्येते प्रत्यया भवन्ति अपत्येऽर्थे यथासङ्ख्येन । चकारात्पितृष्वस्रादेरेयण्प्रत्ययो भवति । गर्गस्यापत्यं गार्ग्यः । वत्सस्यापत्यं वात्स्यः । जमदग्नेरपत्यं जामदग्न्यः । सोमस्यापत्यं सौम्यः । नडस्यापत्यं नाडायनः । चरस्यापत्यं चारायणः । चन्द्रस्यापत्यं चान्द्रायणः । अट्कुप्वचित् ( प्र० १६ सू० ८४ ) अमुष्यापत्यमामुष्यायणः । यस्य लोपः ( प्र० १४ सू० ७ ) अत्रेरपत्यमात्रेयः । मृकण्डस्यापत्यं मार्कण्डेयः । कपेरपत्यं कापेयः । गङ्गाया अपत्यं गाङ्गेयः । मह्या अपत्यं माहेयः । क्वचित्स्त्रीलिङ्गादण् भवति । भूमेरपत्यं भौमः ॥ **मातृपितृभ्यां स्वसा** ।८। मातृपितृभ्यां शब्दाभ्यां परस्य स्वसृशब्दस्य सकारस्य षकारः स्यात्समासे सति । पितुः स्वसा—पितृष्वसा । पितृष्वसुरपत्यं पैतृष्वस्रीयः । मातुः स्वसा मातृष्वसा । मातृष्वसुरपत्यं मातृष्वस्रीयः ॥ **ढकि लोपः** ।९। मातृष्वसुरन्तस्य लोपः स्याड्ढकि । अत एव ढक् ॥ **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** ।१०। प्रत्ययादिभूतानां फादीनां क्रमादायन्नादयः आदेशाः स्युः । आयन् एय् ईन् ईय् इय् एते आयन्नादयः ॥ **किति च** ।११। किति तद्धिते परे अचामादेरचो वृद्धिः स्यात् । पैतृष्वसेयः ॥ **मातृष्वसुश्च** ।१२। पितृष्वसुर्यदुक्तं तदस्यापि स्यात् । मातृष्वसेयः ॥ **मातृपितृभ्यां पितरि डामहच्** ।१३। आभ्यां परो डामहच् प्रत्ययो भवति । मातुः पिता मातामहः । पितुः पिता पितामहः ॥ **लुग्बहुत्वे क्वचित्** ।१४। अपत्येऽर्थे उत्पन्नस्य प्रत्ययस्य बहुत्वे सति क्वचिदनृषिविषये ऋषिविषये च लुग्भवति । गर्गस्यापत्यानि पुमांसो गर्गाः । बहुत्वविवक्षायां जस् । अत्रेरपत्यानि अत्रयः । एओ जसि ( प्र० ६ सू० ३९ ) विदेहस्यापत्यानि विदेहाः ॥ **भृग्वत्रिकुत्साङ्गिरोवसिष्ठगोतमदेशतुल्याख्यक्षत्रियेभ्यः परस्य प्रत्ययस्य लुग्भवति** ।१५। भृ-

गव सुरसा वसिष्ठा ॥ **देवतेदमर्थे** । १६ । देवतार्थे इदमर्थे चोक्ता प्रत्यया भवन्ति । इन्द्रो देवता यस्येत्यैन्द्र हवि । सोमो देवता यस्येति सौम्य हवि । देवदत्तार्थमिद दैवदत्त वस्त्रम् ॥ **कचिद्वयोः** । १७ । कचित्पूर्वोत्तरपदादेरचो वृद्धिर्भवति ञिति णिति च तद्धिते परे । अग्निमरुतौ देवते यस्य तदाग्निमारुत कर्म । सुष्ठु हृदय यस्यासौ सुहृत् सुहृदो भाव सौहार्दम् । अत्र भावेऽण् वक्तव्य । सुष्ठु भाव सौष्ठवम् । अत्र सुष्ठु अव्ययम् । एवमेव अव्यय तिष्ठति । सुभगस्य भाव सौभाग्यम् । **णितो वा** । १८ । उक्ता वक्ष्यमाणाश्च प्रत्यया विषयान्तरे णितो वा भवन्ति । भजो गौर्यस्यासावजगु शिव । गो. (प्र० १६ सू० ६६) इति ह्रस्व । चौत्यस्वरे ( प्र० १७ सू० ३) तस्यद धनुराजगव–अजगव वा । कुमुदस्येव गन्धो यस्या सा कुमुदगन्धि । तस्या अपत्य स्त्री कौमुदगन्ध्या वा कुमुदगन्ध्या । आवत स्त्रियाम् ( प्र० ॥ सू० ८ ) इत्याप् । श्वशुरस्याय श्वाशुर्यो ग्राम । विष्णोरिद वैष्णवम् । गोरिद गव्यम् । कुले भव कुल्यम् । तवेद त्वदीयम् । ममेद मदीयम् । अत्र णीयप्रत्ययो न णित् ॥ **चतुरश्चलोपो ण्यणीययोः** ।१९। चतुर् शब्दस्य चकारस्य लोपो भवति ण्यणीययो प्रत्यययो परत ॥ **पूरणेऽर्थे ण्यणीयौ भवतः** । २० । चतुर्णा सख्यापूरक तुर्य–तुरीयम् ॥ **अन्यस्य दक्** । २१ । अन्यशब्दस्य दगागमो भवति णीयप्रत्यये परे । अन्यस्येदमन्यदीयम् । अर्ध जरत्यस्या सार्धजरती अर्धजरत्या इदमर्धजरतीयम् ॥ **स्वपरयोः कक्** । २२ । स्वकीयम् । परकीयम् ॥ **कारकात्क्रियायुक्ते** । २३ । कारकादभ्येते अणादय प्रत्यया भवन्ति क्रियायुक्ते कर्तरि कर्मणि चाभिधेये । कुङ्कुमेन रक्त वस्त्र कौङ्कुमम् । मथुराया आगतो जातो वा माथुर । ग्रामे भवो ग्राम्य ग्रामीण । धुर वहतीति धुर्य धौरेय ॥ **केनेयेकाः** । २४ । क ईन इय इयेत्येते प्रत्यया भवन्ति भवाद्यर्थेषु । निरय चैषा वैकल्पिकम् । कर्णाटे भवः कार्णाटकः–कर्णाटक । मामादागतस्तत्र जातो वा ग्राम्य ग्रामीण. । अञ्चेर्दीर्घश्च ( प्र० ९ सू० ५२ ) सध्रीचि भवो वा सध्रीचा युक्त. सध्रीचीन । समीचि भवो वा समीचा युक्तः समीचीनः । तिरश्चादयो निपात्यन्ते ( प्र० ९ सू० ५६ ) तिरश्चि भवो वा तिरश्चा युक्त तिरश्चीन. । उदीचि भवो वा उदीचा युक्तः उदीचीन. ॥ **यलोपश्च** । २५ । कन्यादीनामन्त्यवर्णस्य लोपो भवति यकारे स्त्री परे । कन्यादीनामुपधाया क्वचिच्चकारस्य लोपो भवति स्त्रै यकारे च तद्धिते परे । यस्य लोप ( प्र० १४ सू० ७ ) कन्यायां भव कानीन । पुष्येण युक्ता पौर्णमासी पौषी ॥ **नक्षत्रादण् वक्तव्यः** । २६ । अणन्तादीप् । पौष्या भव पौषीण । चातुर्मास्य व्रतमाचरतीति चातुर्मासिक ॥ **इयो वा** । २७ । क्षत्रशब्दाद्वा इयप्रत्ययो भवति । क्षतात्त्रायते इति क्षत्रम् क्षत्रा[illegible] निपात्यन्ते । क्षत्रे भव क्षत्रिय क्षात्र ॥ **क्षत्रशब्दादण् वक्तव्य** ।२८। शुक्रो देवता यस्य तच्छुक्रियम्–शौक्रम् । इन्द्रो देवता यस्येत्यैन्द्रम्–इन्द्रियम् । अक्षैर्दीव्यतीत्याक्षिकः तर्के चतुर. तार्किक । शब्दे कुशलः शाब्दिक । वदे भवा

वैदिशी। अत्रेणोऽप्यपवादः॥ त्यतनौ ।२९। त्यश्च तनश्च त्यतनौ। किमादेरव्ययाद्भवाद्यर्थे त्यतनौ प्रत्ययौ भवतः। कुत्र भवः कुत्रत्यः। कुतो भवः कुतस्त्यः। अधः भवोऽधस्तनः। तत्र भवस्तत्रत्यः। ततो भवस्ततस्त्यः। अत्र भवोऽत्रत्यः। अतो भवोऽतस्त्यः। सदा भवः सदातनः। ह्यो भवो ह्यस्तनः। श्वो भवः श्वस्तनः। पुरा भवः पुरातनः। चिरं भवश्चिरन्तनः। सायं भवः सायन्तनः। प्राह्णे भवः प्राह्णतनः॥ चिरादिभ्यः त्नः ।३०। चिरपरुपरारिभ्यस्त्नो भवाद्यर्थे। चिरं भवश्चिरत्नः। परुद्भवः परुत्नः। परारि भवः परारित्नः॥ स्वार्थेऽपि ।३१। उक्ताः प्रत्ययाः स्वार्थेऽपि भवन्ति। देवदत्त एव दैवदत्तिः। चत्वारो वर्णा एव चातुर्वर्ण्यम्। चोर एव चौरः॥ अव्ययसर्वनाम्नामकच् प्राक् टेः ।३२। अव्ययस्य सर्वादेश्चान्त्यस्वरात्पूर्वोऽकच्प्रत्ययो भवति। उच्चैरुच्चकैः। नीचैर्नीचकैः। सर्व एव सर्वकः। विश्व एव विश्वकः। मया एव मयका। त्वया एव त्वयका। तदेव तकत्। यदेव यकत्। एतदेव एतकत्॥ अणीनयोर्युष्मदस्मदोस्तवकममकादि ।३३। अण् च ईनश्च अणीनौ तयोः अणीनयोः। अणीनयोः प्रत्यययोः परतो युष्मदस्मदोस्तवकममकादेशौ भवतः। आदिशब्दात् युष्माकास्माकौ। एकत्वे तवकममकौ। द्वित्वबहुत्वे च युष्माकास्माकौ। तवेदं तावकम्। ममेदं मामकम्। तवायं तावकीनः। ममायं मामकीनः। युवयोरयं यौष्माकः। आवयोरयमास्माकः। युवयोरयं यौष्माकीणः। आवयोरयमास्माकीनः। युष्माकमयं यौष्माकः। अस्माकमयमास्माकः। युष्माकमयं यौष्माकीणः अस्माकमयमास्माकीनः॥ वत्तुल्ये ।३४। तुल्यसादृश्यार्थे वत् प्रत्ययो भवति। चन्द्रेण तुल्यं चन्द्रवन्मुखम्। घटेन तुल्यं घटवदुदरम्। पटेन तुल्यं पटवत्स्थलम्॥ भावे त्वतलयण ।३५। भावे त्वश्च तलश्च यण् च ते त्वतलयणः। शब्दस्य प्रवृत्तिनिमित्तं भावः तस्मिन्भावे त्व तल् यण् इत्येते प्रत्यया भवन्ति। ब्राह्मणस्य भावो ब्राह्मणता। तलन्तस्य नित्यं स्त्रीलिङ्गत्वादाप्॥ समाहारे ता च त्रैगुण्यश्च ।३६। त्रयाणां समाहारस्त्रेता चकारात्समूहे प्रत्ययान्तरमपि। तेन हस्तिनां समूहो हास्तिकम्। धेनूनां समूहो धैनुकम्। अत्र कप्रत्ययः। तस्य णित्वादादिवृद्धिः॥ अचित्तवाचकाट्ठक् ।३७। कवचानां समूहः कावचिकम्। अपूपानां समूह आपूपिकम्। शष्कुलीनां समूहः शाष्कुलिकम्॥ कवचिन्शब्दादिक ।३८। कवचिनां समूहः कावचिकम्॥ गणिकाया ण्य ।३९। गणिकानां समूहो गाणिक्यम्॥ केदाराद्यञ् च ।४०। चकाराट्ठक्। केदाराणां समूहः कैदार्यम्। कैदारिकम्॥ युवत्यादेरण् ।४१। युवतीनां समूहो यौवतम्। भिक्षाणां समूहो भैक्षम्॥ पाशादिभ्यो यः ।४२। स च स्त्रियाम्। पाशानां समूहः पाश्या। वातानां समूहो वात्या। रथानां समूहो रथ्या। खलानां समूहः खल्या॥ खलगोरथेभ्य इनित्रकट्यचः ।४३। खलिनी। रथानां समूहो रथकट्या इत्यपि। गवां समूहो गोत्रा। गम्येत्यादिप्रयोग ऊह्या। जनानां समूहो जनता।

ब्राह्मणस्य भावो ब्राह्मण्यम् । त्वयणन्त नपुंसकम् । ब्राह्मणस्य भावो ब्राह्मणत्वम् । सुमनसो भावः सौमनस्यम् । सुभगस्य भावः सौभाग्यम् । विदुषो भावो वैदुष्यम् वसोर्व उः ( प्र० ९ सू० ७१ ) ॥ **कर्मण्यपि अण् वक्तव्यः । ४४ ।** कर्मण्यपीत्यपिशब्दात्साध्वर्थेऽण् तस्य णित्त्वं न । सामनि साधुः सामन्यः । कर्मणि साधुः कर्मण्य । सभायां साधुः सभ्यः । ब्राह्मणस्येदं कर्म ब्राह्मण्यम् । राज्ञ इदं कर्म राजन्यम्–राज्यम् । नो वा ( प्र० १६ सू० ६९ ) इति टेर्लोपः । अन्यत्रापि यण् प्रत्ययः ॥ **समानस्य वा स इत्यादेशः । ४५ ।** समाने उदरे शयितः समानोदर्यः–सोदर्यः । शतेन क्रीतः शत्यः ॥ **लोहितादेर्डिदिमन् । ४६ ।** लोहितादेर्गणाद्भावेऽर्थे इमन् प्रत्ययो भवति स इमन् डित्संज्ञो भवति । डित्त्वाट्टिलोपः । लोहितस्य भावो लोहितिमा । लोहितादेरिति अनेकस्वरात् डित् वक्तव्यः । यत्र एकस्वरस्तत्र न डित् । लोहितादेरिमन्–वैकल्पिकः । तेन लौहित्यम् लोहितत्वम् । कालस्य भावः कालिमा । लघोर्भावो लघिमा । अणोर्भावः अणिमा । गुर्वादेः ( प्र० १७ सू० १०० ) इति गुरोर्गरादेशः । गुरोर्भावो गरिमा । वरस्य भावो वरिमा ॥ **इमनि लोपः । ४७ ।** इमनि प्रत्यये परे वकारस्य लोपो भवति । स्थूलस्य भावः स्थेमा । स्थूलस्य स्थादेशः ॥ **ऋर इमनि । ४८ ।** इमनि प्रत्यये परे हसादेर्लघोर्ऋकारस्य रो भवति । पृथोर्भावः प्रथिमा । दृढस्य भावो द्रढिमा । मृदोर्भावो म्रदिमा । भृशस्य भावो भ्रशिमा । कृशस्य भावः क्रशिमा । हसादित्वाभावात् । ऋजोर्भाव ऋजिमा । लघुत्वाभावात् । कृष्णस्य भावः कृष्णिमा । सयोगपूर्वकत्वान्न लघुः । बहोर्भाव इति विग्रहे । **बहोरिलोपो भू च बहोः । ४९ ।** बहोरुत्तरेषामिमनादीनामिकारस्य लोपो भवति बहोः स्थाने भू चादेशः । भूमा ॥ **अस्त्यर्थे मतुः । ५० ।** नाम्नो मतुः प्रत्ययो भवति अस्यास्मिन्वास्तीत्येतस्मिन्नर्थे । उकारो नुम्विधानार्थः । गौरस्यास्तीति गोमान्–गोमती ॥ **फलबर्हरथेभ्यइनेनौ वा वक्तव्यौ । ५१ ।** फलमस्यास्तीति फलिनः–फली । बर्हमस्यास्तीति बर्हिणः–बर्ही । रथोऽस्यास्तीति रथिनः–रथी ॥ **बलवाताभ्यामूलः । ५२ ।** बलूलः । वातूलः ॥ **वातातिसाराभ्यां किन् । ५३ ।** वातकी । अतिसारकी ॥ **ऊर्णाहंशुभंभ्यो युः । ५४ ।** अस्त्यर्थे । ऊर्णायुः । अहंयुः । शुभंयुः ॥ **अर्णःकेशयोर्वः । ५५ ।** अर्णसः सलोपश्च । अर्णवः । केशवः ॥ **शंकंभ्यां बभयुस्तितुतयसः । ५६ ।** आभ्यामेते प्रत्यया स्युरस्त्यर्थे । शं विद्यते यस्यासौ शबः । शभः । शंयुः । शंतिः । शंतुः । शंतः । शंयः । कं विद्यते यस्यासौ कबः । कभः । कंयुः । कंतिः । कंतुः । कंतः । कंयः । इत्यादि ॥ **लोमादिभ्यः शः । ५७ ।** लोमशः ॥ **पामादेर्नः । ५८ ।** पामनः । अङ्गना ॥ **पिच्छादेरिलच् । ५९ ।** पिच्छिलः ॥ **फेनादिभ्यइलच् । ६० ।** फेनिलः ॥ **तुन्दिवलिवटिभ्यो भः । ६१ ।** तुन्दिभः । वलिभः । वटिभः ॥ **कृष्यादिभ्यो वलच् दीर्घश्च । ६२ ।** कृषीवलः ॥ **प्रज्ञार्चाश्रद्धावृत्तिभ्योऽण् । ६३ ।** प्रज्ञाऽस्यास्तीति प्राज्ञः । आर्चः । श्रा-

ट: । वार्त्तः ॥ **शृङ्गवृन्दाभ्यामारकन्** । ६४ । प्रशस्तं शृङ्गमस्यास्तीति शृङ्गारकः । प्रशस्तं वृन्दमस्यास्तीति वृन्दारकः । **मध्वादे रः** । ६५ । मधुरः । मुखरः । शुषिरः । रत्नवानित्यर्थः । कुञ्जरः । कुञ्जो हस्तिहनुः ॥ **सिध्मादेर्लः** । ६६ । सिध्मास्यास्तीति सिध्मलः । चूडास्यास्तीति चूडालः ॥ **अइकौ च मत्वर्थे** । ६७ । मत्वर्थे अइकौ प्रत्ययौ भवतः । वैजयन्ती पताका यस्यासौ वैजयन्तः । माया विद्यते यस्यासौ मायिकः ॥ **मान्तोपधाद्वतिनौ** । ६८ । मान्तोपधात् वतिनौ । मश्च अश्च मौ अन्तश्च उपधा च अन्तोपधे मौ अन्तोपधे यस्यासौ मान्तोपधस्तस्माद्वतिनौ मकारान्तान्मकारोपधादकारान्तादकारोपधाच्च वतिनौ प्रत्ययौ भवतः अस्त्यर्थे । मघोऽस्यास्तीति मघवान् ॥

**श्रियां यशसि सौभाग्ये योनौ कान्तौ महिम्नि च ॥**
**सूर्ये संज्ञाविशेषे च मृगाङ्केऽपि भगः स्मृतः ॥ ९४ ॥**

भग भाग्य विद्यते यस्यासौ भगवान् । लक्ष्मीरस्यास्तीति लक्ष्मीवान् । पुत्रोऽस्यास्तीति पुत्रवान् । धनमस्यास्तीति धनवान्-धनी । छत्रमस्यास्तीति छत्रवान्-छत्री । इनौ शौ सौ (प्र० ९ सू० १९) दण्डो विद्यते यस्यासौ दण्डवान्-दण्डी । क्षेत्रं विद्यते यस्यासौ क्षेत्रवान्-क्षेत्री । विद्यास्यास्तीति विद्यावान् । दृषदो विद्यन्ते यस्यासौ दृषद्वान् दृषद्वती भूमिः । शृनित. (प्र० १४ सू० १७) यशोऽस्यास्तीति यशस्वान् किं विद्यते यस्यासौ किंवान् । कामो विद्यते यस्यासौ कामी । कृमयो विद्यन्ते यस्यासौ कृमिवान् । शमोऽस्यास्तीति शमी । दमोऽस्यास्तीति दमी ॥ **तडिदादिभ्यश्च** । ६९ । तडिदादिभ्यः शब्देभ्यो वतुः प्रत्ययो भवति । तडिद्विद्यते यस्यासौ तडित्वान् । भानि नक्षत्राणि विद्यन्ते यस्यासौ भवान् । यशस्वान् । महो विद्यते यस्यासौ महस्वान् ॥ **तकारान्तस्य सकारान्तस्य हसाद्भावस्यार्थे प्रत्यये परे अपदान्तता वक्तव्या** । ७० । यस्यादौ प्रत्ययमाने परे सर्वेषामपदान्तता भवति ईये परे पदान्तता । तेन भवदीयम् ॥ **एतदिकयत्तद्भ्यः परिमाणे वतुः** । ७१ । एतदिकयत्तद्भ्यः शब्देभ्यः परिमाणेऽर्थे वतुः प्रत्ययो भवति ॥ **यत्तदोरा** । ७२ । यत्तदोष्टेरात्वं भवति वतौ परे । यत्परिमाणमस्येति यावान् तावान् ॥ **किमः किर्यश्च** । ७३ । किम्शब्दस्य किरादेशो भवति । वतोर्वकारस्य यकारादेशो भवति । किंपरिमाणमस्येति कियान् ॥ **आ इश्चैतदो वा** । ७४ । एतदष्टेरात्वं भवति वतौ परे । यस्मिन्पक्षे आत्वं न तस्मिन्पक्षे इशादेशः स्यात् । शकारः सर्वादेशार्थः । एतत्परिमाणमस्येति एतावान् । इयान् । एतदष्टेर्वा आत्वम् । यस्मिन्पक्षे आत्वं न तत्र एतद इशादेशः । वकारादवतोर्वकारस्य यकारः । वाशब्दोऽनुक्तसमुच्चयार्थः । तेन इदमो वतुः प्रत्ययः । इदम इश् वकारादवतोर्वकारस्य यश्चेति वाच्यम् । इदं परिमाणं यस्य स इयान् । शकारः सर्वादेशार्थः ॥ **तुन्दादेरिलः** । ७५ । तुन्दादिगणात् इलः प्रत्ययो भवति । प्रवृद्धं तुन्दं यस्यासौ तुन्दिलः । उदरिलः ॥ **औन्नत्ये दन्तादुरः** । ७६ । औन्नत्येऽर्थे वाच्ये सति दन्तशब्दादुरः प्रत्ययो भवति । उन्नता दन्ता यस्यासौ द-

न्तुर ॥ **श्रद्धादेर्लु** । ७७ । श्रद्धा विद्यते यस्यासौ श्रद्धालु । कृपा विद्यते यस्यासौ कृपालु । मायालु । दयालु ॥ **सिध्मादेर्ल** । ७८ । सिध्मल । फेहिल ॥ **अस्मायामेधास्रग्भ्योऽस्त्यर्थे विनिर्वक्तव्य** । ७९ । तपो विद्यते यस्यासौ तपस्वी । यशस्वी । मायावी । मेधावी । स्रग् विद्यते यस्यासौ स्रग्वी ॥ **वाचो ग्मिनि** । ८० । वाच्शब्दात् ग्मिनि प्रत्ययो भवति अस्त्यर्थे। ग्मिनो गकारो व्यवधानार्थं तेन ञमे ञमा वा ( प्र० ४ सू० २ ) इत्यस्य प्राप्ति । प्रशस्ता वाक् विद्यते यस्यासौ वाग्मी ॥ **एकादाकिनिच्चासहाये** । ८१ । न विद्यते एक सहायो यस्य स एकाकी । स्त्री चेत् एकाकिनी ॥ **आलाटौ कुत्सितभाषिणि** । ८२ । कुत्सितभाषिण्यर्थ वाच्य इति आलाटौ प्रत्ययौ भवत । आलप्रत्ययो बहुभाषित्वे कुत्सितभाषित्वे च आटप्रत्ययस्तु केवलकुत्सितभाषित्वे । कुत्सितावाक् विद्यते यस्यासौ वाचाल । एव वाचाट ॥ **ल समाहारप्रकृष्टयो** । ८३ । नाम्न समाहारप्रकृष्टयोर्विषये ल प्रत्ययो भवति। क्लेशस्य समूह प्रकृष्ट क्लेशो वा क्लेशल ॥ **ईषदपरिसमाप्तौ कल्पदेश्यदेशीया** । ८४ । ईषदपरिसमाप्त सर्वज्ञ इति सर्वज्ञकल्प । ईषदपरिसमाप्त प टुरिति पटुदेशीय । ईषदून कविरिति कविदेश्य । कविदेशीय ॥ **प्रशसाया रूप** । ८५ । प्रशसाया रूप प्रत्ययो भवति । प्रशस्तो वैयाकरणो वैयाकरणरूप ॥ **पाश कुत्सायाम्** । ८६ । कुत्साया वाच्याया सत्या पाश प्रत्ययो भवति । कुत्सितो वैयाकरणो वैयाकरणपाश ॥ **भूतपूर्वे चरट्** ।८७। भूतपूर्वेऽर्थे वाच्ये सति चरट् प्रत्ययो भवति । पूर्व भूत इति भूतपूर्व । पूर्व भूत इति भूतचर । पूर्व दृष्ट इति दृष्टचर । स्त्री चेद्दृष्टचरी । षुब्रित ( प्र० १४ सू० १४ ) ॥ **प्राचुर्यविकारप्राधान्यादिषु मयट् प्रत्ययो भवति** । ८८ । **गो पुरीषे च** । ८९ । गो पुरीष गोमयम् । अन्न प्रचुर यस्मिन्सौ अन्नमयो यज्ञ । मृदो विकारो मृन्मयो घट । स्त्री प्रधान यस्यासौ स्त्रीमयो जाल्म । अ दिशब्दात्स्वरूपार्थे मयट । अमृतस्वरूपोऽमृतमयश्चन्द्र ॥ **तदधीते वेद वेत्यत्राण्वक्तव्य** । ९० । अधीतेऽथवा वेद इत्यत्रार्थे द्वितीयान्तान्नाम्नोऽण् वक्तव्य । व्याकरणमधीते वेद वा वैयाकरण । द्वारि नियुक्तो दौवारिक । स्वस्ति इत्याह सौवस्तिक । न्यग्रोधस्येद नैयग्रोधम् ॥ **व्यासादेरिक** । ९१ । व्यासस्यापत्य वैयासकि ॥ **सुधातुरकड् च** । ९२ । सुधातुरिञ् स्यादक डादेशश्च । सुधातुरपत्य सौधातकि । शोभनाऽश्व स्वश्व त वेदोति सौरश्व । न्याये कुशलो नैयायिक । **न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्** । ९३ । सन्धिजौ य्वौ सन्धिय्वौ तयो सन्धिजयकारवकारयो सबन्धिन स्वरस्य वृद्धिर्न भवति किन्तु तयोर्वृ डागमो भवति । इट उट् इत्येतावागमौ भवत । कि कृत्वा वर्णविश्लेष कृत्वा । यकारात्पूर्व इकार वकारात्पूर्व उकार । पश्चादाद स्वरस्य ञ्णिति च वृद्धि । ( प्र० १७ सू० २ ) **चटकादैरण्** । ९४ । चटकस्यापत्य चाटकैर ॥ **कल्याण्यादीनामिनेय** ।९५। कल्याण्या अपत्य काल्याणिनेय ॥ **इतो**

**जातार्थे** । ९६ । जातार्थे इत प्रत्ययो भवति । लज्जा सजाता यस्यासौ लज्जित । प्रपा सजाता यस्यासौ प्रपित । क्षुधा सजाता यस्यासौ क्षुधित ॥ **तरतमयस्विष्ठा प्रकर्षे** । ९७ । अतिशयेऽर्थे तर तम ईयसु इष्ठ इत्येते प्रत्यया भवन्ति । अतिशयेन कृष्ण कृष्णतर । अतिशये कृष्ण कृष्णतम । अतिशयेन शुक्ल शुक्लतर शुक्लतम ॥ **ईयस्विष्ठौ डितावीति वक्तव्यौ** । ९८ । अतिशयेन लघुर्लघीयान् अति० लघुर्लघीयसी । अति० लघुर्लघिष्ठ । अति० पापी इति पापीयान् । अति० पापी इति पापीयसी । अति० पाप इति पापिष्ठ. ॥ **विन्मतुवतुलुप्रत्ययानां लोपश्च इष्ठादौ** । ९९ । मतिरियत्ते यस्यासौ मतिमान् । अति० मतिमान् इति मतिष्ठ । अति० मायावी इति मायिष्ठ । अति० धनवान् इति धनिष्ठ । अति० कर्ता इति करिष्ठ ॥ **गुर्वादेरिष्ठेमेयस्सु गरादिष्टचलोपश्च** । १०० । इष्ठेमेयस्सु परतो गुर्वादेर्गरादिरादेशो भवति टेरलोप । गुरोर्गरादेश । अ० गुरुर्गरीयान्–गरीयसी–गरिष्ठ । गुरोर्भावो गरिमा । प्रियस्य प्रादेश । अ० प्रिय इति प्रेयान्-प्रेयसी-प्रेष्ठ । लोहितादेर्डिंदिमन् (प्र० १७ सू० ४६) प्रेमा । स्थूलस्य स्थवादेश । अ० स्थूल स्थवीयान्-स्थवीयसी-स्थविष्ठ –स्थेमा । स्थिरस्य स्थादेश । स्थेयान्-स्थेयसी-स्थेष्ठ -स्थेमा । बहुशब्दस्य बहादेश । अ० बहु बहीयान्–बही०सी–बहिष्ठ । त्रपशब्दस्य त्रपादेश । त्रपिष्ठ । ह्रस्वस्य ह्रसादेश । ह्रसिष्ठ । वृद्धस्य वर्षादेश । अ० वृद्ध० वर्षीयान्–वर्षीयसी–वर्षिष्ठ । अन्तिक शब्दस्य नेदसाधौ । अ० अन्तिक नेदीयान्–नेदीयसी–नेदिष्ठ । अ० बाढ साधीयान्–साधीयसी–साधिष्ठ । दूरस्य दवादेश । अ० दूर० दवीयान्-दवीयसी-दविष्ठ । युवन्शब्दस्य यवादेश । अ० युवा यवीयान्-यवीयसी-यविष्ठ । अल्पस्य कनादेश । अ० अल्प कनीयान्-कनीयसी-कनिष्ठ ॥ **ईलोपो ज्याशब्दादीयस** । १०१ । ज्याशब्दादीयस ईकारस्य लोपो भवति वृद्धस्य ज्यादेश० । अ० वृद्ध इति ज्यायान्–ज्यायसी–ज्येष्ठ –ज्येमा । उत्तमस्य वरादेश । अ० उत्तम इति वरीयान्–वरीयसी–वरिष्ठ –वरिमा । दीर्घस्य द्राघादेश । अ० दीर्घ इति द्राघीयान्–द्राघीयसी–द्राघिष्ठ –द्राघिमा । प्रशस्यस्य श्रादेश । अ० प्रशस्य श्रेयान्–श्रेयसी–श्रेष्ठ –श्रेमा ॥ **बहोरिष्ठे यि** । १०२ । बहुशब्दात्परस्य इष्ठे वर्तमानस्येकारस्य यिर्भवति बहोर्भूरादेश । अ० बहुरिति भूयान्-भूयसी-भूयिष्ठ -भूमा । क्षिप्रस्य क्षेपादेश । अ० क्षिप्र क्षेपीयान्- क्षेपीयसी-क्षेपिष्ठ । क्षुद्रस्य क्षोदादेशः । अ० क्षुद्र क्षोदीयान्-क्षोदीयसी-क्षोदिष्ठ ॥ **तिङोऽव्ययादाख्यातात्च तरतमयोराम्वक्तव्य** । १०३ । अ० कुत कुतस्तरां करोति । अ० कुत इति कुतस्तराम् तेषामाम्भवतराम् । अ० उच्चै रिति उच्चैस्तरां गच्छति । अ० उच्चैरिति उच्चैस्तमाम् । नीचैस्तराम्–नीचैस्तमाम् [illegible]तराम् [illegible]तमाम् । अ० पचति इति पचतितराम्-पचतितमाम् । अ० पचति इति पचतितराम्-पचतितमाम् ॥ **परिमाणे द्वयसादय** । १०४ । परिमाणेऽर्थे षष्ठ्यन्ते सति द्वयस दघ्न मात्र इत्येते प्रत्यया भवन्ति । जानु परिमाणं यस्य त-

जानुदघ्नं जलम् । शिरः परिमाणं यस्य तच्छिरोद्वयसम् । पुरुषः परिमाणं यस्य तत्पुरुषमात्रं जलम् ॥ **द्वयोर्बहूनां चैकस्य निर्धारणे किमादिभ्यो डतरडतमौ वक्तव्यौ** । १०५ । कतरो भवतोर्मध्ये काण्वः । क इति कतरः । कतमो भवतां तान्त्रिकः । क इति कतमः । भवतोर्यतरस्तान्त्रिकस्ततरः उपैतु । य इति यतरः । स इति ततरः । यतमः । ततमः ॥ **सङ्ख्येयविशेषावधारणे द्वित्रिभ्यां तीयः** । १०६ । द्वयोः सङ्ख्यापूरकः द्वितीयः ॥ **त्रेः सम्प्रसारणं सस्वरस्य** । १०७ । त्रयाणां सङ्ख्यापूरकः तृतीयः ॥ **षट्चतुरोस्थः** । १०८ । षण्णां सङ्ख्यापूरकः षष्ठः । ष्टुभिः ष्टुः ( प्र० ४ सू० ८ ) चतुर्णां सङ्ख्यापूरकः चतुर्थः ॥ **पञ्चादेर्मः** । १०९ । पञ्चमः । सप्तमः । अष्टमः । नवमः । दशमः इत्यादि ॥ **एकादशादेर्डः** । ११० । एकेनाधिका दश एकादश एकादशानां सङ्ख्यापूरकः एकादशः एकादशी ॥ **द्व्यष्टैकानां द्वात्रयोऽष्टैकाः** । १११ । प्राक्शतादनशीतिबहुव्रीह्योरिति वक्तव्यम् । द्वादशः द्वादशी । त्रयोदशः त्रयोदशी । चतुर्दशः चतुर्दशी । सप्तदशः सप्तदशी । अष्टादशः अष्टादशी ॥ **विंशत्यादेर्वा तमट्** । ११२ । विंशतेः सङ्ख्यापूरकः विंशतितमः । पक्षे ॥ **विंशतेस्तिलोपः** । ११३ । विंशः ॥ **चत्वारिंशदादौ वा** । ११४ । द्विचत्वारिंशत् द्वाचत्वारिंशत् । त्रिचत्वारिंशत् त्रयश्चत्वारिंशत् । अष्टचत्वारिंशत् अष्टाचत्वारिंशत् । अनशीताविति विशेषणाद्व्यशीतिः । त्र्यशीतिः । अष्टाशीतिः ॥ **शतादेर्नित्यम्** । ११५ । शततमः ॥ **कतिकतिपयाभ्यां थः** । ११६ । कतिथः । कतिपयथः ॥ **सङ्ख्यायाः प्रकारे धा** । ११७ । सङ्ख्यावाचकाच्छब्दात्प्रकारेऽर्थे वाच्ये सति धाप्रत्ययो भवति । द्विप्रकारं द्विधा त्रिप्रकारं त्रिधा । चतुष्प्रकारं चतुर्धा ॥ **गुणोऽण् च** । ११८ । धाप्रत्ययान्तस्य शब्दस्य गुणो वा भवति । अण् च वा भवति । द्विप्रकारं द्वैधा । त्रिप्रकारं त्रेधा । धाप्रत्ययान्तात्स्वार्थेऽण् । द्विधा एव द्वैधम् । त्रैधम् ॥ **एकात् ध्यमुञ्वा** । ११९ । ऐकध्यम् एकधा ॥ **क्रियाया आवृत्तौ कृत्वसुच्** । १२० । पञ्चवारान्भुङ्क्त इति पञ्चकृत्वो भुङ्क्ते । सप्तकृत्वः ॥ **द्वित्रिचतुर्भ्यः सुः** १२१ । द्वित्रिचतुःशब्देभ्यः सुप्रत्ययो भवति । द्विवारमिति द्विः । त्रिवारमिति त्रिः । चतुः । द्विरुक्तम् ॥ त्रिरुक्तम् । **बह्वादेः कारकाच्छस्** । १२२ । बह्वादिशब्दाच्छस्प्रत्ययो भवति । बहुवारानिति बहुशः । अल्पशः । शतशः । सहस्रशः । लक्षशः । कोटिशः इत्यादि । बहुशः धनं ददाति । कारकात्किम् । बहूनां स्वामी ॥ **तयायडौ सङ्ख्याया अवयवे** । १२३ । सङ्ख्याया अवयवे वाच्ये सति तयायडौ प्रत्ययौ भवतः । द्वौ अवयवौ यस्य तद्द्वितयम् । त्रितयम् । द्वौ अवयवौ यस्य तद्द्वयम् । त्रयम् । चतुष्टयी ॥ **अल्पार्थे कुटीशमीशुण्डाभ्यो रः** । १२४ । अल्पा कुटी इति कुटीरः । अल्पा शमी इति शमीरः । अल्पा शुण्डा इति शुण्डारः ॥ **स्त्रीपुंसाभ्यां नञ्स्नञौ** । १२५ । स्त्रैणम् । पौंस्नम् । शेषा निपात्या यत्यादयः । आदिशब्दात् या सङ्ख्या येषां ते यति । सा सङ्ख्या येषां ते तति । का सङ्ख्या येषां कति । लोकाच्छेषस्य सिद्धिः ॥ इति सारस्वतव्याकरणे तद्धितप्रक्रिया समाप्ता ॥ १७ ॥

॥ श्रीः ॥

# सारस्वते द्वितीयवृत्तौ

## परस्मैपदिप्रक्रिया।



लक्ष्मीनृसिंहौ प्रणिपत्य काश्यां बुधांश्च पद्मा-
करभट्टमुख्यान् ॥ सारस्वतीयां च तिबादिवृ-
त्तिं क्रमाल्लिखेयं गणपप्रसादात् ॥ १ ॥

अथाख्यातप्रक्रिया निरूप्यते ॥ **धातोः** । १ । वक्ष्यमाणः प्रत्ययो धातोर्ज्ञेयः ॥ **भ्वादिः** । २ । भू सत्तायामित्यादि शब्दो धातुसंज्ञो भवति । स च त्रिविध आत्मनेपदी परस्मैपद्युभयपदी चेति । **आदनुदात्तङितः** । ३ । अनुदात्तेतो ङितश्च धातोरादित्यात्मनेपदं भवति ॥ **ञित्स्वरितेत उभे** । ४ । ञितः स्वरितेतश्च धातोरुभे आत्मनेपदपरस्मैपदे भवतः । आत्मगामि चेत्फलमात्मनेपदं परगामि चेत्फलं परस्मैपदं प्रोक्तव्यम् । अन्वर्थादनुगतार्थसंज्ञाबलत्वात् ॥ **परतोऽन्यत्** । ५ । पूर्वोक्तनिमित्तद्वयादन्यस्माद्धातोः परस्मैपदं भवति ॥ **नव परस्मैपदानि** । ६ । तिबादीनामष्टादशसंख्याकानामाद्यानि नव वचनानि परस्मैपदसंज्ञानि भवन्ति । पराण्यात्मनेपदानि भवन्ति ॥ **वर्तमाने** । ७ । प्रारब्धापरिसमाप्तक्रियोपलक्षितः कालो वर्तमानस्तस्मिन्वर्तमाने चाभिधेये तिबादयः प्रत्यया भवन्ति । अस्य तिबादेः पाणिनीयाना लडिति संज्ञा ॥

### ॥ परस्मैपदानि ॥

| | एकवचनानि । | द्विवचनानि । | बहुवचनानि । |
|---|---|---|---|
| १ | तिप् | तस् | अन्ति |
| २ | सिप् | थस् | थ |
| ३ | मिप् | वस् | मस् |

### ॥ आत्मनेपदानि ॥

| | | | |
|---|---|---|---|
| १ | ते | आते | अन्ते |
| २ | से | आथे | ध्वे |
| ३ | ए | वहे | महे |

**नाम्नि च युष्मदि चास्मदि च भागैः** । ८ । नामादिषु पदेषु प्राप्तेषु सत्सु त्रिभिर्भागैरेते प्रत्यया भवन्ति । ते च त्रयो भागा यथाक्रमं प्रथममध्यमोत्तमसंज्ञा भवन्ति । नाम्नि प्रयुज्यमाने चशब्दादप्रयुज्यमानेऽपि प्रथमपुरुषः युष्मदि मध्यमः तथैवास्मद्युत्तमः । भू सत्तायाम् ॥ **कर्तरि पंच** । ९ । प च परस्मैपदं कर्तरि भवति चकारादात्मनेपदमपि । तत्र भू इत्येतस्मात्परस्मैपदिनोऽभिधारणात्कर्तरि तिबादयो योज्यन्ते । तत्रैकत्वविवक्षायां प्रथमपुरुषैकवचने भू तिप् इति स्थिते । पकारः पित्कार्यार्थः ॥ **अप् कर्तरि** । १० । धातोरप्प्रत्ययो भवति कर्तरि विहितेषु त्यादिषु चतुर्षु दिप्पर्यन्तेषु परतः । पकारो विकरणभेदज्ञापनार्थो गुणार्थश्च । प्रकृतिप्रत्ययान्तः पतति यः प्रत्ययः स विकरणः ॥ **गुणः** । ११ । धातोरन्त्यभूतस्य नामिनो गुणो भवति । अवादेशः । भवति । द्व्यर्थविवक्षायां तस् ॥ **अपित्तादिर्ङित्** । १२ । पकारेतन्तादेकं च विहायान्यः प्रत्ययो ङित्संज्ञो भवति । अन्य इति किम् । इडागमवर्जितो दशलकारान्तः प्रत्ययो ङित् । आदिशब्दात्सीसियड्ग्रहणम् ॥ **क्ङित्यद्धुसि** । १३ । किति ङिति च परे धातोर्गुणो भवति द्धुसं वर्जयित्वा । कृताद्विर्वचनस्य उसि परे तु गुणो भवति । ततो ङित्वात्तसि गुणप्रतिषेधेऽप्प्रत्ययनिमित्तो गुणो भवत्येव । सोर्विसर्गः ( ह० १ प्र० ६ सू० ४ ) भवतः । बह्वर्थविवक्षायां भव अन्ति इति स्थिते ॥ **अदे** । १४ । अकारस्य लोपो भवति अकारे एकारे च परे । अदे इत्यत्र अकारैकारौ तिबादिप्रत्ययस्थावित्यर्थः । भवन्ति । भवसि । भवथः । भवथ ॥ **म्वोरा** । १५ । अकारस्य आत्वं भवति वकारे मकारे च परे । भवामि । भवावः । भवामः । स राजा धार्मिको भवति । त्वं साधुर्भवसि । अहमात्मनिष्ठो भवामीत्यादि प्रयोक्तव्यम् ॥ **अव्यवधानाच्च पुरुषविशेषः** । १६ । यस्य क्रियापदेन व्यवधानं नास्ति तत्र पुरुषविशेषः । अत्र व्यवधानं मूलस्थं ग्राह्यं न तु वाक्यस्थम् । सूत्रक्रमेण पुरुषप्रयोगो भवति । साधु स च त्वं च भवथ । अहं त्वं स च पण्डिता भवामः । भूङ् प्राप्तौ आत्मनेपदी । तस्मात्तेप्रभृतीनि नव वचनानि प्रयोक्तव्यानि । अनुगारं भवते ॥ **आदाथ ईः** । १७ । आकारात्परस्यात् आथुसम्बन्धिन आकारस्य ईकारो भवति भवेते । भवन्ते । भवसे । भवेथे । भवध्वे । अदे । भवे । भवावहे । भवामहे । स श्रियं भवते ॥ **विधिसंभावनयोः** । १८ । विधिः कर्तव्यार्थोपदेशः । संभावनं कल्पनमूह्स्तत्र यादादयः प्रत्यया भवन्ति । लिङिति चैषां संज्ञा पाणिनीयानाम् ॥

## ॥ परस्मैपदानि ॥

| | एकवचनानि । | द्विवचनानि । | बहुवचनानि । |
|---|---|---|---|
| १ | यात् | याताम् | युस् |
| २ | यास् | यातम् | यात |
| ३ | याम् | याव | याम |

## ॥ आत्मनेपदानि ॥

| | | | |
|---|---|---|---|
| १ | ईत | ईयाताम् | ईरन् |
| २ | ईथास् | ईयाथाम् | ईध्वम् |
| ३ | ईय | ईवहि | ईमहि |

**याई** । १९ । अकारात्परो याई भवति । अइए (वृ० १ वृ० २ सू० ११) भवेत् भवेताम् भवेयुः ॥ **युस इट्** । २० । अकारात्परस्य युस इडागमो भवति । भवेः । भवेतम् । भवेत ॥ **यामियम्** । २१ । अकारात्परो यामिय भवति । भवेयम् भवेव भवेम । शिष्यो गुरुशुश्रूषको भवेदिति विधिः । भवेदसौ वेदपारगो ब्राह्मणत्वादिति सम्भावनम् । भवेत भवेयाताम् भवेरन् । भवेथाः भवेयाथाम् भवेध्वम् । भवेय भवेवहि भवेमहि । अह हरिभक्तिः भवेय ॥ **आशीःप्रेरणयोः** । २२ । अप्राप्तप्रार्थनमाशीः परस्येष्टार्थशासनं वा । प्रेरणं प्रवर्तनं तत्र तुवादयः प्रत्यया भवन्ति ॥ एषां सज्ञा लोट् ॥

## ॥ परस्मैपदानि ॥

| | एकवचनानि । | द्विवचनानि । | बहुवचनानि । |
|---|---|---|---|
| १ | तुप् | ताम् | अन्तु |
| २ | हि | तम् | त |
| ३ | आनिप् | आवप् | आमप् |

## ॥ आत्मनेपदानि ॥

| | | | |
|---|---|---|---|
| १ | ताम् | आताम् | अन्ताम् |
| २ | स्व | आथाम् | ध्वम् |
| ३ | ऐप् | आवहैप् | आमहैप् |

**तुह्योस्तातङाशिषि वा वक्तव्यः** । २३ । भवतु भवतात् भवताम् भवन्तु ॥ **अतः** । २४ । अकारात्परस्य हेर्लुग्भवति । न [illegible] तातङः । तातङिति ङित्करणं गुणवृद्धिप्रतिषेधार्थं नत्वन्त्यादेशार्थम् । भव-भवतात् भवतम् भवत । भवानि भवाव भवाम । आयुष्मान् भवतु भवान् । अध्ययनायोद्यतो भव सौम्य । भवताम् भवेताम् भवन्ताम् । भवस्व भवेथाम् भवध्वम् । भवै भवावहै भवामहै । हरि भवस्व [illegible] त्वम् ॥ **अनद्यतनेऽतीते** । २५ । अतीताया रात्रेर्यामद्वयादर्वाग्यावदागामिन्याः प्रथमयामद्वयं सोऽद्यतनस्ततोऽन्योऽनद्यतनस्तस्मिन्ननद्यतनेऽतीते काले दिवादयः प्रत्यया भवन्ति एषां सज्ञा लङ् ॥

## ॥ परस्मैपदानि ॥

| | एकवचनानि । | द्विवचनानि । | बहुवचनानि । |
|---|---|---|---|
| १ | दिप् | ताम् | अन् |
| २ | सिप् | तम् | त |
| ३ | अमिप् | व | म |

## ॥ आत्मनेपदानि ॥

| | | | |
|---|---|---|---|
| १ | तन् | आताम् | अन्त |
| २ | थास् | आथाम् | ध्वम् |
| ३ | ई | वहि | महि |

दिसिमि इत्येतेषामिकार उच्चारणार्थः । ततो नकार इण्तन्यकर्तरीति विशेषणार्थः । धातसाने ( पृ० १ प्र० ९ सू० ८ ) इति दकारस्य तकारः ॥ दिबा-द्यावट् । २६ । दिवादौ परे धातोरडागमो भवति । अभवत् अभवताम् अभवन् । अभवः अभवतम् अभवत । अभवम् अभवाव अभवाम । श्वोऽभवत्पुत्रः । अ-भवत अभवेताम् अभवन्त । अभवथाः अभवेथाम् अभवध्वम् । अभवे अभवावहि अभवामहि । स राज्यमभुवत ॥ परोक्षे । २७ । धातोः परोक्षेऽतीते काले णवा-दयः प्रत्यया भवन्ति । एषा संज्ञा लिट् ॥

## ॥ परस्मैपदानि ॥

| | एकवचनानि । | द्विवचनानि । | बहुवचनानि । |
|---|---|---|---|
| १ | णप् | अतुस् | उस् |
| २ | थप् | अथुस् | अ |
| ३ | णप् | व | म |

## ॥ आत्मनेपदानि ॥

| | | | |
|---|---|---|---|
| १ | ए | आते | इरे |
| २ | से | आथे | ध्वे |
| ३ | ए | वहे | महे |

**णादिः कित् । २८ ।** अपित् णादि किद्वति ॥ **द्विश्च । २९ ।** णवादिसंयोगे धातोर्द्विर्वचनम् ॥ **स स्वरादिर्द्विरादिः । ३० ।** सस्वरायोऽयमायोऽद्विरुक्तो द्विर्भवति । भू भू णप् इति स्थिते । णकारो वृद्ध्यर्थः । पकारः पित्कार्यार्थः ॥ **आभ्वोर्णादौ । ३१ ।** आ अश्च भुश्च आभ्वौ तयोः पूर्वस्याकारस्य भूशब्दस्य च आकारो भवति णादौ सति ॥ **ह्रस्वः । ३२ ।** पूर्वसम्बन्धिनो दीर्घस्य ह्रस्वो भवति ॥ **झपानां जबचपाः । ३३ ।** पूर्वसम्बन्धिनां झपानां जबाश्चपाश्च भवन्ति । झ-ढधघभानां जडदगबा भवन्ति । खफछठथानां चटतकपा भवन्ति ॥ **भुवो वुक् । ३४ ।** भुवो वुगागमो भवति णादौ स्वरे परे । बभूव बभूवतुः बभूवुः ॥ **क्रादि-र्णादिः । ३५ ।** डुकृञ् करणे । सृ गतौ । डुभृञ् धारणपोषणयोः । वृञ् वरणे । द्रु गतौ । श्रु श्रवणे । स्रु प्रस्रवणे । ष्टुञ् स्तुतौ । कृसभृवृद्रुश्रुस्रुस्तु इत्येतस्मात्परस्य वसादेर्णादेर्गणस्येट् न भवत्यन्यस्माद्भवतीति नियमादनिटोऽपीडागमः । यदागमा-स्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते इति न्यायादिटोऽपि णवाद्यत्वेन थपि वुक् । बभूविथ बभूवथुः बभूव । बभूव बभूविव बभूविम । बलिर्बलवान् बभूव ।

बभूवे बभूवाते बभूविरे । बभूविषे बभूवाथे । नामिनोऽचतुर्णां धो ढः ।३६ । नाम्यन्ताद्धातोरुत्तरस्य तिबादिचतुष्कव्यतिरिक्तस्य लिङो लुङ्लिटोश्च धस्य ढो भवति । अत्र सेटो हलाढेति वक्तव्यम् । बभूविध्वे बभूविढ्वे । बभूवे बभूविवहे बभूविमहे । रामो राज्यं बभूवे ॥ आशिषि । ३७ । धातोराशिषि यादादयो भवन्ति । एवं सत्ता लिङ् ॥

## ॥ परस्मैपदानि ॥

| | एकवचनानि । | द्विवचनानि । | बहुवचनानि । |
|---|---|---|---|
| १ | यात् | यास्ताम् | यासुस् |
| २ | यास् | यास्तम् | यास्त |
| ३ | यासम् | यास्व | यास्म |

## ॥ आत्मनेपदानि ॥

| | | | |
|---|---|---|---|
| १ | सीष्ट | सीयास्ताम् | सीरन् |
| २ | सीष्ठाम् | सीयास्थाम् | सीध्वम् |
| ३ | सीय | सीवहि | सीमहि |

आशीर्वादार्थे: प कि द्विति वक्तव्यम् । ३८ । ततो गुणाभाव । भूयात् भूयास्ताम् भूयासु । भूयाः भूयास्तम् भूयास्त । भूयासम् भूयास्व भूयास्म । सः श्रीमान् भूयात् । भू सीष्ट इति स्थिते ॥ सिसतासीस्यपामिट् ।३९ । धातोः परेषां सि स तासी स्यप् इत्येतेषामिडागमो भवति । गुणावादेशौ । षत्वम् । भविषीष्ट भविषीयास्ताम् भविषीरन् । भविषीष्ठा भविषीयास्थाम् भविषीध्वम् । सीध्वंप्रयोगेऽपि ढत्वम् । भविषीढ्वम् । भविषीय भविषीवहि भविषीमहि । हरेर्भक्ति भविषीष्ट ॥ श्वस्तने । ४० । श्व आगतेऽह्नि भाविन्यर्थे तादयो भवन्ति । एवं सत्ता लुट् ॥

## ॥ परस्मैपदानि ॥

| | एकवचनानि । | द्विवचनानि । | बहुवचनानि । |
|---|---|---|---|
| १ | ता | तारौ | तारस् |
| २ | तासि | तास्थस् | तास्थ |
| ३ | तास्मि | तास्वस् | तास्मस् |

## ॥ आत्मनेपदानि ॥

| | | | |
|---|---|---|---|
| १ | ता | तारौ | तारस् |
| २ | तासे | तासाथे | ताध्वे |
| ३ | ताहे | तास्वहे | तास्महे |

इङ्गुणावादेशौ । भविता भवितारौ भवितारः । भवितासि भवितास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः । श्वस्ते हरिः प्रत्यक्षो भविता । भवितारौ भ-

भवितारः । भवितासे भवितासाथे भविताध्वे । भविताहे भवितास्वहे भवितास्महे । श्वो हरिं भवितासे ॥ **स्यादौ भविष्यति स्यप् । ४१ ।** धातोर्भविष्यति काले स्यप् प्रत्ययो भवति तिबादिष्वष्टादशसु परेषु । अस्य सञ्ज्ञा लृट् । भविष्यति भविष्यतः भविष्यन्ति । भविष्यसि । भविष्यथः भविष्यथ । भविष्यामि भविष्यावः भविष्यामः । कल्किर्धर्मप्रवर्तको भविष्यति । भविष्यते भविष्येते भविष्यन्ते । भविष्यसे भविष्येथे भविष्यध्वे । भविष्ये भविष्यावहे भविष्यामहे । सावर्णी राज्यं भविष्यते ॥ **स्यप् क्रियातिक्रमे । ४२ ।** धातोः क्रियाया अतिक्रमे हेतुहेतुमद्भावे कारणादनिष्पत्तौ सत्यां दिवादेः परः स्यप्प्रत्ययो भवति भविष्येऽर्थे क्वचिद्भूतेऽपि । अस्य सञ्ज्ञा लृङ् । अडागमः । अभविष्यत्-अभविष्यद् अभविष्यताम् अभविष्यन् । अभविष्यः अभविष्यतम् अभविष्यत । अभविष्यम् अभविष्याव अभविष्याम । यदि सुवृष्टिः सुराज्यं चाभविष्यत्तदा सुभिक्षमभविष्य । अभविष्यत अभविष्येताम् अभविष्यन्त । अभविष्यथाः अभविष्येथाम् अभविष्यध्वम् । अभविष्ये अभविष्यावहि अभविष्यामहि । यद्यभविष्यत द्रव्यं भवांस्तदा रम्यमभविष्यत ॥ **भूते सिः । ४३ ।** धातोर्भूतमाने काले सिः प्रत्ययो भवति । दिवादिपरः । अस्य सञ्ज्ञा लुङ् । इकारः सेरिति विशेषणार्थः । अभूस् त् इति स्थिते ॥ **दादेः पे । ४४ ।** परस्मैपदे परे अपित् दाधास्थेणूभूपिबतिभ्यः परस्य सेर्लोपो भवति ॥ **शाच्छासाघ्राधेटां वेति वक्तव्यम् । ४५ ॥ भुवः सिलोपो गुणघातव्यः । ४६ ।** लुकि न तन्निमित्तम् । लुकि सति तन्निमित्तं कार्यं न स्यात् (वृ० १ प्र० ६ सू० ५९) तेन गुणवृद्धयोर्न । अभूत् अभूताम् ॥ **भुवः सिलोपे स्वरे वुग्वक्तव्यः । ४७ ।** अभूवन् । अभूः अभूतम् अभूत । अभूवम् अभूव अभूम । अभूद्दृष्टिः । आत्मनेपदे । सि इट् गुणावौ षत्वं मूर्धन्यत्वम् अट् । अभविष्ट अभविषाताम् ॥ **आतोऽन्तोऽदनतः । ४८ ।** आत् आत्मनेपदस्यान्त इत्येतस्याद्भवति अपाराद्रुतरस्य न भवति । अभविषत । अभविष्ठाः अभविषाथाम् । **ध्वे च सेर्लोपः । ४९ ।** ध्वे परे सेर्लोपो भवति वा तस्य ढ इति केचित् । अभविढ्वम्-अभविड्ढ्वम् । अभविषि अभविष्वहि अभविष्महि । देवदत्तो राज्यमभविष्ट ॥ **माङि लुङेव वक्तव्यः । ५० । सर्वेण्नापवादः ॥ मेटः । ५१ ।** माङाख्ये प्रयुज्यमाने अटो लोपो भवति । मा हर्षभक्तो भवान् भूद् ॥ **स्मयोगे भूतार्थता वक्तव्या । ५२ ॥ मास्मयोगे लङ् च । ५३ ।** मा स्म भवत् । मा स्म भूत् । चिती सञ्ज्ञाने । ईकार ईदितकार्यार्थः । पूर्ववत्तिबादयः । अप् कर्तरि ( प्र० १ सू० १० ) ॥ **उपधाया लघोः । ५४ ।** धातोरुपधाया लघोर्नामिनो गुणो भवति । चेतति चेततः चेतन्ति ।१। चेततु चेततात् चेतताम् चेततु ।२। चेततु-चेततात् चेतताम् चेतन्तु ।३। अचेतत् अचेतताम् अचेतन् ।४। द्वित्वम् । चिचेत । चिरचाद्गुणाभावः । चिचिततुः चिचितुः । चिचेतिथ चिचितथुः चिचित । चिचेत चिचितिव चिचितिम ।५। चित्याद्गुणाभावः । चित्यात् चित्यास्तां चित्यासुः ।६। चेतिता चेतितारौ चेतितारः ।७। चेतिष्यति चेतिष्यतः चेतिष्यन्ति ।

। ८। अचेतिष्यत् अचेतिष्यताम् अचेतिष्यन् । ९। चित सि त् इति स्थिते सिसता (प्र० १ सू० ३८) इतीट् ॥ सेः । ५५। सिशब्दात्परयोर्दिस्योरिडागमो भवति ॥ इट ईटि । ५६ । इट उत्तरस्य सेर्लोपो भवति ईटि परे । अचेतीत् अचेतिष्टाम् ॥ स्यादिदः । ५७। सेराकारान्तादिदश्चोत्तरस्यान उस् भवति । अचेतिषु । अचेती अचेतिष्टम् अचेतिष्ट । अचेतिषम् अचेतिष्व अचेतिष्म । च्युतिर् आसेचने । इर् अनुबन्ध इरितो वेति विशेषणार्थं । उच्चारितप्रध्वंसो ह्यनुबन्धः । च्योतति च्योतेत् च्योतत् अच्योतत् । च्युत् णप् द्वित्वम् ॥ पूर्वस्य हसादिः शेष. । ५८। पूर्वस्यादिर्हसः शिष्यते अन्यो लुप्यते । चुच्योत चुच्युततुः चुच्युतुः । चुच्योतिथ चुच्युतथुः चुच्युत । चुच्योत चुच्युतिव चुच्युतिम । च्युत्यात् च्योतिता च्योतिष्यति अच्योतिष्यत् । अच्योतीत् अच्योतिष्टाम् अच्योतिषुः । अच्योती. अच्योतिष्टम् अच्योतिष्ट । अच्योतिषम् अच्योतिष्व अच्योतिष्म॥ इरितो वा । ५९। इरितो धातोर्वा ङ. प्रत्ययो भवति दिवादिपर परस्मैपदे । सेरपवादः । ङकारो गुणप्रतिषेधार्थः । अच्युतत् अच्युतताम् अच्युतन् । अच्युत. अच्युततम् । अच्युतत । अच्युतम् अच्युताव अच्युताम । श्च्युतिर् क्षरणे । श्च्योतति श्च्योतेत् श्च्योततु अश्च्योतत् द्वित्वम् ॥ शसात् खपाः । ६०। द्विर्वचने कृते यत्पूर्वरूपं तस्य शसादुत्तरा खपाः शिष्यन्ते न शसाः । इति षकारलोपः । चुश्च्योत चुश्च्युततु चुश्च्युतु । श्च्युत्यात् श्च्योतिता श्च्योतिष्यति अश्च्योतिष्यत् अश्च्युतत् अश्च्योतीत् । मन्थ विलोडने । मन्थति मन्थेत् मन्थतु अमन्थत् ममन्थ ॥ नो लोपः । ६१ । धातोरुपधाभूतस्य नकारस्य लोपो भवति किति ङिति च परे इत्युपधानकारलोपे प्राप्ते ॥ असंयोगात् णादेरकित्त्व वाच्यम् । ६२। तेन नलोपाभावः । ममन्थतुः ममन्थुः । ममन्थिथ ममन्थथु ममन्थ । ममन्थ ममन्थिव ममन्थिम ॥ केचित्संयोगादपीति वक्तव्यम् । ६३। ममथतु ममथु । नो लोप (प्र० १ सू० ६०) मथ्यात् मन्थिता मन्थिष्यति अमन्थिष्यत् अमन्थीत् अमन्थिष्टाम् अमन्थिषु । कुथि लुथि मथि कुथि हिंसासंक्लेशनयो ॥ इदितो नुम् । ६४। इदितो धातोर्नुमागमो भवति । कुन्थति कुन्थेत् कुन्थतु अकुन्थत् । द्वित्वम् । कुहोश्चुः । ६५। पूर्वसन्निधिनो कवर्गहकारयोश्चुर्भवति । वर्गेव सुर्यो ह्रस्व सवर्णे । चुकुन्थ चुकुन्थतु चुकुन्थु । चुकुन्थिथ चुकुन्थथु चुकुन्थ चुकुन्थ चुकुन्थिव चुकुन्थिम । स्वपधत्वाभावादगुण ॥ इदितो नलोपाभावो वाच्य । ६६ । कुन्थ्यात् कुन्थिता कुन्थिष्यति अकुन्थिष्यत् । अकुन्थीत् अकुन्थिष्टाम् अकुन्थिषु । षिधु गत्याम् । उकार उच्चारणार्थ ॥ आदेः ष्ण स्नः ६७। षोपदेशस्य णोपदेशस्य च धातोरादौ वर्तमानयो षकारणकारयो सकारनकारौ भवत. । सेक्सृप्सृस्तृसृज्स्तृस्त्यान्ये दन्त्याजन्तसादय ॥ एकाच षोपदेशा ष्मर्षसिद्ष्वद्स्वञ्ष्वष्क्षिड । १ । सेट गतौ । सृप्ल गतौ । सृ गतौ स्तृ आच्छादने । सृज् विसर्गे । स्तृ छादने । स्त्यै ष्टै शब्दसघातयो । एभ्योऽन्ये दन्त्याजन्तसादय । एकाच. षोपदेशा. दन्त्याजन्तसादय । दन्ते भव. दन्त्य

दन्त्यश्च अच्च दन्त्याचौ तौ अन्तौ यस्य स दन्त्याजन्तः स चासौ सश्च दन्त्याजन्तसः स आदिर्येषां ते दन्त्याजन्तसादयः । दन्त्यः केवलदन्त्यः न तु दन्तोष्ठजोऽपि । ष्वष्कादीनां पृथग्ग्रहणात् । ष्वष्क गतौ । ञिष्विदा गात्रप्रक्षरणे । ष्वदू आस्वादने । ष्वञ्ज परिष्वङ्गे । ञिष्वप् शये । ष्मिङ् ईषद्धसने । एते षोपदेशाः । णोपदेशास्त्वनर्द्नाटिनाथ्नाध्नन्द्नक्कनॄनृतः ॥ नर्द गतौ । नट नर्तने । नाथ् नाध् याच्ञोपतापैश्वर्याशीःषु । टुनदि समृद्धौ । नक्क नाशने । नॄ नये । नृती गात्रविक्षेपे । एभ्योऽन्ये णोपदेशाः ॥

**नकारजावनुस्वारपञ्चमौ झलि धातुषु ॥**
**सकारजः शकारश्च षाट्टवर्गस्तवर्गजः ॥ १ ॥**
**नामधातुष्ठ्यष्वष्कादीनां षः सो नेति वाच्यम् ।६८।**

गुणः । सेधति । निपूर्वः ॥**प्रादेश्च तथा तौ सुनमाम् ।६९।** प्रादेरुपसर्गात्परेषां स्वादीनां नमादीनां च धातूनां सकारनकारयोस्तौ पूर्वभाविनावेव षकारणकारौ भवतः षत्वणत्वनिमित्ते सति । निषेधति । सेधेत् सेधतु । अड्व्यवधानेऽपि षत्वम् । न्यषेधत् । द्वित्वव्यवधानेऽपि षत्वम् । निषिषेध सिषिधतुः । सिषिधुः । सिषेधिथ सिध्यात् सेधिता सेधिष्यति असेधिष्यत् । असेधीत् असेधिष्टाम् असेधिषुः । षिधू शास्त्रेमाङ्गल्ये च । ऊकार इड्विकल्पार्थः । सेधति सेधेत् सेधतु असेधत् सिषेध सिध्यात् ॥ **ऊदितो वा । ७० ।** ऊदितो धातोः परस्य वसादेरिड्वा भवति ॥ **स्वृसूतिसूयतिधूञ्रधादीनामिड्वा वक्तव्यः । ७१ ।** स्वृ शब्दे । षूङ् प्राणिगर्भविमोचने । षूङ् प्रसवे । धूञ् कम्पने । रध् हिंसायाम् । णश् अदर्शने । तृप् प्रीणने । दृप हर्षविमोचनयोः । द्रुह जिघांसायाम् । मुह वैचित्ये । ष्णुह उद्गिरणे । ष्णिह प्रीतौ । एते रधादयः । सेधिता । पक्षे ॥ **तथोर्धः । ७२ ।** दधातिं विना झभान्ताद्धातोः परयोस्तकारथकारयोर्धकारादेशो भवति । झबे जबाः ( पृ० १ प्र० २ सू० ३ ) सेद्धा सेधिष्यति—सेत्स्यति । असेधिष्यत्—असेत्स्यत् । असेधीत् असेधिष्टाम् असेधिषुः । इडभावे ॥ **अनिटोनामिवतः । ३७ ।** नामिवतोऽनिटो धातोः परस्मैपदे परे सिप्रत्यये वृद्धिर्भवति । चपुत्वम् । सेः ( प्र० १ सू० ५४ ) असैत्सीत् असैद्धाम् ॥ **प्रत्ययलोपे प्रत्ययलक्षणं कार्यं भवति । ७४ । झसात् । ७५ ।** झसादुत्तरस्य सेर्लोपो भवति झसे परे । असैत्सुः । असैत्सीः असैद्धम् असैद्ध । असैत्सम् असैत्स्व असैत्स्म । खद स्थैर्ये हिंसायां च ।

इन्दामासिथ इन्दाबभूव इन्द्यात इन्दिता इन्दिष्यति । स्वरादे (प्र० १ सू० ८३) ऐन्दिष्यत ऐन्दीत् ऐन्दिष्टाम् ऐन्दिषु । ऐन्दी ऐन्दिष्टम् ऐन्दिष्ट । ऐन्दिषम् ऐन्दिष्व ऐन्दिष्म । णिदि कुत्सायाम् । निन्दति ॥ **निस्निक्षानिन्दामुपसर्गाण्णत्वं वा वाच्यम्** । ८९ । प्रणिन्दति प्रनिन्दति । निन्दत् निन्दतु अनिन्दत् निनिन्द निन्द्यात् निन्दिष्यति अनिन्दिष्यत् अनिन्दीत् । णिक्ष चुम्बने । प्रणिक्षति निक्षेत् निक्षतु अनिक्षत् निनिक्ष निक्ष्यात् निक्षिता निक्षिष्यति अनिक्षिष्यत् अनिक्षीत् । उख गतौ । ओखति ओखेत् ओखतु औखत् । द्वित्वे उपधागुणे च कृते ॥ **असवर्णे स्वरे पूर्वकारोकारयोरियुवौ वक्तव्यौ** । ९० । उवोख । सवर्णे दीर्घः (पृ० १ प्र० २ सू० २०) ऊखतु ऊखु । उवोखिथ उख्यात् ओखिता ओखिष्यति औखिष्यत् औखीत् । अक्षु गतिपूजनयोः । अक्षति । नुगशाम् (प्र० १ सू० ८२) आनक्ष आनक्षतु आनक्षु ॥ **पूजायामर्थे नलोपाभावो वाच्य** । ९१ । अक्ष्यात् गतौ तु अक्ष्यात् । अक्षिता अक्षिष्यति आक्षिष्यत् आक्षीत् । आञ्छि आयामे । आञ्छति आनाञ्छ । आञ्छतेर्नुग्वेति केचित् । आञ्छ आञ्छ्यात् आञ्छिता आञ्छिष्यति आञ्छिष्यत् आञ्छीत् । हुर्छा कौटिल्ये । य्वोर्निहसे (पृ० १ प्र० १ सू० ७) इति दीर्घः । हूर्छति जुहोर्छ (प्र० १ सू० ६४) वर्गचतुर्थो ह्रस्व सवर्णे । झपानां जबचपा (प्र० १ सू० ३२) जुहूर्छे अहूर्छीत् । वज गतौ । वजति वजेत् वजतु अवजत् ॥ **शसददवादिगुणभूताकाराणां नैत्वपूर्वलोपौ वक्तव्यौ** । ९२ । शसु हिंसायाम् । दद दाने । शशास शशसतु । ददाद ददतु । ववाज ववजतु ववजु ववजिथ अवाजीत् अवजीत् । व्रज गतौ । व्रजति व्रजेत् व्रजतु अव्रजत् । वव्राज वव्रजतु वव्रजु व्रज्यात् व्रजिता व्रजिष्यति अव्रजिष्यत् ॥ **वदिव्रज्योः सौ नित्यं वृद्धिः** । ९३ । अव्राजीत् । अज गतौ क्षेपणे च । अजति अजेत् अजतु आजत् ॥ **अजेरार्धधातुके वी वक्तव्य वसादौ वा** । ९४ । एतच्च निमित्तचतुष्टय सार्वधातुक परमार्धधातुकसंज्ञ पाणिनीयानाम् । द्वित्वम् वृद्धि । विवाय ॥ **नुधातोः** । ९५ । निकारणस्य नोर्धातोश्चेवर्णोवर्णयोरियुवौ भवत स्वरे परे । अनेकस्वरस्यासंयोगपूर्वस्य तुग्वौ । वित्यतु. वित्यु ॥ **स्वरान्तान्नित्यानिटस्थपो वेट्** । ९६ । विवयिथ-विवेथ आजिथ वि यथु विव्य । विवाय-विवय विव्यिव-आजिव विव्यिम-आजिम । वीयात् ॥ **नैकस्वरादनुदात्तात्** ९६ एकस्वराद्धातोर्धातुपाठेऽनुदात्त इत्येव पठितादिडागमो भवति ॥

## ॥ अथानिट्कारिकाः ॥

अनिट्स्वरान्तो भवतीति दृश्यतामिमास्तु सेट प्रवदन्ति तद्विदः ॥ अदन्तमृदन्तमृतां च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि ॥२॥ गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णुव ॥ इति स्वरान्ता निपुणैः समुच्चितास्ततो हलान्तानपि सन्निबोधत ॥३॥

शकिस्तु कान्तेष्वनिडेक इष्यते घसिश्च सान्तेषु वसिः प्रसारणी॥
रभिश्च भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे ॥ ४ ॥
यमिर्यमान्तेष्वनिडेक इष्यते रमिर्दिवादावपि पठ्यते मनिः ॥ न-
मिश्चतुर्थो हनिरेव पञ्चमो गमिस्तु षष्ठः प्रतिषेधवाचिनाम् ॥ ५ ॥
दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः ॥
इमेऽनिटोऽष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्तिताः
॥ ६ ॥ दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशति-
मष्टमं विशिम् ॥ लिशिं च शान्ताननिटः पुराणगाः पठन्ति पाठेषु
दशैव नेतरान् ॥ ७ ॥ रुधिः सराधिर्युधिबन्धिसाधयः क्रुधिः क्षु-
धि शुध्यतिसिध्यती व्यधिः॥ इमे तु धान्ता दश येऽनिटो मता-
स्ततः परं सिध्यतिरेव नेतरे ॥ ८ ॥ शिषिं पिषिं शुष्यतिपुष्यती
त्विषिं श्लिषिं विषिं तुष्यतिदुष्यती द्विषिम् ॥ इमान्दशैवोपदि-
शन्त्यनिड्विधौ गणेषु षान्तान्कृषिकर्षती तथा ॥ ९ ॥ तपिं तिपिं
चापिमथो वपिं स्वपिं लुपिं लिपिं तृप्यतिदृप्यती सृपिम् ॥ स्वरे-
ण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान् पठितांस्त्रयोदश
॥ १० ॥ अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीन् शदिं सदिं स्विद्य-
तिपद्यतीं खिदिम् ॥ तुदिं नुदिं विद्यति विन्द इत्यपि प्रतीहि दा-
न्तान् दश पञ्च चानिटः ॥ ११ ॥ पचिं वचिं विचिरिचिरञ्जिपृच्छ-
तीन्निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन् ॥ त्यजिं यजिं युजिरु-
जिसञ्जिमज्जतीन् भुजिं स्वजिं सृजिमृजी विद्ध्यनिट्स्वरान् ॥ १२ ॥

दितो वा ( प्र० १ सू० ६९ ) गोप्ता । गोपायिष्यति-गोपिष्यति-गोप्स्यति । अ-गोपायिष्यत्-अगोपिष्यत् । अगोप्स्यत् । अगोपायीत् अगोपीत् । अनिटो नामिव-त ( प्र० १ सू० ७२ ) अगौप्सीत् । झसात् ( प्र० १ सू० ७४ ) अगौप्ताम् । एव धूप् सन्तापे । धूपायति । धूपायाञ्चकार । धूपायामास । धूपाम्बभूव । दुधूप । दीर्घोपधत्वान्न गुण । तप सन्तापे । तपति तपेत् तपतु अतपत् । तताप-तेपतु तेपु । तेपिथ ॥ **अरवतो नित्यानिट्स्थपो वेट्** । १०२ । ततप्थ । तप्या-त् । तप्ता । तप्स्यति । अतप्स्यत् । अताप्सीत् । क्रमु पादविक्षेपे ॥ **क्रमुभ्रमुत्र-सित्रुटिलष्भ्राशृभ्लाशो वा यः प्रत्ययो वक्तव्यः** । १०३ । चतुर्षु । क्राम्यति ॥ **क्रम. पे चतुर्षु दीर्घता वक्तव्या** । १०४ । क्रामति क्राम्येत् क्रामेत् । क्राम्यतु क्रामतु अक्राम्यत् अक्रामत् चक्राम क्रम्यात् क्रमिता क्रमि-ष्यति अक्रमिष्यत अक्रमीत् । यम उपरमे ॥ **गमां छः** । १०५ । गमयम्इषुगो छो भवत्यपि । यच्छति यच्छेत् । यच्छतु अयच्छत् । ययाम येमतु येमु । येमिथ ययन्थ यम्यात् यन्ता यस्यति अयस्यत् ॥ **आदन्तानां यमिरमिन मीनां सेरिट् सक् च पे वक्तव्यौ** । १०६ । अयसीत् अयसिष्टाम् अयसि-षु । णमु प्रह्वत्वे शब्दे च । नमति नमेत् नमतु अनमत् । ननाम नेमतु नेमु । नेमिथ-ननन्थ नम्यात् नन्ता नस्यति अनस्यत् । अनसीत् अनसिष्टाम् अनसिषु । गम्लृ गतौ । लृकारो लिदकार्यार्थ । गच्छति गच्छेत् गच्छतु अगच्छत् जगाम ॥ **गमां स्वरे** । १०७ । गम् हन् जन् खन् घस् एतेषामुपधाया लोपो भवति क्ङिद्वर्जे स्वरे । जग्मतु जग्मु जगमिथ-जगन्थ गम्यात् गन्ता ॥ **हनृत स्यप** । १०८ । हन्तेर्ऋकारान्तात्स्यप इडागमो भवति । गमेश्च पे । गमिष्यति अग-मिष्यत् ॥ **लिदयुपादेर्ङ** । १०९ । लितो धातो पुपादेर्द्युतादेश्च ङप्रत्ययो भ-वति दिनादौ परस्मपदे । सिपपवाद । अङि इत्युक्तेर्नोपधालोप । अगमत् अगम-ताम् अगमन् । इषु इच्छायाम् । इच्छति इच्छेत् इच्छतु ऐच्छत् । इयेष ईषतु ई षु । इयेषिथ इष्यात् ॥ **इषुसहलुभरिषरुषामनापि तस्येड्वा वक्तव्य** । ११० । एषिता-एष्टा एषिष्यति ऐषिष्यत् । ऐषीत् ऐषिष्टाम् ऐषिषु । ञिफला विशरणे । फलति फलेत् फलतु अफलत् पफाल । आदेशादिलपूर्वलोपनिषधे प्रा-प्ते ॥ **तृफलभजत्रपां किति णादौ सेटि थपि चैत्वपूर्वलोपौ वक्त-व्यौ** । १११ । फेलतु फेलु । फेलिथ फल्यात् फालता फालिष्यति अफालिष्य-त् । लघ्वकारोपधत्वेन वृद्धिविकल्पे प्राप्ते ॥ **लान्तस्याकारस्य सौ नित्य वृद्धिर्वाच्या** । ११२ । अफालीत् । जि जये । जयति जयेत् जयतु अजयत् ॥ **सपरोक्षयोर्जेर्गि** । ११३ । सनन्ते परोक्षे च जि जय इति धातोर्गिरादेशो भवति । जिगाय जिग्यतुः जिग्यु । जिगयिथ जिगेथ जीयात् जेता जेष्यति अ-जेष्यत् अजैषीत् । अजैष्टाम् अजैषु । कृष् विलेखने । कर्षति कर्षेत् कर्षतु अ-कर्षत् चकर्ष । उपधाया लघो ( प्र० १ सू० ५३ ) चकृषतु चकृषु । चक-र्षिथ कृष्यात् । गुण कृता **धातोर्ह्रासे दृशाम्** । ११४ । दृश्सृज्स्पृश्मृश्तृप्दृप्-

ऋणां झसे परे अरो र भवति । रार इति तन्त्रोपात्त वेन रा आर र अर । सकृदुच्चरितमनेकोपकारक तन्त्रम् । ष्टुत्वम् । अष्टा ॥ **कृपादीना रो वा वक्तव्यः** । ११५ । कर्ष्टा । रारो झसे दृशाम् ॥ **षढो कः से** । ११६ । धातो षकारढकारयो ककारो भवति सकारे परे । क्लिादस स कृतस्य ( वृ० १ प्र० ६ सू० २१ ) कपसयोगे क्ष ( वृ० १ प्र० ९ सू० १० ) ऋक्ष्यति-कर्क्ष्यति अक्रक्ष्यत्-अकर्क्ष्यत् अक्राक्षीत् । अनिगे नामिनः ( प्र० १ सू० ७२ ) अकार्क्षीत् ॥ **कृपादीना वा सिर्वक्तव्यः** । ११७ । कृपू स्पृश मृष् तृप् दृप एते कृपादय । तत्पक्षे ॥ **हशषान्तात्सक्** । ११८ । हकारान्तात् शकारान्तात् षकारान्ताच्च नाम्युपधादारधमानेटो दिवादौ परे सक्प्रत्ययो भवति दृश वर्जयित्वा । सेरपवाद । अक्षत्-अकृक्षताम् अकृक्षन् । रुष् हिसायाम् । उपधाया लघो ( प्र० १ सू० ५३ ) रोषति रोषेत् रोषतु अरोषत् । रुरोष रुरुषतु रुरुषु । रुरोषिथ रुष्यात् रोषिता रोष्टा रोषिष्यति अरोषिष्यत अरोषीत् । उष् दाहे । ओषति ओषेत् ओषतु औषत् ॥ **उषविद्जागृणामाम्वा वक्तव्यः** । ११९ । ओषाचकार-उवोष ऊषतु उवोषिथ उष्यात् ओषिता ओषिष्यति औषिष्यत् औषीत् । मिह सेचने । मेहति मेहेत् मेहतु अमेहत् । मिमेह मिमिहतु मिमिहु । मिमेहिथ मिह्यात् । होढ ( वृ० १ प्र० ९ सू० ११ ) तथोर्धः । ( प्र० १ सू० ७१ ) ष्टुत्वम् ॥ **ढि ढो लोपो दीर्घश्च** । १२० । ढकारस्य ढकारे परे लोपो भवति पूर्वस्य च दीर्घ । मेढा मेक्ष्यति अमेक्ष्यत् । हशषान्तात्सक् ( प्र० १ सू० ११८ ) होढ ( ११ ) षढो कः से ( प्र० १ सू० ११६ ) अमिक्षत् अमिक्षताम् अमिक्षन् । दह भस्मीकरणे । दहति दहेत् दहतु अदहत् । ददाह देहतु देहु । देहिथ ददग्ध दह्यात् दग्धा । दादर्धः ( वृ० १ प्र० ९ सू० ६ ) आदिजबाना झषान्तस्य झभान्तो ( वृ० १ प्र० ९ सू० ७ ) खसे चपा ( वृ० १ प्र० ४ सू० १८ ) क्लिादस स कृतस्य ( वृ० १ प्र० ६ सू० २१ ) कपसयोगे क्ष ( वृ० १ प्र० ९ सू० १० ) धक्ष्यति अधक्ष्यत् अधाक्षीत् । झसात् ( प्र० १ सू० ७४ ) अदाग्धाम् अधाक्षु । ग्लै म्लै हर्षक्षये । आयादेश । ग्लायति ग्लायेत ग्लायतु अग्लायत् ॥ **सन्ध्यक्षराणामा** ॥ १२१ । सन्ध्यक्षराणा धातूनामात्व भवति अनपि विषये । णप् । द्विश्च ( प्र० १ सू० २८ ) ह्रस्व । ( प्र० १ सू० २१ ) पूर्वस्य हसादि शेष ( प्र० १ सू० ५७ ) कुहोश्चु ( प्र० १ सू० ६४ ) ॥ **आतो णप् डौ** । १२२ । आकारान्ताद्धातो परो णप् डौ भवति । टिलोप । जग्लौ ॥ **आतोऽनपि** । १२३ । धातोराकारस्य लोपो भवति अनपि क्ङिति इति स्वरे सेटि थपि च । जग्लतु जग्लु । जग्लिथ-जग्लाथ जग्लथु जग्ल । जग्लौ जग्लिव जग्लिम ॥ **संयोगादेरादन्तस्य क्ङिति यादादावेकारो वा वक्तव्यः** । १२४ । ग्लायात् ग्लेयात् ग्लाता ग्लास्यति अग्लास्यत् । अग्लासीत् अग्लासिष्टाम् अग्लासिषु । गै रै कै शब्दे । गायति गायेत् गायतु अगायत् जगौ जगतु जगु । **दादेरे** । १२५ । अपित्दा धामागैहाकृपिबसोस्थाना-

माकारस्यैकारो भवति आशीर्वादादौ परस्मै पदे परे । गेया गासात् गास्यति अगास्यत् । अगासीत् अगासिष्टाम् अगासिषु । ष्टै शब्दसंघातयोः । सत्वनिषेधः । ष्टयति ष्टयेत् ष्टयतु अष्टयत् । सन्ध्यक्षराणामा ( प्र० १ सू० १२१ ) शसात्सपा ( प्र० १ सू० ५९ ) षान्तर्गतस्तवर्गज इति षकारे गते टकारः स्तः । तष्टयौ ष्टायात् ष्टेयात् ष्टाता ष्टास्यति अष्टास्यत् अष्टासीत् । दैप् शोधने । दायति दायेत् दायतु अदायत् ददौ पित्वादेत्वाभावः । दायात् दाता दास्यति अदास्यत् । अदासीत् अदासिष्टाम् अदासिषु । पित्वात्सिलोपाभावः इत्यादि । धट् पाने । ट ईदर्थः । धयति धयेत् धयतु अधयत् दधौ धेयात् धाता धास्यति अधास्यत् । वा सिलोपः । अधासीत् अधासिष्टाम् । अधासिषुः । अधात् अधाताम् । स्यादिर् ( प्र० १ सू० ५६ ) ॥ उस्यालोपः । १२६ । उसि परे धातोराकारस्य लोपो भवति । अधुः । धेट् सेरट् धातोर्द्वित्वं येति केचित् ॥ आतोऽनपि । १२७ । धातोराकारस्य लोपो भवति अनपि ञिति ङिति स्वरे सेटि थपि च । अदधत् अदधताम् अदधन् । दृशिर् प्रेक्षणे ॥ दृशादेः पश्यादिः । १२८ । दृशादेर्धातोः पश्यादिरादेशो भवति चतुर्षु परेषु । दृश् ऋ स शद सद पा घ्रा ध्मा स्था म्ना दाण् एते दृशादयः । पश्य ऋच्छ धौ शीय सीद पिब जिघ्र धम तिष्ठ मन यच्छ एते पश्यादयः । पश्यति पश्येत् पश्यतु अपश्यत् । ददर्श ददृशतुः ददृशुः । सृजिदृशोरस्यपो वेट् । ददर्शिथ । गुण ( प्र० १ सू० ११ ) रारो ह्रस्वे द्द्राम् ( प्र० १ सू० १४ ) पत्वम् ष्टुत्वम् । ददष्ठ ददृशथुः ददृश । ददर्श ददृशिव ददृशिम । दृश्यात् द्रष्टा द्रक्ष्यति अद्रक्ष्यत् । अत उपधाया ( प्र० १ सू० ७५ ) अद्राक्षीत् । झसात् ( प्र० १ सू० ७४ ) ष्टुत्वम् । अद्राष्टाम् अद्राक्षुः । पक्षे । इरितो वा ( प्र० १ सू० ५८ ) दृशादेर्ङे गुण अदर्शत् अदर्शताम् अदर्शन् । ऋ गतौ । ऋच्छादेशः । ऋच्छति ऋच्छेत् ऋच्छतु आर्च्छत् । र ( प्र० १ सू० ८६ ) मथात् ऋभट् ( द्वृ० १ प्र० २ सू० २४ ) वृद्धि । आर आरतु आरुः ॥ अत्यर्तिव्ययतीनां थपो नित्यमिट् । १२९ । आरिथ आरथु आर । आर आरिव आरिम ॥ गुणोऽर्तिसंयोगाद्योः । १३० । अर्तेः संयोगादेॠदन्तस्य च गुणो भवति यकि यादि ञिति णाद्याशीर्वादादौ च । अर्यात् अर्ता । हनृतः स्यप. ( प्र० १ सू० १०८ ) अरिष्यति आरिष्यत् ॥ सर्तिशास्त्यर्तिभ्यो ङो लुङि । १३१ । सेरपवादः । लिदुपधादङे ( प्र० १ सू० १०९ ) आरत् आरताम् आरन् । अर्त्यर्तोङ । सेरपवादो लुङीति केचित् । आर्षीत् । सृ गतौ । धावादेशः । धावति । शीघ्रगतावेव धावादेशः । सरति । ससार सस्रतुः सस्रुः । थादित्वात् । ससर्थ सस्रथु सस्र । ससार-ससर सस्रिव सस्रिम ॥ यादादौ । १३२ । ऋकारस्य रिङादेशो भवति यादादौ परस्मैपदे परे । ङकारो व्यवधानार्थः । तेन यि ( प्र० १ सू० ९७ ) इति न दीर्घः । स्रियात् सर्ता सरिष्यति असरिष्यत् । पुषादित्वात् ङ । असरत् असरताम् असरन् । शद्लृ शातने ॥ शीयादेश आत्मनेपदं चात्यम् । १३३ । शीयते शीयेत शीयताम् अशीयत शशाद । ऐप प-

चाम् ( प्र० १ सू० ८० ) शेदतु शेदुः । शेदिथ शशत्थ शद्यात् शत्ता शत्स्यति अशत्स्यत् । ऌदित्वात्ङ । अशदत् । षद्ऌविशरणगत्यवसादनेषु । सत्वम् । सीदादेशः । सीदति । ससाद सेदतु सदुः । सेदिथ-ससत्थ सद्यात् सत्ता सत्स्यति असत्स्यत् असदत् । निपूर्वः । न्यषदत् । पा पाने । पिबादेशः । पिबति पिबेत् पिबतु अपिबत् । पपौ पपतुः पपुः । पपिथ पपाथ । दादेरे ( प्र० १ सू० १२ ) पेयात् पाता पास्यति अपास्यत् । दादे पे ( प्र० १ सू० ४४ ) अपात् । घ्रा गन्धोपादाने । जिघ्रादेशः । जिघ्रति जिघ्रेत् जिघ्रतु अजिघ्रत् जघ्रौ जघ्रतुः जघ्रुः । जघ्रिथ जघ्राथ । घ्रायात् घ्रेयात् घ्राता घ्रास्यति अघ्रास्यत् अघ्रासीत् अघ्रात् । ध्मा शब्दाग्निसंयोगयोः । धमादेशः । धमति धमेत् धमतु अधमत् दध्मौ ध्मायात् ध्मेयात् ध्माता ध्मास्यति अध्मास्यत् अध्मासीत् । ष्ठा गतिनिवृत्तौ । आदेः ष्णः ( प्र० १ सू० ६६ ) सकारे जाते निमित्ताभावेन ठस्य थः । तिष्ठादेशः । तिष्ठति तिष्ठेत् तिष्ठतु अतिष्ठत् । शसात्खपाः ( प्र० १ सू० ५९ ) तस्थौ तस्थतुः तस्थुः । स्थेयात् स्थायात् स्थाता स्थास्यति अस्थास्यत् । निपूर्वः । पत्वम् न्यष्ठात् । म्ना अभ्यासे । मनादेशः । मनति मनेत् मनतु अमनत् । मम्नौ मम्नतुः मम्नुः । मम्निथ मम्नाथ म्नायात् म्नेयात् म्नाता म्नास्यति अम्नास्यत् अम्नासीत् । दाण् दाने । यच्छादेशः । यच्छति यच्छेत् यच्छतु अयच्छत् । ददौ ददतुः ददुः । दादेरे ( प्र० १ सू० १२५ ) देयात् दाता दास्यति अदास्यत् अदात् । हृ कौटिल्ये । ह्वरति ह्वरेत् ह्वरतु अह्वरत् जह्वार । गुणोर्तिसंयोगाद्योः ( प्र० १ सू० १३० ) जह्वरतुः जह्वरुः ॥ **ऋदन्तस्य थपो नेट् । १३४ ।** जह्वर्थ जह्वरथुः जह्वर । जह्वार-जह्वर जह्वरिव जह्वरिम । ह्वर्यात् ह्वर्ता । ह्वृत स्यप ( प्र० १ सू० १०८) ह्वरिष्यति अह्वरिष्यत् । वृद्धिः । अह्वार्षीत् अह्वार्ष्टाम् । स्कन्दिर् गतिशोषणयोः । स्कन्दति स्कन्देत् स्कन्दतु अस्कन्दत् । चस्कन्द चस्कन्दतुः चस्कन्दुः । चस्कन्दिथ ॥ **झसात्परस्य झसस्य सवर्णे झसे लोपो वाच्यः । १३५ ।** चस्कन्थ । नो लोपः ( प्र० १ सू० ६० ) स्कद्यात् स्कन्ता स्कन्त्स्यति अस्कन्त्स्यत् ॥ **सावनिटो नित्यं वृद्धिः । १३६ ।** नित्यविधानसामर्थ्यादनुपधाभूतस्याप्यतो वृद्धिः । अस्कान्त्सात् । इरितो वा ( प्र० १ सू० ५८ ) अस्कदत् । तॄ प्लवनतरणयोः । तरति तरेत् तरतु अतरत् । कित्त्वाभावाद्गुणः । **ऋसंयोगादेर्णदेरकित्त्वं वाच्यम् । १३७ ।** तॄफलभजत्रपाम् ( प्र० १ सू० १११ ) इत्येत्वपूर्वलोपौ । ततार तेरतुः तेरुः । तेरिथ ॥ **ऋत इर् । १३८ ।** ऋकारस्य इर् भवति किति ङिति च परे । व्योरिरले ( वृ० १ प्र० १० सू० ७) तीर्यात् ॥ **इटो ग्रहाम् । १३९ ।** ग्रहादीनामिट ईकारो भवति । तरीता तरिता तरीष्यति तरिष्यति अतरीष्यत्-अतरिष्यत् । अतारीत् अतारिष्टाम् अतारिषुः ॥ **वृद्धिहेतौ साविटो न दीर्घो वाच्यः । १४० ।** रञ्ज रागे । उभयपदी ॥ **अपिरञ्जदंशषञ्जष्वञ्जाम् । १४१ ।** एषामनुस्वारस्य लोपो भवत्यपि परे । रजति रजते रजेत् रजेत रजतु रजताम् अरजत् अरजत । ररञ्ज रर-

अतु ररञ्जु । ररञ्जिय ररञ्थ ररञ्जथु ररञ्ज । ररञ्जे रज्यात् रङ्क्षीष्ट रङ्क्ता र ङ्क्ष्यति रङ्क्ष्यते अरङ्क्षयत् अर यत । चो कुः (वृ० १ प्र० ९ सू० ५२) खसे चपा (वृ० १ प्र० ४ सू० १८) षत्वम् अराङ्क्ताम् अराङ्क्षु । अरङ्क्त अरङ्क्षाताम् अरङ्क्षत । दश दशने । दशति दशेत् दशतु अदशत् । ददश ददशतु ददशु दद शिथ-ददष्ठ ददशथु दश्यात् । षत्वम् । दष्टा दङ्क्ष्यति अदङ्क्ष्यत् णित्से (प्र० १ सू० ७७) णित्वाद्वृद्धि । षढो क से (प्र० १ सू० ११६) अदाङ्क्षीत् । षञ्ज सङ्ग । सजति सजेत सजतु असजत ससञ्ज ससञ्जथ-ससस्थ सज्यात् सङ्क्ता सङ्क्ष्यति असङ्क्ष्यत् । असाङ्क्षीत् असाङ्क्ताम् असाङ्क्षु । कित रोगापनयने संशये च ॥ गुप्भ्य । १४२ । गुप् तिज् कित् मान् बध दान् शान् एभ्य स्वार्थे स प्रत्ययो भवति धातोर्द्वित्वम् । गुहोऽस्व (प्र० १ सू० ६४) गुपुतिजुकिद्भ्य क्षमभिन्दा-क्षमारोगापनयनेषु स । तेन गोपति तजति केतति । सधातु (प्र० १ सू० १००) गुपादभ्य सस्येष्यते ॥ नामिटि से । १४३ । इड्वर्जिते सप्रत्यये परे धातोर्गुणो न भवति । लिप् । चिकित्सति चिकित्सेत् चिकित्सतु अचिकित्सत् चिकित्साचकार चिकित्सामास चिकित्साम्बभूव । चिकित्स्यात् चिकित्सिता चिकित्सिष्यति अचिकित्सिष्यत् अचिकित्सीत् अचिकित्सिषाम् । पत्ल पतने । पतति पतेत् पततु अपतत् । पपात पेततु पेतु । पत्यात् पतिता पतिष्यति अपतिष्यत् लित्पुषादेर्ङ (प्र० १ सू० १०९) ॥ पसेङे पुमागमो वाच्य । १४४ । अपप्तत् । भ्रमु चलने ॥ शमां दीर्घ । १४५ । शमादीनां दीर्घो भवति यकारे परे । शम् दम् श्रम् भ्रम् क्षम् तम् मद् एत शमादय । भ्राम्यति-भ्रमति भ्राम्येत् भ्रमेत् भ्राम्यतु भ्रमतु अभ्राम्यत्-अभ्रमत् बभ्राम ॥ फणादीनामेत्वपूर्वलोपौ वा वाच्यौ । १४६ ।

**फणतिभ्राजिराजी च भ्राशिभ्लाशी स्यमिस्वनी ॥**
**भ्रमित्रसी जीर्यतिश्च दर्शोते तु फणादय ॥ १३ ॥**

भ्रेमतु-बभ्रमतु भ्रेमु-बभ्रमु । भ्रेमिथ बभ्रमिथ भ्रम्यात् भ्रमिता भ्रमिष्यति अभ्रमिष्यत् अभ्रमीत् । टुवम् उद्गिरणे । टुदुत्सहत । वमति वमेत् । वमतु अवमत् ववाम ॥ वम एत्वपूर्वलोपौ वा वाच्यौ । १४७ । वमतु-ववमतु वेमु-ववमु । वम्यात् वमिता वमिष्यति अवमिष्यत् अवमीत् । फण गतौ । फणति फणेत् फणतु अफणत् पफाण फेणतु फेणु । फण्यात् फणिता फणिष्यति अफणिष्यत् अफाणि अफणीत् । स्वनस्यम् शब्दे । स्वनति स्वनेत् स्वनतु अस्वनत् । सस्वान स्वेनतु स्वेनु । स्वन्यात् स्वनिता स्वनिष्यति अस्वनिष्यत् अस्वानीत् अस्वनीत् । वस निवासे । वसति वसेत् वसतु अवसत् । वसु णत् इति स्थिते । द्वित्वम् ॥ णयादौ पूर्वस्य । १४८ । णबादौ परे यजादीनां ग्रहादीनां च पूर्वस्य सम्प्रसारणं भवति । यवरलानामिकोकारऋकारलृकारा भवन्ति । सम्प्रसारणस्य सम्प्रसारणे दीर्घस्य दाधा ... ॥

**ग्रहिज्यावयिव्यधिर्वष्टिर्विचतिर्वृश्चतिस्तथा ॥**
**पृच्छतिर्भृज्जतिश्चैव नवैते तु ग्रहादयः ॥ १४ ॥**

पूर्वसकारस्योत्वे । अत उपधायाः ( प्र० १ सू० ७५ ) उवास । उवस् अतुस् इति स्थिते ॥ **यजां यवराणां ऋवृतः संप्रसारणं किति** । १४९ । यजादीनां सम्प्रसारणं भवति किति परे ॥

**यजिर्वपिर्वहिश्चैव वेञ्व्येञौ ह्वयतिः स्वपिः ॥**
**वदवसी श्वयतिर्वास्तोरेकादश यजादयः ॥ १५ ॥**

सवर्णे दीर्घः सह (वृ० १ प्र० २ सू० २०) ॥ **घसादेः षः** । १५० । घसिशासिवसीनां सस्य षो भवति पत्वनिमित्ते सति । ऊषतुः । ऊषुः । उवसिथ–उवस्थ । सम्प्रसारणम् । षत्वम् । उष्यात् वस्ता ॥ **सस्तोऽनपि** । १५१ । सकारस्य तकारो भवति अनपि सकारे परे । वत्स्यति अवत्स्यत् । वृद्धिः । अवात्सीत् । हसात् ( प्र० १ सू० ७४ ) प्रत्ययलोपे प्रत्ययलक्षणमिति न्यायात् । अवात्ताम् । अवात्सुः । वद व्यक्तायां वाचि । वदति वदेत् वदतु अवदत् उवाद ऊदतुः ऊदुः । उवदिथ उद्यात् वदिता वदिष्यति अवदिष्यत् अवादीत् । टुओश्वि गतिवृद्ध्योः । टुकारौकारौ कार्यार्थौ । इकार इत्संज्ञकः । श्वयति श्वयेत् श्वयतु अश्वयत् ॥ **श्वयतेर्णादौ प्रथमं संप्रसारणं वा वक्तव्यम्** । १५२ । ततो द्वित्वम् । शुशाव शुशुवतुः शुशुवुः । शुशविथ । सम्प्रसारणाभावपक्षे शिश्वाय शिश्वियतुः शिश्वियुः । शिश्वयिथ । सम्प्रसारणं ये (प्र० १ सू० ९७ ) शूयात् श्वयिता श्वयिष्यति अश्वयिष्यत् ॥ **श्वयतेः सौ वृद्ध्यभावो वाच्यः** । १५३ । अश्वयीत् अश्वयिष्टाम् अश्वयिषुः । इरितो वा ( प्र० १ सू० ५८ ) ॥ **श्वयतेरिल्लोपोऽङि वक्तव्यः** । १५४ । अश्वत् ॥ **श्वयतेरङि द्वित्वं वा** । १५५ । अशिश्वियत् इत्यादि ॥ इति भ्वादिषु परस्मैपदिप्रक्रिया ॥ १ ॥

---

अथ भ्वादिष्वात्मनेपदिप्रक्रिया ॥ एधृ वृद्धौ । एधते एधेत एधताम् ऐधत । कासादिप्रत्ययादाम् ( प्र० १ सू० ८४ ) एधांचक्रे ॥ **आम्प्रत्ययो यस्माद्विहितः स चेदात्मनेपदी तर्हि अनुप्रयुक्तकृञ आत्मनेपदं भ्वस्तोर्नात्मनेपदम्** । १ । एधामास एधांबभूव विधानसामर्थ्यादस्तेर्भूभावो न इट् । एधिषीष्ट एधिता एधिष्यते ऐधिष्यत ऐधिष्ट ऐधिषाताम् । ईक्ष दर्शनाङ्कनयोः । ईक्षते ईक्षेत ईक्षताम् । ऐक्षत ईक्षांचक्रे ईक्षिषीष्ट ईक्षिता ईक्षिष्यते ऐक्षिष्यत ऐक्षिष्ट । दद दाने । ददते ददेत ददताम् अददत । शसददवा ( प्र० १ सू० ९१ ) इति नैत्वपूर्वलोपौ । ददद ददवाते । दददिरे ददिषीष्ट ददिता ददिष्यते अददिष्यत अददिष्ट । ष्वष्क गतौ । नामधातु ( प्र० १ सू० ६७ ) अनेन सत्वाभावः । ष्वष्कते ष्वष्केत ष्वष्कताम् अष्वष्कत षष्वष्के ष्वष्किषीष्ट ष्वष्किता

ष्वक्ष्यिष्यते अष्वाष्किष्यत अष्वाष्किष्ट अष्वाष्किषाताम् । ऋज गतौ स्थैर्ये स्पर्शे
च । उपधाया लघोः ( प्र० १ सू० ५३ ) अर्जते अर्जेत अर्जताम् आर्जत ।
नुगशाम् ( प्र० १ सू० ८२ ) आम्वोर्णादौ ( प्र० १ सू० ३० ) आनृजे अर्जि-
षीष्ट अर्जिता अर्जिष्यते आर्जिष्यत आर्जिष्ट । ष्वञ्ज परिष्वङ्गे । सत्वम् । अ-
निरञ्जदशदंशष्वञ्जाम् ( प्र० १ सू० १४१ ) स्वजते स्वजेत स्वजताम् अस्वज
त । सस्वञ्जे सस्वञ्जाते सस्वञ्जिरे ॥ **स्वजतेर्णादौ वा कित्त्वम्** । २ । स-
स्वजे सस्वजाते सस्वजिरे । चो कु ( वृ० १ प्र० ९ सू० ५३ ) क्से चपा
( वृ० १ प्र० ४ सू० १८ ) षत्वम् । कषसयोगे क्ष ( वृ० १ प्र० ९ सू० १० )
स्वक्षीष्ट स्वङ्क्ता स्वङ्क्ष्यते अस्वङ्क्ष्यत । झसात् ( प्र० १ सू० ७४ ) अस्वक्त अ-
स्वक्षाताम् अस्वक्षत । अस्वकथाः । त्रपूष् लज्जायाम् । ऊकारषकारौ कार्यार्थौ ।
त्रपते त्रपेत त्रपताम् अत्रपत । तृफलभजत्रपाम् ( प्र० १ सू० ११३ ) इत्येत्व-
पूर्वलोपौ । त्रेपे त्रेपाते त्रेपिरे । ऊदिता वा ( प्र० १ सू० ६९ ) त्रपिषीष्ट-त्रप्सी-
ष्ट त्रपिता-त्रप्ता त्रपिष्यते त्रप्स्यते अत्रपिष्यत अत्रप्स्यत । अत्रपिष्ट अत्रपिषा-
ताम् अत्रपिषत अत्रप्त । तिज् निशाने क्षमायां च । गुप्तिज्किद्भ्यः ( प्र० १ सू० १४३ )
तितिक्षते । तितिक्षेत तितिक्षताम् अतितिक्षत तितिक्षाञ्चक्रे तितिक्षाम्बभू-
व तितिक्षामास तितिक्षिषीष्ट तितिक्षिता तितिक्षिष्यते अतितिक्षिष्यत अतितिक्षिष्ट ।
गुप् गोपनकुत्सनयोः । जुगुप्सते जुगुप्सेत जुगुप्सताम् अजुगुप्सत जुगुप्साञ्चक्रे
जुगुप्साम्बभूव जुगुप्सामास जुगुप्सिषीष्ट जुगुप्सिता जुगुप्सिष्यते अजुगुप्सिष्यत
अजुगुप्सिष्ट । मान विचारणे । द्वित्वम् । ह्रस्वः ( प्र० १ सू० ३१ ) यः से
। ३ । पूर्वस्याकारस्येकारो भवति से परे ॥ **मानादीनां पूर्वस्य दीर्घो व-
क्तव्यः** । ४ । मीमांसते मीमांसेत मीमांसताम् अमीमांसत मीमांसाञ्चक्रे मीमां-
सामास मीमांसाम्बभूव मीमांसिषीष्ट मीमांसिता मीमांसिष्यते अमीमांसिष्यत अमी-
मांसिष्ट । बध निन्दायाम् । आदिजबानाम् ( वृ० १ प्र० ९ सू० ७ ) बीभत्सते बीभत्से-
त बीभत्सताम् अबीभत्सत बीभत्साञ्चक्रे बीभत्सिषीष्ट बीभत्सिता बीभत्सिष्यते
अबीभत्सिष्यत अबीभत्सिष्ट । पण व्यवहारे स्तुतौ च पन च । आय ( प्र० १ ।
सू० ९९ ) पणायते पणायेत पणायताम् अपणायत पणायाञ्चक्रे आयाभावपक्षे ।
पेणे पेणाते पेणिरे । पणायिषीष्ट-पणिषीष्ट पणायिता-पणिता पणायिष्यते-पणिष्यते
अपणायिष्यत-अपणिष्यत अपणायिष्ट-अपणिष्ट । एवं पन च । कमु कान्तौ ॥
**कमेः स्वार्थे ञिः प्रत्ययो वक्तव्यः** । ५ । अनावि तु वा वृद्धिः । ञ्यादौ
( प्र० १ सू० १०० ) अगुणौ । अयादेशः । कामयते कामयेत कामयताम् अ-
कामयत कामयाञ्चक्रे-चकमे कामयिषीष्ट-कमिषीष्ट कामयिता कमिता कामयि-
ष्यते-कमिष्यते अकामयिष्यत-अकमिष्यत । अकामित न् इति स्थिते ॥ **ञेर-
ड्द्विश्च** । ६ । ञ्यन्तात्धातोर्भूतेऽर्थे अड्प्रत्ययो भवति दिबादौ परत । सेरप-
वादः । धातोश्च द्वित्वम् ॥ ञे. । ७ । इडागमवर्जिते अनावि विषये ञेर्लोपो भवति ।
ह्रस्वः ( प्र० १ सू० ३१ ) कुहोश्चुः ( प्र० १ सू० ६४ ) ॥ आदि लघौ ह्रस्व

**उपधायाः** । ८ । अङि सत्युपधाया ह्रस्वो भवति पूर्वसंबन्धिनोऽकारस्येकारो
भवति लघुनि धात्वक्षरे परे । **लघोर्दीर्घः** । ९ । अङि सति ह्रसादेर्लघो पूर्वस्य
दीर्घो भवति लघुनि धात्वक्षरे परे । अचीकमत अचीकमेताम् अचीकमन्त । णेरभा-
वपक्षे ॥ **क्रमेरङि द्वित्वे वाच्ये** ।१०। ण्यन्तत्वाभावान्न दीर्घोकारो । अचकमत
अय गतौ । अयते अयेत अयताम् आयत ॥ **परापूर्वं अयतावुपसर्गरेफस्य
लत्वं वाच्यम्** । ११ । पलायते पलायेत पलायताम् पलायत । अयांचक्रे अ-
यामास अयाम्बभूव अयिषीष्ट अयिता अयिष्यते आयिष्यत । आयिष्ट आयिषाताम्
आयिषत । आयिढ्वं आयिध्वम् दय दानगतिहिंसादानेषु । दयते अर्यातवत्प्रक्रिया ।
घट चेष्टायाम् । घटते घटेत घटताम् अघटत कुहोश्चु ( प्र० १ सू० ६४ ) ज-
घटे घटिषीष्ट घटिता घटिष्यते अघटिष्यत अघटिष्ट । ईह चेष्टायां । ईहते ईहेत
ईहताम् ऐहत ईहांचक्रे ईहिषीष्ट ईहिता ईहिष्यते ऐहिष्यत ऐहिष्ट । काशृ दीप्तौ
काशते काशेत काशताम् अकाशत । लिटद्विरुक्तौ ( प्र० १ सू० ८५ ) काशां-
चक्रे चकाशे काशिषीष्ट काशिता काशिष्यते अकाशिष्यत अकाशिष्ट । कास
शब्दकुत्सायाम् । कासते कासेत कासताम् अकासत कासांचक्रे चकासे कासि-
षीष्ट कासिता कासिष्यते अकासिष्यत अकासिष्ट । षिवृ सेवने । सत्वम् । सेवते
सेवेत सेवताम् असेवत सिषेवे सिषेवाते सेविषीष्ट सेविता सेविष्यते असेविष्यत
असेविष्ट । गाङ् गतौ । सवर्णदीर्घे कृते । आतामाथादावोऽन्तोऽदनत. ( प्र० १
सू० ४७ ) गाते गाते गाते गेत गाताम् अगात । जंगे जगाते जगिरे । गासीष्ट
गाता गास्यते अगास्यत अगास्त अगाताम् । ऋङ् गतौ भाषणे च । गुण ( प्र०
१ सू० ११ ) रवते रवेत रवताम् अरवत अरवेताम् । अनेकस्वरत्वादसंयोगपूर्व-
त्वाच्चोकारस्य वत्वे प्राप्ते ॥ **नानभ्योर्धः** । १२ । अनपि विषये धातोरुवर्णस्य
वत्वं न भवति । तत उङ् कुधातोः ( प्र० १ सू० ९४ ) रुरुवे रुरुवाते रुरुविरे ।
रविषीष्ट रविता रविष्यते अरविष्यत अरविष्ट । देङ् पालने । दयते दयेत दयताम्
अदयत ॥ **दयतेर्णादौ दिग्यादेशो द्वित्वाभावश्च वक्तव्यः** । १३ । दिग्ये
सन्ध्यक्षराणामा ( प्र० १ सू० १२१ ) दासीष्ट दाता दास्यते अदास्यत ॥ **अपि-
ह्वाधास्थामित्थं सेऽङित्वं आत्मनेपदे वाच्यम्** । १४ । ङित्वान्न गुणः ॥
**लोपो ह्रस्वाज्झसे** । १५ । ह्रस्वादुत्तरस्य सेर्लोपो भवति झसे परे । अदित
अदिषाताम् अदिषत । डीङ् विहायसा गतौ । डयते डयेत डयताम् अडयत ।
नुधातो ( प्र० १ सू० ९४ ) डीडये डयिषीष्ट डयिता डयिष्यते अडयिष्यत अड-
यिष्ट १ । दैङ् त्रैङ् पालने । दायते दायेत दायताम् अदायत ॥ **दैङो णादौ
दिग्यादेशो द्वित्वाभावश्च** । १६ । दिग्ये दासीष्ट । अपिह्वाधास्थामि ( प्र०
२ सू० १३ ) लोपो ह्रस्वाज्झसे ( प्र० २ सू १५ ) अदित । त्रा । अत्रास्त ।
द्युतङ् द्योतने । उपधाया लघो ( प्र० १ सू० ५३ ) द्योतते द्योतेत द्योतताम्
अद्योतत ॥ **द्युतेः पूर्वस्य सम्प्रसारणं वक्तव्यं णादौ परे** । १७ । दिद्युते
द्योतिषीष्ट द्योतिता द्योतिष्यते अद्योतिष्यत अद्योतिष्ट ॥ **द्युतादिभ्यो लङि**

**वा परस्मैपदं वाच्यम्** । १८ । लित्पुषादेर्ङः । ( प्र० १ सू० १०९ ) अवृतत् । वृतुङ् वर्तने । वर्तते वर्तेत वर्तन्ते । वर्तेत वर्तताम् अवर्तत ववृते वर्तिषीष्ट वर्तिता वर्तिष्यते अवर्तिष्यत ॥ **वृतादिभ्य- स्यस्योर्वा पं पंसनिट्पूर्वं च** । १९ । वृतु वृधु शृधु स्यन्दू कृपू एते वृतादयः । वर्त्स्यति अवर्त्स्यत् अवर्तिष्ट परस्मैपदपक्षे लित्पुषादेर्ङः ( प्र० १ सू० १०९ ) अवृतत् वृधुङ् वृद्धौ । वर्धते वर्धेत वर्धताम् अवर्धत ववृधे वर्धिषीष्ट वर्धिता वर्धिष्यते अवर्धिष्यत वर्त्स्यति अवर्त्स्यत् अवर्धिष्ट अवृधत् । शृधुङ् पर्दने । शर्धते शर्धेत शर्धताम् अशर्धत शशृधे शर्धिषीष्ट शर्धिता शर्धिष्यते अशर्धिष्यत अशर्धिष्ट शर्त्स्यति अशर्त्स्यत् अशृधत् । स्यन्दू प्रस्रवणे । स्यन्दते स्यन्देत स्यन्दताम् अस्यन्दत सस्यन्दे । ऊदितो वा ( प्र० १ सू० ७९ ) स्यन्दिषीष्ट स्यन्त्सीष्ट स्यन्दिता-स्यन्ता स्यन्दिष्यते-स्यन्त्स्यते स्यन्त्स्यति अस्यन्दिष्यत् अस्यन्त्स्यत अस्यन्त्स्यत् अस्यन्दिष्ट अस्यन्त । पक्षे अस्यदत् । कृपू सामर्थ्ये । गुण ॥ **कृपो रो लः** । २० । कृपो रेफस्य लो भवति ऋकारस्य लृकारो भवति । कल्पते कल्पेत कल्पताम् अकल्पत चक्लृपे कल्पिषीष्ट ॥ इडभावपक्षे ॥ **सिस्योः** । २१ । उपधाया गुणो न भवति सिस्योरनिटोः परतः । क्लृप्सीष्ट कल्पिता-कल्प्ता कल्पिष्यते कल्प्स्यते कल्प्स्यति अकल्पिष्यत-अकल्प्स्यत अकल्प्स्यत् अकल्पिष्ट । अकल्प्त अकल्प्साताम् अकल्प्सत अक्लृपत् । व्यथ व्‌ भयचलनयोः । व्यथते व्यथेत व्यथताम् अव्यथत ॥ **व्यथतेर्णाद्यौ पूर्वस्य संप्रसारणं वक्तव्यम्** । २२ । विव्यथे व्यथिषीष्ट व्यथिता व्यथिष्यते अव्यथिष्यत अव्यथिष्ट रमु क्रीडायाम् । रमते रमेत रमताम् अरमत ॥ **व्याङ्पर्युपेभ्यो रमः पम्** । २३ । विरमति आरमति परिरमति उपरमति रेमे रंसीष्ट रन्ता रंस्यते अरंस्यत अरंस्त अरंसाताम् अरंसत । विपूर्व । आरंसाताम् ( प्र० १ सू० १०६ ) इसोर्द्सवौ । व्यरंसीत् व्यरंसिष्टाम् । त्विषा सम्भ्रमे । त्वरिता । त्वरते त्वरेत त्वरताम् अत्वरत तत्वरे त्वरिषीष्ट त्वरिता त्वरिष्यते अत्वरिष्यत अत्वरिष्ट अत्वरिष्ट-अत्वरिध्वम् । षह मर्षणे । सहते सहेत सहताम् असहत सेहे सहिषीष्ट सहिता । इसुसह ( प्र० १ सू० ११ ) इति वेट् । होढ ( सू० १ प्र० ९ सू० ११ ) तथोर्धः ( प्र० १ सू० ७१ ) ष्टुत्वम् । ढलोप ॥ **सहिवहोरोदवर्णस्य** । २४ । सहिवहोरवर्णस्यौकारादेशो भवति ढलोपनिमित्ते ढकारे परे । सोढा सहिष्यते असहिष्यत असहिष्ट ॥ इति भ्वादिष्वात्मनेपदिप्रक्रिया ॥ २ ॥

अथोभयपदिप्रक्रिया ॥ राजृ दीप्तौ । ऋकार ऋदित्कार्यार्थं । राजति राजते राजेत् राजेत राजतु राजताम् अराजत् अराजत रराज । फणादित्वादेत्पूर्वलोपौ रेजतुः-रराजतुः रेजुः-रराजुः रेजे रराजे राज्यात् राजिषीष्ट राजिता राजिता राजिष्यति राजिष्यते अराजिष्यत् अराजिष्यत अराजीत् अराजिष्ट । खन खनने । खनति खनते खनेत् खनेत खनतु खनताम् अखनत् अखनत चखान । गमां स्वरे ( प्र० १ सू० १७ ) चख्नतुः चख्नुः । चख्ने खन्यात् ॥ **जनखन-**

तुः ईजुः । इजयिथ-इयष्ठ ईजे इज्यात् यक्षीष्ट यष्टा यष्टा यक्ष्यति यक्ष्यते अयक्ष्यत् अयक्ष्यत अयाक्षीत् अयाष्टाम् अयाक्षु अयष्ट अयक्षाताम् अयक्षत अयष्ठाः अयक्षाथाम् ॥ **ध्वे च सेर्लोपः** । ९ । षत्वम् । झभे जबाः (वृ० १ प्र० २ सू० ३) ष्टुत्वम् । अयड्ढ्वम् । अयक्षि अयक्ष्वहि अयक्ष्महि । टुवप् बीजतन्तुसन्ताने । टु-इत् वपति वपेत् । उवाप ऊपतु ऊपुः । उवपिथ उवप्थ ऊपे उप्यात् वप्सीष्ट वप्ता वप्स्यति वप्स्यते अवप्स्यत् अवप्स्यत अवाप्सीत् अवाप्त । वह प्रापणे । वहति वहते । उवाह ऊहतुः ऊहु । उवहिथ । होढः (वृ० १ प्र० ९ सू० ११) तथोर्धः (प्र० १ सू० ७१) ष्टुत्वम् । ढलोप । सहिवहोरोदवर्णस्य (प्र० २ सू० २३) उवोढ उह्यात् वक्षीष्ट वोढा वक्ष्यति वक्ष्यते अवक्ष्यत् अवक्ष्यत अवाक्षीत् अवोढाम् अवोढ अवक्षाताम् अवक्षत । वेञ् तन्तुसन्ताने । वयति वयते ॥ **वेञो णादौ संप्रसारणाभावो वाच्यः** । १० । सध्यक्षराणामा (प्र० १ सू० १२१) ववौ यादित्वान्नित्यपूर्वलोपौ । ववतु ववु ववे ॥ **वेञोवयणादौ वावक्तव्य** । ११ । उवाय ॥ **ग्रहांक्ङिति च** । १२ । ग्रहादीनां सम्प्रसारणं स्यात् किति ङिति च परे । इति सम्प्रसारणम् । यकारस्य सम्प्रसारणनिषेध । ऊयतु. ऊयु उवयिथ ऊयथु । ऊये ऊयाते ऊयिरे ॥ **वयो यस्य किति णादौ वो वा वक्तव्यः** । १३ । ऊवतु ऊवु ऊवे ऊयात् वासीष्ट वाता वाता वास्यति वास्यते अवास्यत् अवास्यत अवास्त अवासीत् । आदन्तानाम् (प्र० १ सू० १०६) इति इट्सकौ । अवासिष्टाम् अवास्त । व्येञ् संवरणे । व्ययति व्ययते ॥ **व्येञो णादौ नात्वम्** । १४ । विव्याय विव्यतु विव्यु ॥ **अस्यति-व्ययतीनां थपो नित्यमिट्** । १५ । विव्ययिथ विव्ये वीयात् व्यासीष्ट व्याता व्याता व्यास्यति व्यास्यते अव्यास्यत् अव्यास्यत अव्यासीत् अव्यास्त । ह्वेञ् स्पर्धायाम् । ह्वयति ह्वयते ॥ **अद्विरुक्तस्य ह्वयतेः सम्प्रसारणं वक्तव्यम्** । १६ । जुहाव जुहुवतु जुहुवु. । जुहविथ जुहोथ । जुहुवे जुहुवाते जुहुविरे । हूयात् ह्वासीष्ट ह्वाता ह्वाता ह्वास्यति ह्वास्यते अह्वास्यत् अह्वास्यत ॥ **अस्यति-वक्तिख्यातिलिपिसिचिह्वयतीनां सेडौ वा वाच्यः** । १७ । अह्वत अह्वेताम् अह्वन्त । अह्वास्त अह्वासाताम् अह्वासत । ऋत जुगुप्सायां कृपायां च ॥ **ऋतेरीय स्वार्थेऽनापि तु वा** । १८ । ऋतीयते ऋतीयाचक्रे आनर्त ऋतीयिष्यते आर्तात् आर्तीयिष्ट ॥

॥ इति भ्वादिषूभयपदिप्रक्रिया ॥ २ ॥ इत्यक्तिकरणा भ्वादयो धातवः ॥

इदानीं लुग्विकरणाददादेर्गणात्कर्तरि तिबादयो वर्ण्यन्ते ॥ अद् भक्षणे । अप् (प्र० १ सू० १० ) ॥ **अदादेर्लुक्** । १ । अदादेर्गणादुत्पन्नस्यापो लुग्भवति । खसे चपा झसानाम् ( वृ० १ प्र० ४ सू० १८ ) अत्ति अत्त अदन्ति । अत्सि अत्थ अत्थ । अद्मि अद्व अद्म । अद्यात् अत्तु अत्ताम् अदन्तु ॥ **झसाद्धिर्हेः** । झसादुत्तरस्य हेर्धिर्भवति । अद्धि–अत्तात् अत्तम् अत्त । अदानि अदाव अदाम ॥ **अदोऽदिस्योरडागमो वक्तव्य** । ३ । जघास । गमां स्वरे (प्र० १ सू० १०७)

खसे चपा ( वृ १ प्र १ सू० १८ ) घसादेः षः ( प्र० १ सू० १५१ ) क्षः । जक्षतुः जक्षुः । जघसिथ । पक्षे । आद आदतुः आदुः । आदिथ अद्यात् अत्ता अत्स्यति आत्स्यत् ॥ **ऌदित्त्वादङ्** ।४। अघसत् अघसताम् अघसन् । प्सा भक्षणे । प्साति प्सातः प्सान्ति । प्सायात् प्सायाताम् प्सायुः । प्सातु-प्सातात् प्साताम् प्सान्तु । अप्सात् अप्साताम् ॥ **आदन्तविदुद्विषामन उस् वा वक्तव्यः** ।५। उस्याल्लोपः ( प्र० १ सू० १२६ ) अप्सुः अप्सान् । पप्सौ पप्सतुः पप्सुः । पप्सिथ-पप्साथ प्सेयात् प्सायात् प्साता प्सास्यति अप्सास्यत् । आदन्तानाम् ( प्र० १ सू० १०६ ) इतोऽट्सकौ । अप्सासीत् अप्सासिष्टाम् । मा माने । माति मायात् मातु । अमात् अमाताम् अमुः । अमान् ममौ । दादेरे ( प्र० १ सू० १२५ ) मेयात् माता मास्यति अमास्यत् अमासीत् । या प्रापणे । याति यायात् यातु । अयात् अयाताम् अयुः । अयान् ययौ यायात् याता यास्यति अयास्यत् अयासीत् । वा गतिगन्धनयोः । वाति वातित् । रा दाने । ररौ । ला दानग्रहणयोः । लाति ललौ ललत् । द्रा कुत्सायां गतौ च । द्राति दद्रौ द्रायात् द्रेयात् द्राता द्रास्यति अद्रास्यत् अद्रासीत् । ख्या प्रकथने । ख्याति ख्यायात् ख्यातु अख्यात् चख्यौ ख्यायात् ख्येयात् ख्याता ख्यास्यति अख्यास्यत् । पुषादित्वात् ङः । आतोऽनपि ( प्र० १ सू० १२३ ) अख्यत् । पा रक्षणे पाति पायात् पातु अपात् पपौ पाता पास्यति अपास्यत् अपासीत् । भा दीप्तौ । भाति बभौ अभासीत् । श्या शौचे । श्याति सश्यौ श्यायात् श्येयात् अश्यासीत् । वश् कान्तौ । छशषराजादेः षः ( वृ० १ प्र० ९ सू० ६३ ) इति षत्वम् । ष्टुत्वम् । वष्टि । ग्रहां क्ङिति च ( प्र० ३ सू० १२ ) उष्टः उशन्ति षत्वम् । षढोः कः से ( प्र० १ सू० ११६ ) क्षः । वक्षि उष्ठः उष्ठ वश्मि उश्वः उश्मः । उश्यात् उश्याताम् उश्युः वष्टु-उष्टात् उष्टाम् उशन्तु । झसाद्धेः ( प्र० ४ सू० २ ) झभे जबाः ( वृ० १ प्र० २ सू० ३ ) ष्टुत्वम् । उड्ढि उष्टात् उष्टम् उष्ट । वशानि वशाव वशाम ॥ **दिस्योर्हसात्** ।६। हसादुत्तरयोर्दिस्योर्लोपो भवति । षत्वम् । षो डः ( वृ० १ प्र० ९ सू० ४४ ) वाऽवसाने ( वृ० १ प्र० ९ सू० ८ ) अवट्-अवड् । सम्प्रसारणम् । अडागमः । उओ ( वृ० १ प्र० २ सू० १३ ) ओऔऔ ( वृ० १ प्र० २ सू० १४ ) औष्टाम् औशन् । अवट्-अवड् औष्टम् औष्ट । अवशम् औश्व औश्म । उवाश उशिव उशिम । उश्यात् उश्यास्ताम् उश्यासुः । वशिता वशिष्यति अवशिष्यत् अवाशीत् । हन् हिंसागत्योः । हन्ति ॥ **लोपस्त्वनुदात्ततनाम्** ।७। अनुदात्तानां तनादीनां च ञमस्य लोपो भवति क्ङिति झसे परे । तुशब्दात्क्वचिदझसेऽपि क्यप्प्रत्ययादौ ञमस्य लोपः ॥

रमिर्यमिनमी हन्तिरनुदात्ता गमिर्मनिः ॥
तनुः क्षण् क्षिण् ऋण् तृण् घृणुर्वनुर्मनुस्तनादयः ॥ ५ ॥

हतः । गमां स्वरे ( प्र० १ सू० १०७ ) हनो घ्ने ( वृ० १ प्र० ९ सू० ३० )

घ्नन्ति । हंसि हथः हथ । हन्मि हन्वः हन्मः । हन्यात् हन्याताम् हन्युः । हन्तु-हतात् हताम् घ्नन्तु ॥ **जह्योधिशाधि** । ८ । हन्तेर्जहिशब्दोऽस्तेरेधिशब्दः शास्तेः शाधिशब्दो निपात्यते हिविषये । जहि-हतात् हतम् हत हनानि हनाव हनाम । अहन् अहताम् अघ्नन् अहन् अहतम् अहत । अहनम् अहन्व अहन्म । हनो घ्ने (सू० ३०) वृद्धिः । जघान जघ्नतुः जघ्नुः । **द्विरुक्तस्य हन्तेस्थापि घत्वं वाच्यम्** । ९ । जघनिथ जघन्थ जघ्नथुः जघ्न । जघान-जघन जघ्निव जघ्निम ॥ **हन्तेः स्याशीर्यादादौ वधादेशो वक्तव्यः** । १० । वध्यात् वध्यास्ताम् वध्यासुः । हन्ता हन्तारौ हन्तारः । ऋतः स्यपः (प्र० १ सू० १०८) हनिष्यति हनिष्यतः हनिष्यन्ति । अहनिष्यत् अहनिष्यताम् अहनिष्यन् ॥ **जनि-वध्योर्न वृद्धिः** । ११ । वधादेशे कृते इट् । अवधीत् अवधिष्टाम् अवधिषुः । अवधीः अवधिष्टम् अवधिष्ट । यु मिश्रणे । गुणः (प्र० १ सू० ११) **औरौ** । १२ । उकारस्याद्विरुक्तस्य औकारादेशो भवति पितितसि अवादौ विषये । यौति युतः । यु धातो. (प्र० १ सू० ५४) युवन्ति । यौषि युथः युथ । यौमि युवः युमः । युयात् यौतु-युतात् युताम् युवन्तु । युहि-युतात् युतम् युत । यवानि यवाव यवाम । अयौत् अयुताम् अयुवन् । अयौः अयुतम् अयुत । अयवम् अयुव अयुम । धातोर्नामिनः (प्र० १ सू० ८७) युयाव । नानप्योरे (प्र० २ सू० १२) युयुवतुः युयुवुः । युयविथ युयुवथुः युयात् यविता यविष्यति अयविष्यत् । अयावीत् अयाविष्टाम् अयाविषुः । तु गतिवृद्धिहिंसासु ॥ **तुरुस्तुभ्योऽद्विरुक्तेभ्यो हलादीनां चतुर्णामीड्वा** । १३ । तौति-तवीति तुतः तुवीतः तुवन्ति । तौषि-तवीषि तुथः-तुवीथ तुथ तुवीथ । तौमि-तवीमि तुयात्-तुवीयात् तौतु-तवीतु तुतात्-तुवीतात् तुताम्-तुवीताम् तुवन्तु । तुहि-तवीहि अतौत्-अतवीत् तुताव तोता तोष्यति अतोष्यत् अतौषीत् । रु शब्दे । रौति-रवीति रुतः-रुवीतः रुवन्ति । रौषि-रवीषि रुयात्-रुवीयात् रौतु-रवीतु रुतात्-रुवीतात् । अरौत् अरवीत् अरु-ताम्-अरुवीताम् अरुवन् । अरौः-अरवीः । रुराव रुरुवतुः रुरुवुः । रुरविथ रुयात् रोता रोष्यति अरोष्यत् अरौषीत् । दु गतौ । भौवादिक । द्रवति दुयात् द्रवतु अद्रवत् दुद्राव दूयात् दोता दोष्यति अदोष्यत् । अदौषीत् अदोष्टाम् अदोषुः । णु स्तुतौ । आदेः ष्णः स्नः (प्र० १ सू० ६६) नौति-नवीति नुतः-नुवीतः नुवन्ति नुनाव नुयात् नोता नोष्यति अनोष्यत् अनौषीत् । टुक्षु शब्दे । टुइत् । क्षौति क्षुतः क्षुवन्ति । क्षुयात् क्षौतु अक्षौत् । चुक्षाव चुक्षुवतुः चुक्षुवुः । क्षूयात् क्षविता क्षविष्यति अक्षविष्यत् अक्षावीत् । क्ष्णु तेजने । क्ष्णौति क्ष्णुतः क्ष्णुवन्ति । क्ष्णुयात् क्ष्णौतु अक्ष्णौत् चुक्ष्णाव क्ष्णूयात् क्ष्णविता क्ष्णविष्यति अक्ष्णविष्यत् अक्ष्णावीत् । ष्णु प्रस्रवणे । स्नौति स्नुयात् स्नौतु अस्नौत् सुस्नाव स्नूयात् स्नविता स्नविष्यति अस्नविष्यत् अस्नावीत् । इण् गतौ । गुणः (प्र० १ सू० ११) एति इतः ॥ **इणः क्ङिति स्वरे यो वक्तव्यः** । १४ । यन्ति । एषि इथः इथ । एमि इवः इमः । इयात् इयाताम् इयुः । एतु-इतात् इताम् यन्तु । इहि-इतात् इतम् इत ।

अयानि अयाव अयाम । अडागमादयम् । ऐत् ऐताम् आयन् । ऐः ऐतम् ऐत । आयम् ऐव ऐम । इतात् । इहि । एतु-इतात् इताम् यन्तु । इहि-इतात् इतम् इत । अयानि अयाव अयाम । इयात् । इयाताम् इयुः । इयाः इयातम् इयात । इयाम् इयाव इयाम । इयाय ॥ **इणः किति णादौ पूर्वस्य दीर्घो वक्तव्यः । १५ ।** ईयतुः ईयुः । इययिथ-इयेथ ईयथुः ईय । इयाय-इयय ईयिव ईयिम । ये (प्र० १ सू० ९७) ईयात् ईयास्ताम् ईयासुः । एता एष्यति ऐष्यत् । दादेः पे ( प्र० १ सू० ४३ ) ॥ **इणिकोः सिलोपे गा वक्तव्यः । १६ ।** अगात् अगाताम् अगुः । इक् स्मरणे । इङिकावध्युपसर्गतो न व्यभिचरतः । अध्येति अधीतः अधियन्ति । अधीयात् अध्येतु अध्यैत् अध्यैताम् अध्यायन् । अधीयाय अधीयात् अध्येता अध्येष्यति अध्यैष्यत् अध्यगात् । इङ्पुत्र्‌यन्‌ । विद् ज्ञाने । उपधाया लघोः ( प्र० १ सू० ५३ ) वेत्ति वित्तः विदन्ति । वेत्सि वित्थः वित्थ । वेद्मि विद्वः विद्मः ॥ **विदो लटामां स्यादीनां णवादिर्वा । १७ ।** विद उत्तरेषां तिबादीनां नवानां णवादिर्नवको वा भवति । वेद विदतुः विदुः । वेत्थ विदथुः विद । वेद विद्व विद्म । विद्यात् वेत्तु-वित्तात् वित्ताम् विदन्तु । हसादेर्हेः ( प्र० ४ सू० २ ) विद्धि-वित्तात् वित्तम् वित्त । वेदानि वेदाव वेदाम । दिस्योर्हसात् ( प्र० ४ सू० ७ ) अवेत्-अवेद् अवित्ताम् । अन उस् वा ( प्र० ४ सू० ५ ) अविदन्-अविदुः ॥ **दः सः । १८ ।** दकारस्य वा सकारो भवति सिविषये । अवेः अवेत् अवित्तम् अवित्त । अवेदम् अविद्व अविद्म । विवेद विविदतुः विविदुः । विवेदिथ । पक्षे ॥ **आमि विदेर्न गुणः । १९ ।** विदांचकार विदामास विदांबभूव । विद्यात् विद्यास्ताम् वेदिता वेदिष्यति अवेदिष्यत् अवेदीत् अवेदिष्टाम् अवेदिषुः । अस् भुवि । अस्ति ॥ **श्नसोरल्लोपः । २० ।** श्नम् इत्येतस्य विकरणस्यासभूतीति धातोश्चाकारस्य लोपो भवति ङिति परे । स्तः सन्ति ॥ **सि सः । २१ ।** अस्तेः सकारस्य लोपो भवति सकारे परे । असि ॥ इत्यत्र अस्तेः सलोपः सकारमात्रे न ॥ पिति । तेन व्यतिसे । असि स्थः स्थ । अस्मि स्वः स्मः । स्यात् स्याताम् स्युः । अस्तु-स्तात् स्ताम् सन्तु । अद्भ्येधिशाधि ( प्र० ४ सू० ८ ) एधि स्तात् स्तम् स्त । असानि असाव असाम ॥ **अस्तेरीट् । २२ ।** अस्तेः परयोर्दिस्योरीडागमो भवति । आसीत् ॥ **लोपागमयोर्मध्ये आगमविधिर्बलवान् । २३ ।** आस्ताम् आसन् । आसीः आस्तम्-आस्त आसम् आस्व आस्म ॥ **अस्तेरनपि भू वक्तव्यः । २४ ।** बभूव । मृजूष् शुद्धौ ॥ **मृजेर्गुणनिमित्ते प्रत्यये परे वृद्धिर्वाच्या किति ङिति स्वरे वा । २५ ।** षत्वम् ष्टुत्वम् ॥ **रात्सस्य । २६ ।** रेफादुत्तरस्य सस्यैव लोपः स्यान्नत्वन्यस्य । मार्ष्टि मृष्टः मृजन्ति मार्जन्ति । मार्क्षि मृष्ठः मृष्ठ । मार्ज्मि मृज्वः मृज्मः । मृज्यात् मार्ष्टु-मृष्टात् मृष्टाम् मृजन्तु-मार्जन्तु । मृड्ढि-मृष्टात् मृष्टम् मृष्ट । मार्जानि मार्जाव मार्जाम । अमार्ट्-अमार्ड् अमृष्टाम् अमृजन्-अमार्जन् । अमार्ट्-अमार्ड् अमृष्टम् अमृष्ट । अमार्जम् अमृज्व अमृज्म । ममार्ज ममृजतुः-ममार्जतुः ममृजुः-ममार्जुः । ममार्जिथ-ममार्ष्ठ ममृजथुः-ममार्जथुः मृज्यात् मार्जिता-मार्ष्टा मार्जिष्यति-मार्क्ष्यति अमार्जिष्यत्-अमार्क्ष्यत् । अमार्जीत् अमार्जिष्टाम् अमार्जिषुः । अमार्क्षीत् अमा-

यांम् अमार्ष्टुं । वच् परिभाषणे । वक्ति वक्तः ॥ **नहिवचिरन्तिपरः प्रयोक्तव्यः किन्तु वदन्तीत्युच्चारणीयम्** । २७ । वदन्ति । वक्षि वक्थ वक्थ । वच्मि वच्व वच्म । वच्यात् वक्तु-वक्तात् वक्ताम् वग्धि-वक्तात् वक्तम् वक्त । अवक्-अवग् अवक्ताम् अवचन् । अवक्-अवग् अवक्तम् अवक्त । अवचम् अवच्व अवच्म । णवादौ पूर्वस्य ( प्र० १ सू० १४८ ) उवाच । यजो यवराणां स्मृत सम्प्रसारणम् ( प्र० १ सू० १४९ ) ऊचतु ऊचु । उवचिथ-उवक्थ उच्यात् वक्ता वक्ष्यति अवक्ष्यत ॥ **अस्यति वक्तीति ह्वे वचेरुमागमो वक्तव्यः** । २८ । उओ ( वृ० १ प्र० २ सू० १३ ) अवोचत् अवोचताम् अवोचन् । रुदिर् अश्रुविमोचने ॥ **रुदादेश्चतुर्णां ह्रस्वादेः** । २९ । रुदादे परेषां तिबादिचतुर्णां मध्ये इकारप्रसादे प्रत्ययस्येट् भवति ॥

रोदितिः स्वपितिश्चैव श्वसिति प्राणितिस्तथा ॥
जक्षितिश्चैव विज्ञेयो रुदादि पञ्चको गणः ॥ ६ ॥

रोदिति रुदित रुदन्ति । रोदिषि रुदिथ रुदिथ । रोदिमि रुदिव रुदिम । रुद्यात् रोदितु-रुदितात् रुदिताम् रुदन्तु । रुदिहि-रुदितात् रुदितम् रुदित । रोदानि रोदाव रोदाम ॥ **रुदादेर्दिस्योरीडटौ च वक्तव्यौ** । ३० । अरोदीत् अरोदत रुरोद रुरुदतु रुद्यात् रोदिता रोदिष्यति अरोदिष्यत् अरोदीत् । इदितो वा ( प्र० १ सू० ५८ ) अरुदत् । ञिष्वप् शये । ञित् । स्वपिति स्वप्यात् स्वपितु-स्वपितात् अस्वपीत् अस्वपत् । सम्प्रसारणम् । सुष्वाप सुषुपतु सुषुपु । सुष्वपिथ-सुष्वप्थ सुप्यात् स्वप्ता स्वप्स्यति अस्वप्स्यत् अस्वाप्सीत् अस्वाप्ताम् अस्वाप्सु । श्वस् प्राणने । श्वसिति श्वस्यात् श्वसितु अश्वसात्-अश्वसत् अश्वसीताम् अश्वसन् । शश्वास शश्वसतु शश्वसु । श्वस्यात् श्वसिता श्वसिष्यति अश्वसिष्यत् ह्यन्तक्षणेति ( प्र० १ सू० ५८ ) वृद्ध्यभाव । अश्वसीत् । अन प्राणने ॥ अनाति प्रपूर्वं । **उपसर्गस्थानिमित्तादनितेर्नस्य णत्वं वाच्यम्** । ३१ । प्राणिति । अन्यात् अनितु आनीत् आनत् । आन आनतु आनु । अन्यात् अनिष्यति आनिष्यत् आनीत् आनिष्टाम् आनिषु । जक्ष भक्ष हसनयो । जक्षिति जक्षित ॥ **जक्षादेरतोऽदन उस्** । ३२ । जक्षजागृदरिद्राशासचकासभ्य परस्य अन्त अत् अन् उस् भवति । जक्षति जक्षिषि जक्ष्यात् जक्षितु अजक्षीत् अजक्षत् जजक्ष जक्ष्यात् जक्षिता जक्षिष्यति अजक्षिष्यत् अजक्षीत् । जागृ निद्राक्षये । जागर्ति जागृत जाग्रति । जागर्षि जागृयात् जागर्तु जागृतात् जागृताम् जाग्रतु । जागृहि-जागृतात् जागृतम् जागृत । जागराणि जागराव जागराम । गुण ( प्र० १ सू० ११ ) दिस्योर्हसात् ( प्र० ४ सू० ७ ) खोर्विसर्ग ( वृ० १ प्र० ६ सू० ०४ ) अजाग अजागृताम् ॥ **उसिजागर्तेर्धातोर्गुणो वक्तव्यः** । ३३ । अजागरु । अजाग अजागृतम् अजागृत । अजागरम् अजागृव अजागृम । जजा-

गार ॥ **जागर्ते किति गुणो वक्तव्यः** । ३४ । जजागरतु जजागरु । जजागरिथ जजागरथुः जजागर । जजागार जजागर जजागरिव जजागरिम । विद् (प्र० १ सू० ८५) इति पक्षे आम् । जागरांचकार जागरामास जागरांबभूव । जागर्यात् जागरिता जागरिष्यति अजागरिष्यत् । हयन्तक्षणेति (प्र०१ सू० ९८) न वृद्धिः । अजागरीत् । दरिद्रा दुर्गतौ । दरिद्राति ॥ **दरिद्रातेरिदालोपश्च ङिति** । ३५ । दरिद्रातेराकारस्य लोपो भवति ङिति स्वरे परे इकारश्च ङिति हसे परे । दरिद्रितः दरिद्रति । दरिद्रासि दरिद्रिथः दरिद्रिथ । दरिद्रामि दरिद्रिवः दरिद्रिमः । दरिद्रियात् । दरिद्रातु दरिद्रितात् दरिद्रिताम् दरिद्रतु । दरिद्राहि-दरिद्रितात् दरिद्रितम् दरिद्रित । दरिद्राणि दरिद्राव दरिद्राम । अदरिद्रात् अदरिद्रिताम् अदरिद्रुः । अदरिद्राः अदरिद्रितम् अदरिद्रित अदरिद्राम् अदरिद्रिव अदरिद्रिम ॥ **णप् खुसुसयुटो हित्वा अन्यस्माद्दरिद्रातेरनभ्यालोपो लुङि वा** । ३६ । ददरिद्रौ ददरिद्रतुः ददरिद्रुः । ददरिद्रिथ ददरिद्रथुः । पक्षे । दरिद्राञ्चकार दरिद्र्यात् दरिद्रिता दरिद्रिष्यति अदरिद्रिष्यत् । अदरिद्रीत् अदरिद्रिष्टाम् अदरिद्रिषुः । पक्षे । अदरिद्रासीत् अदरिद्रासिष्टाम् अदरिद्रासिषुः । शास् अनुशिष्टौ । शास्ति ॥ **शासेरिः** । ३७ । शासेराकारस्येकारादेशो भवति किति ङिति हसे हे च परे । यमादेः ष (प्र० १ सू० १५०) शिष्टः शासति । शास्सि शिष्ठः शिष्ठ । शास्मि शिष्वः शिष्मः । शिष्यात् । शास्तु शिष्टात् शिष्टाम् शासतु । जश्चेधिशाधि (प्र० ४ सू० ८) शाधि शिष्टात् शिष्टम् शिष्ट । शासानि शासाव शासाम ॥ **दिपि सस्य त सिपि वा** । ३८ । दिपि परे सस्य तकारो भवति सिपि तु वा भवति । अशात् अशिष्टाम् अशासुः । अशात्-अशाः अशिष्टम् अशिष्ट । अशासम् अशिष्व अशिष्म । शशास शशासतुः शशासुः । शिष्यात् शासिता शासिष्यति अशासिष्यत् । लिदुपादेर्ङ (प्र० १ सू० १०९) शासेरिः (प्र० ४ सू० ३८) अशिषत् । चकास् दीप्तौ । ऋदत् । चकास्ति चकास्तः चकासति । चकास्यात् । चकास्तु-चकास्तात् चकास्ताम् चकासतु । हसाद्धिः (प्र० ४ सू० २) ॥ **धौ सलोपो वाच्यः** । ३९ । चकाधि । चकास्तात् चकास्तम् चकास्त । अचकात् अचकास्ताम् अचकासुः । अचकात्-अचकाः । कासादिप्रत्ययादाम् (प्र० १ सू० ८४) चकासाञ्चकार चकास्यात् चकासिता चकासिष्यति अचकासिष्यत् । अचकासीत् अचकासिष्टाम् अचकासिषुः ॥ ॥ इत्यदादिषु परस्मैपदिप्रक्रिया ॥ ४ ॥

---

अथात्मनेपदिप्रक्रिया ॥ चक्षिङ् व्यक्तायां वाचि । इकार उच्चारणार्थः । ङकार आत्मनेपदार्थः । स्कोरायोश्च (वृ० १ प्र० ९ सू० ७०) लुत्वम् । चष्टे चक्षाते । आतोऽन्तोदनतः (प्र० १ सू० ४७) चक्षते । षढोः कः से (प्र० १ सू० ११६) चक्षे चक्षाथे चड्ढ्वे । चक्षे चक्ष्वहे चक्ष्महे । चक्षीत चक्षाम् । अचष्ट अचक्षाताम् अचक्षत ॥ **चक्षिङोऽनपि ख्यात्र् क्शाञौ णादौ वा वक्तव्यौ** । १ ।

चख्यौ चख्यतुः चख्युः । चक्शौ चक्शतुः चक्शुः । चचक्षे ख्यायात् ख्येयात् क्शायात् क्शेयात् । ख्यासीष्ट क्शासीष्ट ख्याता २ क्शाता २ ख्यास्यति ख्यास्यते क्शास्यति क्शास्यते अख्यास्यत् अख्यास्यत अक्शास्यत् अक्शास्यत । पुषादित्वान्ङ । अख्यत ॥ **अस्यतिवक्तिख्यातीनामात्मनेपदे सेड्डॉ वाच्यः** । २ । अख्यत अक्शासीत् अक्शास्ताम् । ईड स्तुतौ । खसे चपा झसानाम् (वृ० १ प्र० ४ सू० १८) ईट्टे ईडाते ईडते ॥ **ईडीशोः सध्वयोरिड्वक्तव्यः** । ३ । ईडिषे ईडाथे ईडिध्वे । ईडे ईड्वहे ईड्महे । ईडीत ईट्टाम् ऐट्ट ॥ **लङो ध्वस्येनट्** । ४ । ऐड्ड्वम् ईडांचक्रे ईडिषीष्ट ईडिता ईडिष्यते ऐडिष्यत ऐडिष्ट । ईश ऐश्वर्ये । ईष्टे ईशिषे । ईशीत ईष्टाम् ऐष्ट । ईशांचक्रे ईशिषीष्ट ईशिता ईशिष्यते ऐशिष्यत ऐशिष्ट । आस् उपवेशने । आस्ते आसीत आस्ताम् आस्त । कासादित्वादाम् । आसांचक्रे आसिषीष्ट आसिता आसिष्यते आसिष्यत आसिष्ट । वस् आच्छादने । वस्ते वसीत अवस्त । षूङ् प्राणिगर्भविमोचने । आदेः ष्णः सः (प्र० १ सू० ६६) सूते सुवीत सूताम् ॥ **सूतेः पिति गुणाभावो वाच्यः** । ५ । सुवै सुवावहै सुवामहै । असूत सुषुवे । स्वरति (प्र० १ सू० १०) इति वेट् । सविषीष्ट-सोषीष्ट सविता सोता सविष्यते-सोष्यते असविष्यत असोष्यत असविष्ट-असोष्ट । शीङ् स्वप्ने ॥ **शीङः सर्वत्र गुणो भवत्यपि विषये** । ६ । शेते शयाते ॥ **शीङोऽतो रुट्** । ७ । शीङ परस्यादित्येतस्य रुडागमो भवति । शेरते शयीत । शेताम् शयाताम् शेरताम् । अशेत अशयाताम् अशेरत । शिश्ये शिश्याते शयिषीष्ट शयिता शयिष्यते अशयिष्यत अशयिष्ट । इङ् अध्ययने । अधिपूर्वः । अधीते । अधीयाते । अधीयते । अधीयीत अधीताम् अधीयाताम्-अधीयताम् । अध्यैत । इयादेशे कृते पश्चादडागमद्वयम् । अध्यैयाताम् । अध्यैयत ॥ **इङो णादौ गा वक्तव्य** । ८ । अधिजगे अध्येषीष्ट अध्येता अध्येष्यते अध्यैष्यत ॥ **इङो वा गीसौ लृङि च तत्परस्य प्रत्ययस्य ङित्त्वं वाच्यम्** । ९ । ङित्त्वाद्गुणो न । अध्यगीष्यत । अध्यगीष्येताम् अध्यगीष्यत । अध्यैष्यत । अध्यगीष्ट अध्यगीषाताम् अध्यगीषत अध्यैष्ट अध्यैषाताम् अध्यैषत ॥ इत्यदादिष्वात्मनेपदिप्रक्रिया ॥ ५ ॥

---

अथोभयपदिप्रक्रिया प्रदर्श्यते ॥ द्विष अप्रीतौ । अकार उभयपदार्थः । द्वेष्टि द्विष्टे द्विष्यात् द्विषीत द्वेष्टु द्विषाताम् द्विष्टाम् अद्वेट्-अद्वेड् अद्विष्टाम् अद्विषुः । अद्विष्यन् अद्विष्ट दिद्वेष दिद्विषे द्विष्यात् द्विक्षीष्ट द्वेष्टा द्वेक्ष्यति द्वेक्ष्यते अद्वेक्ष्यत् अद्वेक्ष्यत । हशषान्तात्सक् (प्र० १ सू० ११८) अद्विक्षत् अद्विक्षताम् ॥ **सस्यात्मनेपदे स्वरे टिलोपो वाच्यः** । १ । अद्विक्षाताम् अद्विक्षत । दुह प्रपूरणे । दादेर्घः (वृ० १ प्र० ९ सू० ६) दोग्धि दुग्धः दुहन्ति । धोक्षि दुग्धः दुग्ध । दोह्मि दुह्वः दुह्मः । दुग्धे दुह्यात् । दुहीत दोग्धु ॥ **हकारस्य क्वचिज्झसभावो वाच्यः** । २ । दुग्धि दुग्धाम् । अधोक्-अधोग् अदुग्धाम् अदुहन् । अदुग्ध दुदोह दुदुहे दुह्यात् धुक्षीष्ट दोग्धा धोक्ष्यति धोक्ष्यते अधोक्ष्यत् अधोक्ष्यत अधुक्षत् अधुक्षत ॥

**दुहदिहलिहगुहूभ्यः सको लुग्वा वकारतवर्गयोरादि** ॥ ३ ॥ अदुग्ध अधुक्षावाम् अधुक्षत । अदुग्धाः-अधुक्षथाः अधुक्षाथाम् अधुग्ध्वम् अधुक्षध्वम् । अधुक्षावहि-अदुह्वहि अधुक्षामहि । दिह उपचये । देग्धि । तद्वत् । लिह आस्वादने । ढोढः ( वृ० १ प्र० ९ सू० ११ ) लेढि । तद्वत् । ष्टुञ् स्तुतौ । आदेः ष्णः स्नः (प्र० ९ सू० ६६) अोरी (प्र० ४ सू० १२) स्तौति-स्तुवीति स्तुतः-स्तुवीतः स्तुवन्ति । स्तुते-स्तुवीते स्तुवान-स्तुवीयान । स्तौतु-स्तुवीतु स्तुतात्-स्तुवीतात् स्तुताम्-स्तुवीताम् स्तुवन्तु । स्तुहि-स्तुतात् स्तुवीहि-स्तुवीतात् अस्तौत् । अस्तवीत् अस्तुताम् अस्तुवीताम् अस्तुवन् । अस्तुव अस्तुवीत । तुष्टाव तुष्टुवतुः तुष्टुवुः । क्रादित्वान्नेट् । तुष्टोथ । तुष्टुवथुः तुष्टुव । तुष्टाव तुष्टुव तुष्टुम । तुष्टुवे स्तुयात् स्तोवीत स्तोता स्तोता स्तोष्यति स्तोष्यंते अस्तोष्यन् अस्तोष्यत ॥ **स्तुसुधूञ्भ्यः पे सेरिट् वक्तव्यः** । ४ । अस्तावीत् अस्तोष्ट । ब्रूञ् व्यक्तायां वाचि ॥ **अथादावीपि विरिस्म** । ५ । ब्रुव ईकारः प्रत्ययो भवति तकारसकारमकारादौ पिति परे अथादौ विषये । ब्रवीति ब्रूतः ब्रुवन्ति । ब्रवीषि ब्रूथः ॥ **आहश्चपञ्चानाम्** । ६ । ब्रूञ उत्तरेषां तिबादीनां पञ्चानां णलादयः पञ्चादेशा भवन्ति ब्रुव आहश्चादेशो भवति । आह आहतुः आहुः ॥ **त थे** । ७ । आहो हकारस्य तकारादेशो भवति थे परे । आत्थ आहथुः ब्रूथः । ब्रवीमि ब्रूवः ब्रूमः । ब्रूयात् ब्रवीत ब्रवीतु ब्रूताम् अब्रवीत् अब्रूत ॥ **ब्रुवो वचिः** । ८ । ब्रुवो वच्यादेशो भवति अनपि विषये । इकार इत् । उवाच ऊचे अवोचत् अवोचत । डेदस्य पूर्वनल्साम्यात् । ऊर्णुञ् आच्छादने ॥ **ऊर्णोतेर्वा वृद्धिः** । ९ । हसादौ पिति । ऊर्णौति-ऊर्णोति ॥ **ऊर्णोतेर्गुणो दिस्योः** । १० । वृद्धेरपवादः । और्णोत् और्णोः ॥ **ऊर्णोतेराम्न** ॥ ११ ॥ **स्वरादेः परः** । १२ । स्वरादेर्धातोर्द्वितीयोऽवयवोऽद्विरुक्तः स स्वरो द्विर्भवति ॥ **स्वरात्पराः संयोगादयो नदरा द्विर्न** । १३ । ऊर्णुनाव ऊर्णुनुवतुः ॥ **ऊर्णोतेरिडादिः प्रत्ययो वा ङित्** । १४ । ऊर्णुनुविथ-ऊर्णुनविथ ऊर्णूयात् ऊर्णुविषीष्ट-ऊर्णविषीष्ट ऊर्णुविता-ऊर्णविता ॥ **ऊर्णोतेर्वा वृद्धिः सौ परे** । १५ । पक्षे गुणः और्णावीत्-और्णवीत् और्णाविष्ट-और्णुवीत् और्णुविष्ट ॥ इत्यदादिषूभयपदिप्रक्रिया ॥ ६ ॥ ॥ इत्युभयपदिनो लुग्विकरणा अदादयो धातवः ॥

---

लुग्विकरणस्यापि जुहोत्यादिगणस्य विशेषः । हु दानादनयोः ॥ **ह्वादेर्द्विश्च** । १ । हु इत्यादेर्गणादुत्पन्नस्यापो लुग्भवति तस्मिन् लुकि सति धातोर्द्विर्वचनम् । पुरुहुः ( प्र० १ सू० ६५ ) गुणः ( प्र० १ सू० ११ ) । जुहोति जुहुतः ॥ **द्वेः** । २ । द्विरुक्तादुत्तरस्यान्त इत्येतस्याद्भवति । जुह्वति । जुहोषि जुहुथः जुहुथ । जुहोमि जुहुवः जुहुमः । जुहुयात् जुहुयाताम् जहोतु-जुहुतात् जुहुताम् जुह्वतु ॥ **हेर्धिः** । ३ । जुहोतेरुत्तरस्य हेर्धिर्भवति । अन्तुसोत्युरूर्गुणः । अजुहवुः । अजुहोः अजुहुतम् अजुहुत अजुहवम् अजुहुव अजुहुम । जुहाव जुहुवतुः जुहुवुः जुहविथ जुहोथ ॥ **भीह्रीभृहुवामाम्वा वक्तव्यः स लुग्वत्** । ४ । लुकि सति धातोर्द्वित्वम् । जुहवाञ्चकार हूयात् होता होष्यति अहोष्यत । अहौषीत् अहौष्टाम्

अहीतु । ञिभी भये । नि इत् । बिभेति बिभीत ॥ **डिति हसे भिय इकारो वा वक्तव्य** । ५ । सार्वधातुके । बिभित बिभ्यति बिभीयात् बिभियात् । बिभेतु बिभितात् बिभीतात् बिभिताम् बिभीताम् । अबिभेत् अबिभिताम् अबिभीताम् अबिभयुः । बिभाय । पक्षे आम् । बिभयाञ्चकार भीयात् भेता भेष्यति अभेष्यत् अभैषीत् । ह्री लज्जायाम् । जिह्रेति जिह्रीत जिह्रियति । जिह्रीयात् जिह्रेतु । अजिह्रेत् अजिह्रीताम् अजिह्रयुः । जिह्राय जिह्रियतुः जिह्रियुः । जिह्रयाञ्चकार ह्रीयात् ह्रेता ह्रेष्यति अह्रेष्यत् अह्रैषीत् । पॄ पालनपूरणयोः ॥ **ऋमोरिः पूर्वस्य** । ६ । ऋमोः पूर्वस्य ऋकारस्य इकारो भवति लुकि सति । गुण (प्र० १ सू० ११) पिपर्ति ॥ **पोरुः** । ७ । पवर्गादुत्तरस्य ऋकारस्य उर् भवति किति ङिति च परे । य्वोर्विहसे (वृ० १ प्र० १० सू० ७) पिपूर्तः । पिपुरति । पिपूर्यात् । पिपर्तु पिपूर्तात् पिपूर्ताम् पिपुरतु । पिपूर्हि अपिप । ऋमोदिद्वयोरडागमो वा वक्तव्य इति केचित् । अपिपरत् अपिपूर्ताम् अपिपरु । अपिप-अपिपर अपिपूर्तम् अपिपूर्त । अपिपरम् अपिपूर्व अपिपूर्म । पपार ॥ **ऋसंयोगादेर्णादेरपित्त्वं वाच्यम्** । ८ । कित्त्वाभावाद्गुण । पपरतु पपरु । पपरिथ पूर्यात् । ईटो ग्रहाम् (प्र० १ सू० १३९) परीता-परिता परीष्यति परिष्यति अपरीष्यत्-अपरिष्यत् अपारीत् ॥ **वृद्धिहेतौ सातिटो न दीर्घः** । ९ । अपारिष्टम् अपारिषु । ह्रस्वोऽपि पिपर्तिरस्ति । पिपर्ति पिपृतः पिप्रति । पिपृयात् पिपर्तु अपिप । अपिपरत् अपिपृताम् अपिपरु अपिप अपिपर । पपार पप्रतु पप्रु । ऋतोरिड् । प्रियात् पर्ता । हनृत स्यपः (प्र० १ सू० १०८) परिष्यति अपरिष्यत् अपार्षीत् । ओहाक् त्यागे । ओकारेतौ । जहाति ॥ **ह्रेस्तौ लोपोऽनुवर्तते इकारश्च** । १० । द्विरुक्तस्य धातोराकारस्य लोपो भवति डिति हसे इकारश्च डिति हसे परे । जहति ॥ **जहातेराकारस्य ङिति हसेईर्वा वाच्य** ।११। जहित जहति ॥ **जहातेर्यादावालोपो वाच्य** । १२ । जह्यात् जहातु-जहीतात्-जहितात् जहीताम् जहिताम् जहतु ॥ **ईर्वा हौ** । १३ । जहातेर्हौ परे ईकार सिद्ध एव । पक्षे आकारेकारौ भवत । जहीहि जहिहि जहाहि अजहात् । अजहिताम् अजहीताम् अजहु । जहौ जहतु जहु । जहिथ जहाथ । दादेरे (प्र० १ सू० १२५) हेया हाता हास्यति अहास्यत् । अहासीत् । ऋ गतौ । ऋमोरि पूर्वस्य (प्र० ७ सू० ६) ॥ **असवर्णे स्वरे पूर्वस्य इयादेशो भवति** । १४ । इयर्ति इयृत इयति । इयृयात् । इयर्तु-इयृतात् इयृताम् इयृतु । इयृहि-इयृतात् इयृतम् । इयृत इयराणि इयराव इयराम । ऐयः-ऐयरत् ऐयृताम् ऐयरु । ऐयः ऐयर ऐयृतम् ऐयृत ऐयरम् ऐयृव ऐयृम । र (प्र० १ सू० ६६) वृद्धि । आर आरतु आरु । गुणोऽर्तिसंयोगाद्यो (प्र० १ सू० १३०) अर्यात् अर्ता अरिष्यति आरिष्यत् । ऋदृशो पुषादित्वात् ङप्रत्यय । सेरपवाद । गुण (प्र०१ सू० ११) आरत ॥ ॥ इति जुहोत्यादिषु परस्मैपदिप्रक्रिया ॥७॥

॥ अथात्मनेपदिन ॥ ओहाङ् गतौ ॥ **भृञा लुकि** । १ । डुभृञ् धारणपोषणयो ओहाङ् गतौ माङ् माने इत्येतेषा पूर्वस्याकारस्य इकारो भवति लुकि सति । द्वेस्तौ ( प्र० ॥ सू० १० ) जिहीते जिहाते जिहते । जिहीत जिहीताम् अजिहीत जहे हासीष्ट हाता हास्यते अहास्यत । अहास्त अहासाताम् अहासत । माङ् माने । मिमीते मिमाते मिमते । मिमीते मिमीताम् अमिमीत ममे मासीष्ट माता मास्यते अमास्यत अमास्त ॥ ॥ इतिजुहोत्यादिष्वात्मनेपदिप्रक्रिया॥८॥

---

॥ अथोभयपदिन ॥ डुभृञ् धारणपोषणयो । डुञावितौ । बिभर्ति बिभृतः बिभ्रति । बिभृते बिभृयात् बिभ्रीत बिभर्तु बिभृताम् । अबिभ अबिभृताम् अबिभरु । अबिभृत । बभार बभ्रतु बभ्रु । बभर्थ बभ्र बिभराञ्चकार बिभराञ्चक्रे बिभरामास बिभराम्बभूव । यादादौ । भ्रियात् भृषीष्ट भर्ता । ऋद्धनः स्यप ( प्र० १ सू० १०८ ) भरिष्यति भरिष्यते अभरिष्यत् अभरिष्यत अभार्षीत् । उ ( प्र० ३ सू० ३ ) अभृत । डुदाञ् दाने । ददाति ॥ **दादे** । १ । ङित्तस्य दाधोराकारस्य लोपो भवति ङिति परे । दत्त ददति । दत्ते ददाते ददते । दद्यात् ददात । ददातु दत्तात् दत्ताम् ददतु ॥ **दा हौ** । २ । दाधातोराकारस्यैकारो भवति पूर्वस्य च लोपो भवति हौ परे । देहि दत्ताम् । अददात् अदत्ताम् अददु । अदत्त ददौ ददे देयात् दासीष्ट दाता दास्यति दास्यते अदास्यत् अदास्यत । दादे पे ( प्र० १ सू० ४३ ) अदात् अदाताम् अदु ॥ **दाधास्थामित्त्य सेर्ङित्त्वम्** । ३ । ङित्त्वान गुण । लोपो ह्रस्वाज्झसे ( प्र० २ सू० १५ ) अदित अदिषाताम् अदिषत । डुधाञ् धारणपोषणयो । दधाति । ददे ( प्र० ९ सू० १ ) ॥ **पूर्वस्य ङिति झसे ध** । ४ । ध्मातस्य दधाते पूर्वदकारस्य धकारो भवति ङिति झसे परे । धत्त दधति धत्ते दध्यात् दधीत दधातु धेहि धत्ताम् अदधात् अदधा अधत्त दधौ दधे धेयात् धासीष्ट धाता धास्यति धास्यते अधास्यत् अधास्यत । ददे पे ( सू० ४३ ) अधात् अधित । णिजिर् शौचपोषणयो । इरित् । आदे ष्ण स्न ( प्र० १ सू० ६६ ) ॥ **निजा गुण** । ५ । निज्विज्विषां पूर्वस्य गुणो भवति लुकि सति । नेनेक्ति नेनिक्त नेनिजति । नेनेक्षि नेनिक्थ नेनिक्थ । नेनेज्मि नेनिज्व नेनिज्म । नेनिक्ते नेनिज्यात् नेनिजीत । नेनेक्तु नेनिक्तात् नेनिक्ताम् नेनिजतु । नेनिग्धि-नेनिक्तात् नेनिक्तम् नेनिक्त ॥ **द्वे स्वरेऽपि नोपधागुण** । ६ । द्विरुक्तस्य धातोरपि विषये पिति स्वरे उपधाया गुणो न भवति । नेनिजानि नेनिजाव नेनिजाम । नेनिक्ताम् अनेनेक् अनेनेग् अनेनिक्ताम् अनेनिजु । अनेनिक्त निनेज निनिजे निज्यात् । सिस्यो ( प्र० २ सू० २० ) निक्षीष्ट नेक्ता नेक्ता नेक्ष्यति नेक्ष्यते अनेक्ष्यत् अनेक्ष्यत अनिजत् अनिजताम् । अनैक्षीत् नामित ( प्र० १ सू० ७२ ) अनैक्षीत् अनैक्ताम् अनैक्षु । विजिर् पृथग्भावे । वेवेक्ति नेनेक्तिवत् । विष्लृ व्याप्तौ । वेवेष्टि वेविष्टे वेविष्यात् वेविषीत वेवेष्टु वेविष्टाम्

कल्पेन । तर्पिता-त्रप्ता-तर्प्ता । रारोझसे दशाम् ( प्र० १ सू० ११४ ) तर्पिष्य-ति-त्रप्स्यति-तर्प्स्यति । अतर्पिष्यत्-अत्रप्स्यत् अतर्प्स्यत् ॥ **स्पृशमृशकृशतृपां सिर्वा वक्तव्यः । ६ ।** रधादित्वाद्वेट् । अतर्पीत्-अत्राप्सीत्-अतार्प्सीत् । पुषादित्वात् ङः । अतृपत् । एव दृप् हर्षविमोहनयोः । दृप्यति । मुह वैचित्ये । मुह्यति मुमोह मुह्यात् । द्रुहादीनां घत्वढत्वे वा ( पू० १ प्र० ९ सू० १२) मोढा मोग्धा मोहिता । रधादित्वाद्वेट् । मोक्ष्यति-मोहिष्यति।अमोक्ष्यत्-अमोहिष्यत् । पुषादित्वात् ङः । अमुहत् अमोहीत् अमौक्षीत् अमुक्षत् । णश् अदर्शने । नश्यति ननाश । फणादित्वादेत्वपूर्वलोपौ । नेशतुः नेशुः । नश्यात् ॥ **मस्जिनशोर्झले नुम् वक्तव्यः । ७ ।** छशषराजादेः षः ( पू० १ प्र० ९ सू० ४३) नष्टा ॥ **नशेः षान्तस्य । ८ ।** नशेः षान्तस्य णत्वं न स्यात् । प्रनेष्टा-नशिता नङ्क्ष्यति-नशिष्यति । अनशिष्यत्-अनङ्क्ष्यत् । पुषादित्वादङ् ॥ **ङे नशेरत एत्वं वा वाच्यम् । ९ ।** अनेशत्-अनशत् । शम् दम् उपशमे ॥ **शमां दीर्घः ।१०।** शमादीनां दीर्घो भवति ये परे श्यनादौ विषये च । शाम्यति शाम्येत् शाम्यतु अशाम्यत् । शशाम शेमतुः शेमुः । शम्यात् शमिता शमिष्यति अशमिष्यत् । लिदुपादेर्ङः । अशमत् अशमीदिति केचित् । दम् श्रम् तम् भ्रम् क्षम् क्लम् मद् एते शमादयः । रूप राद्धत् । ञिमिदा स्नेहने । आञ्जी इतौ ॥ **मिदेर्ये गुणो वक्तव्यः । ११ ।** मेद्यति मेद्येत् मेद्यतु अमेद्यत् । मिमेद मिमिदतुः मिमिदुः । मिद्यात् मेदिता मेदिष्यति अमेदिष्यत् अमिदत् । असु क्षेपणे । अस्यति आस असिता असिष्यति ॥ **अस्यतेर्ङे थुग्वक्तव्यः । १२ ।** आस्थत् । इति दिवादिषु परस्मैपदिप्रक्रिया ॥ १० ॥

---

॥ अथात्मनेपदिनः ॥ जनी प्रादुर्भावे । ईकारेत् ॥ **जा जनोर्ज्ञोः । १ ।** जनी प्रादुर्भावे ज्ञाऽवबोधने अनयोर्जादेशो भवति चतुर्षु परेषु । जायते जायेत जायताम् अजायत । गमां स्वरे ( प्र० १ सू० १०७ ) जज्ञे । जज्ञोर्ञः ( पू० १ प्र० ९ सू० २१ ) जज्ञे जनिषीष्ट जनिता जनिष्यते अजनिष्यत-अजनिष्ट ॥ **पदादेस्त्वनिकर्तर्यपि सेरिण् वक्तव्यः दीपादिभ्यो वा । २ ।** पद् दीप् जन् बुध् पूरि तायि प्यायि एते पदादयः ॥ **ञोपः । ३ ।** इण्संयोगे तनो लोपो भवति । जनिवध्योर्न वृद्धिः ( प्र० ४ सू० ११ ) अजनि अजनिषाताम् । दीपी दीप्तौ । दीप्यते दीप्येत दीप्यताम् अदीप्यत दिदीपे दीपिषीष्ट दीपिता दीपिष्यते अदीपिष्यत अदीपिष्ट अदीपि । पूरी आप्यायने । पूर्यते पूर्येत पूर्यताम् अपूर्यत पुपूरे पूरिषीष्ट पूरिता पूरिष्यते अपूरिष्यत अपूरि अपूरिष्ट । पद् गतौ । पद्यते पद्येत पद्यताम् अपद्यत पेदे पत्सीष्ट पत्ता पत्स्यते अपत्स्यत । अपादि अपत्साताम् अपत्सत । बुध अवगमने । बुध्यते बुध्येत बुध्यताम् अबुध्यत बुबुधे आदिजबानाम् ( पू० १ प्र० १ सू० ७) सिस्योः ( प्र० २ सू० २०) खसे चपा झसानाम् ( पू० १ प्र० ४ सू० १८ ) भुत्सीष्ट बोद्धा भोत्स्यते । अबुद्ध अभुत्सा-

ताम् अभुत्सत । अबोधि । तायङ् पालनसन्तत्योः । तायते तताये तायिषीष्ट तायिता तायिष्यते अतायिष्यत अतायिष्ट अतायि । ओप्यायिङ् वृद्धौ । प्यायते पप्याये प्यायिषीष्ट प्यायिता प्यायिष्यते अप्यायिष्यत अप्यायिष्ट अप्यायि अप्यायिषाताम् । इमौ द्वौ भ्वादिकौ ॥ इति दिवादिष्वात्मनेपदिप्रक्रिया ॥ ११ ॥

---

॥ अथोभयपदिन ॥ णह बन्धने । नह्यति नह्यते नह्येत् नह्येत नह्यतु नह्यताम् अनह्यत् अनह्यत । ननाह नेहतु नेहु । नेहिथ-ननद्ध । नेहे । नह्यात् नत्सीष्ट । नहो ध ( द्वि० १ प्र० १० सू० १ ) नद्धा नत्स्यति-नत्स्यते अनात्स्यत्-अनत्स्यत अनात्सीत् अनाद्धाम् अनात्सु अनद्ध अनत्साताम् अनत्सत ॥ इति दिवादिषूभयपदिप्रक्रिया ॥ १२ ॥ इति यनिकरणा दिवादयो धातव ॥

---

॥ अथ स्वादय ॥ तत्रादावुभयपदिन । षुञ् अभिषवे । ञ् उभयपदार्थ । आदे ष्ण स ( प्र० १ सू० ६६ ) ॥ **स्वादेर्नुः** । १ । स्वादेर्गणान्नु प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवाद ॥ **नूप.** । २ । निकरणस्य नुप्रत्ययस्य उप्रत्ययस्य च गुणो भवति पिति परे । सुनोति सुनुत । नु धातो ( प्र० १ सू० ९४ ) सुन्वन्ति । सुनोषि सुनुथ सुनुथ । सुनोमि ॥ **ओर्वमोर्वा लोपः** । ३ । असयोगादुत्तरस्य प्रत्ययसबन्धिन उकारस्य वा लोपो भवति वमोः परयो । सुनुवः-सुन्व सुनुम सुन्म । सुनुते सुन्वाते सुन्वते । सुनुयात् सुन्वीत सुनोतु सुनुताद्वा । सुनुताम् सुन्वन्तु ॥ **ओर्वा हेः** । ४ । प्रत्ययसबन्धिन उकारादुत्तरस्य हेर्लुग्भवति वाग्रहणात्सयोगान्न । तेन तक्ष्णुहि लक्ष्णुहीत्यत्र न । सुनु सुनुतात् सुनवानि सुनुताम् असुनोत् असुनुत । सुषाव सुषुवतु । सुषविथ-सुषोथ । सुषुवे । सूयात् सोषीष्ट सोता सोष्यति सोष्यते असोष्यत् असोष्यत ॥ **स्तुसुधूञ्भ्यः पे सेरिड्वा वक्तव्यः** । ५ । असावीत् असौषीत् । टुदुस्तुनुधातूनामिट्वेति केचित् । असविष्ट असोष्ट । चिञ् चयने । चिनोति चिनुते चिनुयात् चिन्वीत चिनोतु चिनुताम् अचिनोत् अचिनुत ॥ **चिनोतेः सणादौ किरच वा वाच्यम्** । ६ । चिकाय चिक्यतु चिक्यु । चिचाय चिच्ये-चिक्ये चीयात् चेषीष्ट चेता २ चेष्यति-चेष्यते अचेष्यत्-अचेष्यत अचैषीत् अचेष्ट । स्तृञ् आच्छादने । स्तृणोति स्तृणुते । तस्तार । गुणोऽर्तिसयोगाद्यो (प्र० १ सू०१३०) तस्तरतु तस्तरु । तस्तर्थ तस्तरे स्तर्यात् ॥ **सयोगादिऋदन्तवृङ्वृञा सीस्योरात्मनेपदे इड्वा वक्तव्यः** । ७ । स्तरिषीष्ट । उ (प्र०३सू०३) स्तृषीष्ट-स्तर्ता २ स्तरिष्यति-स्तरिष्यते अस्तरिष्यत् अस्तरिष्यत अतार्षीत् अस्तरिष्ट अस्तृत । वृञ् वरणे । वृणोति वृणुत । ववार ववतु वव्रु । वृणोतेस्थपो नित्यमिट् । ववरिथ वव्रथु वव्र । ववार-ववर ववृव ववृम । वव्रे ववृढ्वे व्रियात् वरिषीष्ट । ईटो ग्रहाम् ( प्र० १ सू० १३९ ) वरीषीष्ट वरिता-वरीता वरिष्यति

वरीष्यति वरिष्यते-वरीष्यते अवारिष्यत् अवारिष्यत अवरीष्यत् अवरीष्यत । अवा-रीत् अवरिष्ट-अवरीष्ट अवृत धूञ् कम्पने । धूनोति धूनुते धूनुयात् धून्वीत धूनोतु धूनुताम् अधूनोत् अधूनुत दुधाव दुधुवे धूयात् धविषीष्ट-धोषीष्ट ॥ **स्वरतिसू-तिसूयतिधूञ्रधादीनां वा । ८ ।** धविता-धोता धविष्यति-धोष्यति अ-धविष्यत्-अधोष्यत् अधावीत् अधविष्ट-अधोष्ट । ॥ इति स्वादिषूभयपदप्र-क्रिया ॥ १३ ॥

---

॥ अथ परस्मैपदिनः ॥ ॥ हि गतौ वृद्धौ च । हिनोति ॥ **हिनुक्तस्य हिनोतेः कुत्वं वाच्यम् । १ ।** जिघाय हीयात् हेता हेष्यति अहेष्यत् अहै-षीत् । शक्ऌ शक्तौ । शक्नोति शशाक । लोपः पर्वा नित्ये यास्य (प्र०१सू०८०) शेकतुः शेकुः । शक्यात् शक्ता शक्ष्यति अशक्ष्यत् । धिवि प्रीतौ । इदित-( प्र०१ सू० ६३ ) इति नुम् ॥ **धिन्विकृण्व्योर्नों लोपो वाच्यः । २ ।** चतुर्षु ॥ **यवयोर्वले हकारे च लोपः । ३ ।** धिनोति धिनुयात् धिनोतु अधिनोत् । दिधिन्व धिन्व्यात् धिन्विता धिन्विष्यति अधिन्विष्यत् अधिन्वीत् । कृवि हिसा-याम् । कृणोति चकृण्व । धिनोतिवत् । श्रु श्रवणे ॥ **श्रुवः शृ । ४ ।** श्रुवः शृ भवति चतुर्षु परेषु । शृणोति शुश्राव शुश्रोथ श्रूयात् श्रोता श्रोष्यति अश्रोष्यत् अश्रौषीत् । ॥ इति स्वादिषु परस्मैपदिप्रक्रिया ॥ १४ ॥

---

॥ अथात्मनेपदिनः ॥ ॥ अशूङ् व्याप्तौ । ऊङानितौ । अश्नुते अश्नुवीत अश्नुताम् आश्नुत । नुगशाम् ( प्र० १ सू० ८२ ) आन्धोर्नांदौ ( प्र०१सू०३०) आनशे । ऊदितो वा (प्र० १ सू० ६९) अशिषीष्ट-अक्षीष्ट अशिता-अष्टा अशि-ष्यते-अक्ष्यते आशिष्यत-आक्ष्यत । आशिष्ट-आष्ट आक्षाताम् आक्षत ॥ इति स्वादिष्वात्मनेपदप्रक्रिया ॥ १५ ॥ इति नुविकरणाः स्वादयः ॥

---

॥ अथ रुधादयः ॥ तत्रादावुभयपदिनः । रुधिरावरणे । इरित् ॥ **रुधादे-र्श्नम् । १ ।** रुधादेर्गणाच्श्नम् प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः । मकारः स्थाननियमार्थः । णत्वम् । तथोर्ध ( प्र० १ सू० ११ ) रुणद्धि । श्नसोरल्लोपः ( प्र० ४ सू० २० ) **हसात्झसस्य सवर्णे झसे लोपो वाच्य ॥ २ ॥** रुन्धः रुन्धन्ति । रुणत्सि रुन्धः रुन्ध । रुणध्मि रुन्ध्वः रुन्ध्मः । रुन्धे रुन्धाते रुन्धते । रुन्ध्यात् रुन्धीत रुणद्धु रुन्धाम् अरुणत्-अरुणद् अरुन्ध । रुरोध रुरुधतु रुरुधुः । रुरोधिथ रुरुधे रुरुधाते रुध्यात् रुत्सीष्ट रोद्धा २ रोत्स्यति रोत्स्यते अरोत्स्यत् अरोत्स्यत । अनिटो नामिवतः ( प्र० १ सू ७२ ) अरौत्सीत् । झिस्यो. ( प्र० २ सू २८ ) अरुद्ध अरुत्साताम् अरुत्सत । इरितो वा ( प्र० १ सू ५८ ) अरुधत् । उच्छृदिर् दीप्ति-

देवनयोः । उइरावितौ । छृणत्ति छृन्तः छृन्दन्ति । छृन्ते छृन्द्यात् छृन्दीत छृणत्तु छृन्ताम् अच्छृणत् अच्छृणद् ॥ **दः सः । ३ ।** दकारस्य वा सकारो भवति सिपि विषये । अच्छृणः अच्छृणत् अच्छृणदम् अच्छृन्त । चच्छर्द चच्छृदे छृद्यात् छृत्सीष्ट-छर्दिषीष्ट छर्दिता छर्दिष्यति-छर्त्स्यति छर्दिष्यते-छर्त्स्यते अच्छर्दिष्यत् अच्छर्त्स्यत् अच्छर्दिष्यत-अच्छर्त्स्यत । इरितो वा ( प्र० १ सू ५८ ) अच्छृदत अच्छर्दीत् अच्छर्दिष्ट । उतृदिर् हिंसानादरयोः । तृणत्ति तृन्तः तृन्दन्ति तृन्ते तृन्द्यात् तृन्दीत तृणत्तु तृन्ताम् अतृणत् अतृन्त ततर्द ततृदे तृद्यात् तृत्सीष्ट-तर्दिषीष्ट तर्दिष्यति-तर्त्स्यति तर्दिष्यते-तर्त्स्यते । अतर्दिष्यत्-अतर्त्स्यत् अतर्दिष्यत-अतर्त्स्यत अतृदत् अतर्दीत् ॥ **नृततृदछृदचृतकृन्दद्योऽसेः सादिर्द्वा । ४ ।** अतर्दिष्ट । इति रुधादिषूभयपदिप्रक्रिया ॥ १६ ॥

---

॥ अथ परस्मैपदिनः ॥ शिष्लृ विशेषणे । शिनष्टि शिष्टः शिषन्ति । शिष्यात् शिनष्टु अशिनट् शिशेष शिष्यात् शेष्टा शेक्ष्यति अशेक्ष्यत् अशिषत् । हिंसि हिंसायाम् । इदितः ( प्र० १ सू ६३ ) **नमः । १ ।** नमःप्रत्ययात्परस्य नस्य लोपो भवति । हिनस्ति हिंस्तः हिंसन्ति । हिंस्यात् हिनस्तु । धौ सलोपो वा सस्य द इति केचित् । हिन्धि हिन्द्धि अहिनत्-अहिनद् ॥ **दिपि सस्य दः सिपि वा । २ ।** अहिनत् अहिनः जिहिंस हिंस्यात् हिंसिता हिंसिष्यति अहिंसिष्यत् अहिंसीत् । भञ्जो आमर्दने । ओइत् । भनक्ति भक्तः बभञ्ज भज्यात् भंक्ता भङ्क्ष्यति अभङ्क्ष्यत् ॥ **सावनिटो नित्यंवृद्धिः । ३ ।** अनिटो धातोर्नित्यं वृद्धिर्भवति परस्मैपदे सौ परे । अभाङ्क्षीत् अभांक्ताम् अभाङ्क्षुः । अञ्जु व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति अञ्ज्यात् अनक्तु आनक्-आनग् आनञ्ज अज्यात् । अञ्जिता अंक्ता अञ्जिष्यति अङ्क्ष्यति अञ्जिष्यत् आङ्क्ष्यत् ॥ **अञ्जेः सौ नित्यमिड्वाच्यः । ४ ।** आञ्जीत् ॥ इति रुधादिषु परस्मैपदिप्रक्रिया ॥ १७ ॥

---

॥ अथात्मनेपदिनः ॥ ञिइन्धी दीप्तौ । ञिई इतौ । इन्धे इन्धीत इन्धाम् ऐन्ध इन्धाञ्चक्रे इन्धिषीष्ट इन्धिता इन्धिष्यते ऐन्धिष्यत ऐन्धिष्ट । इति रुधादिष्वात्मनेपदिप्रक्रिया ॥ १८ ॥ इति नुम्विकरणा रुधादयः ॥

---

अथ तनादयः ॥ सर्वे उभयपदिनः । तनु विस्तारे ॥ **तनादेरुप् । १ ।** तनादेर्गणादुप् प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः । नुपः (प्र० १३ सू०२) तनोति तनुते तनुयात् तन्वीत तनोतु तनुताम् अतनोत् अतनुत । ततान तेनतुः तेनुः । तेने तन्यात् तनिषीष्ट तनिता २ तनिष्यति तनिष्यते अतनिष्यत् अतनिष्यत अतानीत्-अतनीत् अतनिष्ट ॥ **तनादेरकरोतेस्तन्थासोर्वा सिलोपो वाच्यः । २ ।** लोपश्चानुदात्ततनाम् ( प्र० ४ सू० ७ ) अतत अतथाः

अतनिष्ठा । क्षणु क्षिणु हिंसायाम् । क्षणोति क्षणुते क्षणुयात् क्षण्वीत क्षणोतु क्षणुताम् अक्षणोत् अक्षणुत । चक्षाण चक्षणे क्षण्यात् क्षणिषीष्ट क्षणिता २ क्षणिष्यति क्षणिष्यते अक्षणिष्यत् अक्षणिष्यत ह्म्यन्तक्षणेति ( प्र० १ सू० ९८ ) न वृद्धि । अक्षणीत् अक्षणिष्ट-अक्षत अक्षथा -अक्षणिष्ठा ॥ **तनादेरुपधाया गुणो वा पिति** । २ । क्षिणोति क्षेणोति अक्षणीत् अक्षेत-अक्षणिष्ट । षणु दाने । सेने सायात् सन्यात् असात असनिष्ट असाथा असनिष्ठा । डुकृञ् करणे । डुञावितौ । गुण ( प्र० १ सू० ११ ) नुप ( प्र० १३ सू० २ ) । करोति ॥ **ङिरयद्धुः** । ४ । करोतेरकारस्य उकारो भवति ङिति विभक्तौ परत । कुरुत कुर्वन्ति । करोषि कुरुथ कुरुथ । करोमि ॥ **कुरुच्छुरोर्न दीर्घ** । ५ । **कृञो नित्य वमोरुलोपो वाच्य** । ६ । कुर्वे कुर्मं कुरुते ॥ **कृञोये** । । ७ । कृञ उत्तरस्य उप्रत्ययस्य लोपो भवति ये परे कुर्यात् कुर्वीत करोतु करवाणि कुरुताम् करवै अकरोत् अकुरुत । चकार चक्रतु चक्रु । चकर्थ चक्रे क्रियात् कृषीष्ट कर्ता करिष्यति अकरिष्यत् अकार्षीत् अकृत अकृषाताम् अकृषत ॥ **समपर्युपेभ्यः करोतेर्भूषणेऽर्थे सुट्** । ८ । संस्करोति ॥ **अड्व्यवधानेऽपि सुट्** । ९ । समस्करोत् सञ्चस्कार ॥ **ससुट् कृञो णादौ नित्यमिड्वाच्यः** । १० । सञ्चस्करिथ । एवमुपस्कुरुते । मनु अवबोधने । मनुते मेने मन्ता । वनु याचने । परस्मैपदमित्येके । वनुते ॥ इति तनाद्युभयपदिप्रक्रिया ॥ १९ ॥ इत्युविकरणास्तनादय ॥  37227

---

अथ तुदादय ॥ तत्रादावुभयपदिन । तुद व्यथने । अकार उभयपदार्थ ॥ **तुदादेश** । १ । तुदादेर्गणात् शप्रत्ययो भवति चतुर्षु परेषु । अपोऽपवाद । ङित्वात्र गुण । तुदति तुदते तुदेत् तुदेत तुदतु तुदताम् अतुदत् अतुदत तुतोद तुतुदे तुद्यात् तुत्सीष्ट तोत्ता तोत्स्यति तोत्स्यते अतोत्स्यत् अतोत्स्यत । अतौत्सीत् अतौत्ताम् अतौत्सु । अतुत्त अतुत्साताम् अतुत्सत । भ्रस्जो पाके । ओदित ॥ **अन्यत्र सोजः** । २ । ग्रहग्रत्याभावे सम्प्रसारणं भवति ग्रहा क्ङिति च ( प्र० ३ सू० १२ ) ॥ **अप्रत्ययो ङिद्वत्** । ३ । भृज्जति भृज्जते बभ्रज्ज । ऋ संयोगात् ( प्र० १ सू० ६१ ) इति कित्वाभावान्न सम्प्रसारणम् । बभ्रज्जतु बभ्रज्जु । बभ्रज्जिथ बभ्रष्ठ बभ्रज्ज ॥ **भ्रज्जते सकाररेफौ लुप्त्वा रमागमोऽन्यपि वा वाच्य.** । ४ । बभर्ज बभर्जे भृज्ज्यात् भर्ज्याद् भ्रक्षीष्ट-भर्क्षीष्ट भ्रष्टा-भर्ष्टा भ्रक्ष्यति भर्क्ष्यति अभ्रक्ष्यत् अभर्क्ष्यत् अभ्राक्षीत् अभार्क्षीत् अभ्रष्ट-अभर्ष्ट । दिश अतिसर्जने । दिक्षीष्ट अदिक्षत् अदिक्षत । क्षिप प्रेरणे । क्षिप्सीष्ट अक्षिप्त । कृष् विलेखने । कृक्षीष्ट क्रष्टा कर्ष्टा अक्राक्षीत्-अकार्क्षीत् । अकृक्षत-अकृष्ट अकृक्षाताम् अकृक्षत । मिल सङ्गमने । मिमिले अमेलिष्ट । मुच्लृ मोक्षणे॥ **मुचादेर्मुम्** । ५ । मुचादीनां मुमागमो भवति शप्रत्यये परे । मुञ्चति मुञ्चते मुमोच मुमुचे मुच्यात् । लिस्यो ( प्र० २ सू० २० ) अनेन _ _ । चो

चु ( वृ० १ प्र० ९ सू० ५२ ) मुक्षीष्ट मोक्ता २ मोक्ष्यति मोक्ष्यते अमोक्ष्यत् अमोक्ष्यत अमुचत् अमुक्त । लुपॢ छेदने । लुम्पति लुप्सीष्ट अलुपत् । विद लाभे । विन्दति अवेदिष्ट । अनिड्ययमित्येके । वेत्ता । लिप् उपदेहे । मुच् लुप् विद् लिप् सिच् कृत् पिश् खिद् एते मुचादय । लिम्पति लिलेप अलिपत् अलिपत ॥ **लिपिसिचिह्वयतीनामात्मनेपदे सेटौ वा वाच्यः । ६ ।** अलिप्त । पिच्ल क्षरणे । सिञ्चति सिषेच सिच्यात् सिक्षीष्ट सेक्ता २ सेक्ष्यति असिचत् असिचत असिक्त ॥ ॥ इति तुदादिषूभयपदिप्रक्रिया ॥ २० ॥

---

॥ अथ परस्मैपदिन० ॥ कृती छेदने । कृन्तति चकर्त कृत्यात् कर्तिता कर्तिष्यति अकर्तिष्यत् अकर्तीत् । लुभ विमोहने । लोभिता लोब्धा अलोभीत् । चृती हिंसाग्रन्थनयो । चर्तिष्यति चर्त्स्यति अचर्तीत् । विध विधाने । वेधिता कुट कौटिल्ये ॥ **कुटादेर्ङिणद्वर्जं० प्रत्ययो ङिद्वत् । १ ।** चुकोट चुकुटिथ कुटिता अकुटीत् । त्रुट् छेदने । त्रुटयति त्रुटति । ओव्रश्चू छेदने । ओळा वृत्तौ । ग्रहां क्ङिति च ( प्र० ३ सू० १२ ) वृश्चति । वव्रश्च वव्रश्चतुः वव्रश्चु । वव्रश्चिथ वव्रष्ठ वृश्च्यात् । ऊदितो वा ( प्र० १ सू० ६९ ) व्रश्चिता-व्रष्टा । स्कोरादेश्च ( वृ० १ प्र० ९ सू० ७० ) व्रश्चिष्यति व्रक्ष्यति अव्रश्चीत् अव्राक्षीत् अव्राष्टाम् । कॄ विक्षेपे । ऋत इर् ( प्र० १ सू० १३८ ) किरति चकार चकरतु कीर्यात् करिता । ईटो ग्रहाम् (प्र०१ सू० १३९) करीता करीष्यति करिष्यति अकरीष्यत् अकरिष्यत् अकारीत् ॥ **उपात्किरतेश्छेदेर्थे सुड्वाच्यः॥२॥ हिंसायां प्रतेश्च । ३ ।** उपस्किरति उपचस्कार प्रतिस्किरति । गॄ निगरणे । गिरति ॥ **गिरते रस्य वा लः स्वरे वाच्यः । ४ ।** गिलति । जगार-जगाल जगरतु-जगलतु जगरु जगलु । अगारीत् अगालीत् । स्पृश् स्पर्शने । स्पृशति पस्पर्श स्पृश्यात् स्प्रष्टा स्पर्ष्टा स्प्रक्ष्यति-स्पर्क्ष्यति अस्प्रक्ष्यत् अस्पर्क्ष्यत् अस्प्राक्षीत् रो वा । अस्पार्क्षीत् ॥ **कृषादीनां वा सिर्वक्तव्य । ५ ।** तत्पक्षे हशषान्तात्सक् ( प्र० १ सू० ११८ ) अस्पृक्षत् । प्रच्छ ज्ञीप्सायाम् । सम्प्रसारणम् । पृच्छति । पप्रच्छ पप्रच्छतु पप्रच्छिथ पप्रष्ठ पृच्छ्यात् प्रष्टा प्रक्ष्यति अप्राक्षीत् । सृज विसर्गे । सृजति ससर्ज ससृजतु ससृजु । ससर्जिथ-सस्रष्ठ सृज्यात् । रागो क्से दृशाम् ( प्र० १ सू० ११४ ) स्रष्टा स्रक्ष्यति अस्राक्षीत् । टुमस्जो शुद्धौ । टु ओ इतौ । अन्त्यन सो ज ( प्र० २० सू० २ ) मज्जति ममज्ज मङ्क्ता । मस्जिनशोर्झसे नुम् (प्र० १ सू० ७) मङ्क्ष्यति अमाङ्क्षीत् अमाङ्क्ताम् अमाङ्क्षु । विश् प्रवेशने । वेष्टा अविक्षत् । मृश् आमर्षणे । अम्राक्षीत् अमार्क्षीत् अमृक्षत् । विच्छ गतौ । आय (प्र० १ सू० ९९ ) विच्छायति विच्छायाञ्चकार विविच्छ विच्छाय्यात् विच्छ्यात् विच्छायिता विच्छिता अविच्छायीत् । इषु इच्छायाम् । गमां छ (प्र० १ सू० १०५) इच्छति इच्छेत् इयेष एषिता एष्टा । छुप स्पर्शे । छोप्ता अच्छौप्सीत् । श्लिष गतौ । श्लेष्टा अश्लिक्षत् । खिद परिघाते । खिदति

खेत्ता अखेत्सीत् । पिश अवयवे । पिशति पेशिता ॥ इति तुदादिषु परस्मैपदिप्रक्रिया ॥ २१ ॥

---

अथात्मनेपदिनः ॥ मृङ् प्राणत्यागे ॥ **अयङि** । १ । ऋकारस्य रिङादेशो भवति अकारे प्रत्यये यङि च परे । नुधातो ( प्र० १ सू० ९४ ) म्रियते ॥ **लुङ्लिङोश्चेत्यादौ म्रियतेः परस्मैपदं वाच्यम्** । २ । ममार मम्रतु मृषीष्ट मर्ता मरिष्यति अमरिष्यत् । लोपो ह्रस्वाज्झले ( प्र० २ सू० १५ ) । अमृत अमृषाताम् अमृषत । दृङ् आदरे । द्रियते दद्रे दृषीष्ट दर्ता । ह्रस्वात् स्थयः ( प्र० १ सू० १०८ ) दरिष्यते अदरिष्यत अदृत । धृङ् अवस्थाने । ध्रियते । अधृत । पृङ् व्यायामे । व्याप्रियते व्यापरिष्यते व्यापृत व्यापृषाताम् । ओविजी भयचलनयोः । विजते विजेत विजताम् अविजत विविजे विजिता ॥ **विजेः परस्य इट् ङिद्वद्वक्तव्यः** । ३ । ततो नोपधागुणः । विजिष्यते अविजिष्यत अविजिष्ट ओलस्जी व्रीडायाम् । अन्यत्र । सो जः ( प्र० २० सू० २ ) लज्जते लज्जे अलज्जिष्ट ॥ इति तुदाद्यात्मनेपदिप्रक्रिया ॥ २२ ॥ इति अविकरणास्तुदादयः ॥

---

अथ क्र्यादयः ॥ तत्रादावुभयपदिनः । डुक्रीञ् द्रव्यविनिमये ॥ **ना क्र्यादेः** ।१। क्र्यादेर्गणात् ना प्रत्ययो भवति चतुर्षु परेषु । अपोऽपवादः । णत्वम् । क्रीणाति । **ई हले** । २ । ना इत्यस्याकारस्य ईकारो भवति ङिति हले परे । क्रीणीतः ॥ **नातः** । ३ । नाइत्यस्याकारस्य लोपो भवति ङिति स्वरे परे । क्रीणन्ति क्रीणासि क्रीणीथः क्रीणीथ । क्रीणामि क्रीणीवः क्रीणीमः । क्रीणीते क्रीणीयात् क्रीणीत क्रीणातु क्रीणीताम् अक्रीणात् अक्रीणीत । चिक्राय चिक्रियतु चिक्रियु चिक्रयिथ चिक्रेथ चिक्रिये क्रीयात् क्रेषीष्ट क्रेता २ क्रेष्यति क्रेष्यते अक्रेष्यत् अक्रेष्यत अक्रैषीत् अक्रेष्ट । प्रीञ् तर्पणे कान्तौ च । पिप्रिये । मीञ् हिंसायाम् । मीनाति ॥ **मीनातिमिनोतिदीङां गुणवृद्धिविषये ल्यपि च आत्वं वाच्यम्** । ४ । ममौ मिम्यतु मिम्यु । ममिथ-ममाथ मासीष्ट माता अमासीत् अमेष्ट । स्तृञ् आच्छादने ॥ **स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यो नुश्च** ।५। स्तुनोति स्तुनाति अस्तुनोत् चुस्कुविषे अस्कौषीत् अस्कोष्ट । स्तम्भु स्तुम्भु स्कम्भु स्कुम्भु रोधने । स्तभ्नोति-स्तभ्नाति स्तुभ्नोति-स्तुभ्नाति स्कभ्नोति स्कभ्नाति स्कुभ्नोति-स्कुभ्नाति स्तभान-स्तुभान-स्कभान-स्कुभान अस्तभत् ॥ **जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च्लेरङ् वा** । ६ । अस्तम्भीत् । पूञ् पवने ॥ **प्वादेर्ह्रस्वः** । ७ । प्वादीनां ह्रस्वो भवति चतुर्षु परेषु । पुनाति पुनीते पुनीयात् पुनीत पुनातु पुनीताम् अपुनात् अपुनीत पुपाव पुपुवे पूयात् पविषीष्ट पविता २ पविष्यति पविष्यते अपविष्यत् अपविष्यत अपावीत् अपविष्ट । कॄञ् हिंसायाम् । कृणाति कृणीते चकार चकरे । कीर्यात् करिषीष्ट अकारीत् वृञ्

कम्पने । धुनाति धुनीते दुधाव अधविष्ट- अधोष्ट । ग्रह उपादाने । ग्रहा क्रीति च ( प्र० ३ सू० १२ ) गृह्णाति गृह्णीतः गृह्णीते गृह्णीयात् गृह्णीत । गृह्णातु गृह्णीताद्वा गृह्णीताम् गृह्णन्तु ॥ **हसादान हौ** । ८ । हसान्तात्त्र्यादेर्गणादान प्रत्ययो भवति हौ परे । नामत्ययाभाव । गृहाण अगृह्णात् जग्राह जगृहे गृह्यात् । ईटो ग्रहाम् ( प्र० १ सू० १३९ ) इत ई । ग्रहीषीष्ट ग्रहीता २ ग्रहीष्यति अग्रहीष्यत् अग्रहीष्यत अग्राहीत् अग्रहीष्ट ॥ इति त्र्यादिपूभयपदिप्रक्रिया॥ २३ ॥

---

अथ परस्मैपदिन ॥ पुष् पुष्टौ । पुष्णाति पुष्णीयात् । पुष्णातु पुष्णीतात् पुष्णीताम् पुष्णन्तु । पुषाण अपुष्णात् पुपोष पुष्यात् पोषिता पोषिष्यति अपोषिष्यत् अपोषीत् । मुष स्तेये । मुष्णाति मुमोष मुष्यात् मोषिता मोषिष्यति अमोषिष्यत् अमोषीत् । शॄ हिंसायाम् । शृणाति शशार शशरतुः शशरु । शीर्यात् शरिता शरिष्यति अशरिष्यत् अशारीत् । ज्या वयोहानौ । ग्रहादिस्यात्सम्प्रसारणम् । जीनाति जीनीयात् । जिज्यौ जिज्यतु जिज्यु । जिज्यिथ-जिज्याथ जीयात् ज्याता ज्यास्यति अज्यास्यत् अज्यासीत् । ज्ञा अवबोधने । जाजनिज्ञो ( प्र०११ सू० १ ) जानाति जज्ञौ ज्ञायात् ज्ञेयात् ज्ञाता अज्ञासीत् । ली श्लेषणे । लिनाति॥ **लीलिङोरात्व वा** । १ । लली लिलाय लिल्यतुः लाता-लेता अलासीत् अलैषीत् । बन्ध् बन्धने । बध्नाति बबन्ध भन्त्स्यन्ति अभान्त्सीत् । मन्थ विलोडने । मथ्नाति । कुष् निष्कर्षे । कुष्णाति कुषाण चुकोष कुष्यात् कोषिता अकोषीत् । अश भोजने । अश्नाति अश्नीयात् अश्नातु अश्नीतात् अश्नीताम् अश्नन्तु । अशान आश अशिता आशीत् ॥ इति त्र्यादिषु परस्मैपदिप्रक्रिया ॥ २४ ॥

---

अथात्मनेपदिन ॥ वृङ् संभक्तौ ॥ वृणीते वृणीत वृणीताम् अवृणीत वव्रे वरिषीष्ट-वरीषीष्ट ॥ **संयोगादिऋदन्तवृभ्यां सिस्योरात्मनेपदे इड्वा वाच्यः** । १ । वृषीष्ट । उ ( प्र० ३ सू० ३ ) अवरिष्ट-अवरीष्ट अवृत । इत्यादि ॥ इति त्र्यादिष्वात्मनेपदिप्रक्रिया ॥ २५ ॥ इति नादिकरणा त्र्यादय ॥

---

अथ चुरादय ॥ चुर स्तेये ॥ **चुरादेः** । १ । चुरादेर्गणात् स्वार्थे जि. प्रत्ययो भवति । उपधाया गुण' । सधातु ( प्र० १ सू० १०० ) अपगुणादय । चोरयति चोरयेत् चोरयतु अचोरयत् चोरयाञ्चकार चोरयाम्बभूव चोरयामास चोरयाञ्चक्रे । ञेः ( प्र० २ सू० ७ ) चोर्यात् चोरयिता चोरयिष्यति अचोरयिष्यत् । ञेरङ् द्विश्च ( प्र० २ सू० ६ ) अङि लघौ ह्रस्व उपधाया ( प्र० २ सू० ८ ) लघोर्दीर्घ- ( प्र० २ सू० ९ ) अचूचुरत् । चिती सञ्ज्ञाने । चेतयति अचीचितत् । चिति स्मृत्याम् । इदितो नुम् ( प्र० १ सू० ६३ ) चिन्तयति

लघोरभावान्न दीर्घः । अचिचिन्तत् । चुरादेर्णिर्नेति केचित् । चिन्तति । पीड अवगाहने । पीडयति ॥ भ्राजभासभाषदीपजीवमीलपीडां वोपधाया ह्रस्वो ङपरे णौ । २ । अपीपिडत्-अपिपीडत् । प्रथ प्रख्याने । प्रथयति ॥ स्मृदृत्वरप्रथम्रदस्तृस्पृशां पूर्वस्यातोऽदङ्परे णौ । ३ । इत्वापवादः । अपप्रथत् । पृथ प्रक्षेपे ॥ उपधाया ऋवर्णस्याङि ऋ वा वक्तव्यः । ४ । इकारापवादः । अपीपृथत् अपपर्थत् । ज्ञप ज्ञानज्ञापनयोर्मित् ॥ मितां ह्रस्वः । ५ । मितां धातूनां ह्रस्वो भवति णौ परे । ज्ञपयति । चिञ् चयने । मित् ॥ चिस्फुरोर्णावात्वं वा । ६ । यातो णौ पुक् । ७ । ऋ गत्यादि-स्यस्याऽऽकारस्य च पुगागमो भवति णौ परे । चपयति-चययति । अर्च पूजायाम् । अर्चयति ॥ स्वरादेः परः । ८ । स्वरादेर्धातो परोऽवयवोऽद्वि-त्वः सस्वरो द्विर्भवति । नदराः संयोगादयो न द्वि ( अ० ६ सू० १२ ) इति रेफस्य न द्वित्वम् । आर्चिचत् । कॄत संशब्दे ॥ धातोरुपधाया ऋकारस्य ईकारादेशो वाच्यो ञिप्रत्यये परे । ९ । कीर्तयति अचिकीर्तत् । गण संख्याने । अकारान्तः । अल्लोपस्य स्थानिवत्वान्न वृद्धिः । गणयति ॥ अल्लो-पिनो नाङ्कार्यम् । १० । अजगणत् । कथगणयोरङ्यार्यं वेति केचित् । अजीगणत् । कथ वाक्यप्रबन्धे । कथयति अचकथत् अचीकथत् । ऊन परि-हाणे । ऊनयति ॥ ञिनिमित्तस्वरादेशो द्वित्वे कर्तव्ये स्थानिवत् । ११ । स्वरादेः परः ( सू० ८ ) । अर्थद् याचने । अर्थयते आर्तथत । संग्राम युद्धे । अससंग्रामत । अन्ध दृष्ट्युपघाते । आन्दधत् । अङ्क अङ्क पदे लक्षणे च । आञ्चकत् । ॥ इति चुरादिप्रक्रिया ॥ २६ ॥

---

न्तस्य गुणो वक्तव्यः । ७ । अर्पयति स्वरादेः पर (प्र० २६ सू० ८) आर्पिपत् । ष्ठा गतिनिवृत्तौ । स्थापयति ॥ **तिष्ठतेरुपधाया इकारो वक्तव्योऽङि परे** । ८ । ततो द्वित्वम् । अतिष्ठिपत् ॥ **पादेर्युक्** । ९ । पाशाच्छासाह्वेञ्व्येञां युगागमो भवति ञौ परे । पाययति ॥ **पिबतेरङि पूर्वस्यैवाकारोपधालोपौ वक्तव्यौ** । १० । अपीप्यत् । शो तनूकरणे । सन्ध्यक्षराणामा (प्र० १ सू० १२१) शाययति अशीशयत् । छो छेदने । अचीछयत् । षोऽन्तकर्मणि । साययति असीषयत् । ह्वेञ् स्पर्धायाम् ॥ **ह्वयतेरङि सम्प्रसारणं युगभावश्च वक्तव्यः । कृतसम्प्रसारणस्य ह्वयतेरङि क्रमाद्गुणवृद्धी वाच्ये** ।११। अजूहावत् अजूहवत् अजूहवताम् । व्येञ् संवरणे । व्याययति अविव्ययत् । वेञ् तन्तुसन्ताने । वाययति अवीवयत् ॥ **पातेर्ञौ लुग्वक्तव्यः** । १२ । युकोऽपवादः । पालयति अपीपलत् । रभ राभस्ये । रभसो वेगहर्षयोः ॥ **रभलभोः स्वरे णावपौ विना नुम्वाच्यः** । १३ । रम्भयति अररम्भत् । डुलभष् प्राप्तौ । लम्भयति अललम्भत् ॥ **प्रीञ्धूञोर्नुक्** । १४ । अनयोर्नुगागमो भवति ञौ परे । प्रीञ् तर्पणे । प्रीणयति अपिप्रीणत् । धूञ् कम्पने । धूनयति अदूधुनत् । ष्मिङ् ईषद्धसने ॥ **स्मयतेरात्वमात्व ञौ वाच्यम्** । १५ । विस्मापयते असिष्मपत । आङि निम् निस्मापयति असिस्मपत् ॥ **रुहेर्ञौ पो वा वाच्यः** । १६ । रुह बीजजन्मनि प्रादुर्भावे च । रोहयति । रोपयति अरूरुहत् अरूरुपत् । कृपू सामर्थ्ये । कृपो रो लः (प्र० २ सू० १९) कल्पयति ॥ **उपधाया ऋवर्णस्याङि ऋ वा वक्तव्यः** । १७ । इररारामपवादः । अचीक्लृपत् अचकल्पत् । वृतु वर्तने । वर्तयति अवीवृतत् अववर्तत् । मृजूष् शुद्धौ । मार्जयति अमीमृजत् अममार्जत् ॥ **इङादेर्ञौ पुक् च** । १८ । इङ्प्रभृतीनामात्वं भवति ञौ परे । ह्रीव्लीरीक्नूयीक्ष्मायीनां पुगागमो भवति ञौ परे । इङ् अध्ययने । अध्यापयति अध्यापिपत् ॥ **अङ्परे ञौ इङो गाङ् वा वक्तव्यः** । १९ । अध्यजीगपत् । डुक्रीञ् द्रव्यविनिमये । क्रापयति अचिक्रपत् । जि जये । जापयति अजीजपत् । ह्री लज्जायाम् । ह्रेपयति अजिह्रिपत् । व्ली वरणे । व्लेपयति अविव्लिपत् । रीङ् क्षरणे रेपयति अरीरिपत् । क्नूयी दुर्गन्धे ॥ **यवयोर्वसे ह्यारे च लोपो वक्तव्यः** ।२०। क्नोपयति अचुक्नुपत् । क्ष्मायी विधूनने । एकः क्ष्मायति तमन्यः प्रेरयति क्ष्मापयति अचिक्ष्मपत् । लीङ् श्लेषणे ॥ **लीयतेर्ञौ वात्वं वा** । २१ । विलापयति ॥ **लीलोः पुग् वक्तव्यः** ।२२। विलेपयति । व्यलीलिपत् व्यलीलपत् ॥ **लीलोर्ञौ क्रमान्नुग्लुकौ वा** । २३ । विलीनयति व्यलीलिनत् । ला आदाने । लापयति अलीलपत् । लालयति अलीललत् अलीललताम् ॥ **न दितः** । २४ । ऋकारेतोऽनेकस्वरस्य शासआदि उत पार्ये न भवति । ढौकृ गतौ । ढौकयति अडुढौकत् । टुयाचृ याच्ञायाम् । याचयति अययाचत् । शासु अनुशिष्टौ । शासयति अशशासत् । दरिद्रा दुर्गतौ । दरिद्रयति अददरिद्रत् अददरिद्रताम् । दुष वैकृत्ये ॥ **दुषेर्ञौ वा दीर्घो वक्तव्यः** ।२५।

दूषयति दोषयति अदूदुषत्। घट चेष्टायाम्॥ **मितां ह्रस्वः।२६।** धातुपाठे मित इत्येव पठितानां धातूनां ह्रस्वो भवति णौ परे। घटयति अजीघटत्। व्यथ दुःखभयचलनयोः। व्यथयति अविव्यथत्। एवं पथपश्राशातौ रूपम्॥ **जनीजृष्क्नसुरञ्जोऽमन्ताश्च।२७।** एतेऽपि मित.। जनयति अजीजनत्। जृषु वयोहानौ। पुस्त्। जरयति अजीजरत्। क्नसु ह्वरणदीप्त्योः। क्नसयति अचिक्नसत्। रञ्ज रागे॥ **रञ्जेर्णौ मृगरमणेऽर्थे नलोपो वाच्यः।२८।** रजयति मृगान् अरीरजत्। शम दम उपशमने। शमयति अशीशमत् दमयति अदीदमत्॥ **ज्ञातेर्णौ वा ह्रस्वः।२९।** ज्ञाऽवबोधने। एकः जानाति तमन्य प्रेरयतीति ज्ञपयति अजिज्ञपत्॥ **ज्वलह्वलह्मलग्लास्नाश्च वा मितः।३०।** ज्वल दीप्तौ। ज्वलयति ज्वालयति अजिज्वलत्। ग्लै हर्षक्षये। ग्लपयति ग्लापयति अजिग्लपत्। ष्णा शौचे। आदे ष्ण. स (प्र० १ सू० ६६) स्नापयति स्नपयति असिस्नपत्। ओस्फायी वृद्धौ॥ **स्फायो वकारः स्यात् णौ परे।३१।** स्फावयति अपिस्फवत्॥ **भियो णौ वा षुगागमो वाच्यः।३२।** भीषयति भापयति भाययति अबीभिषत् अबीभपत् अबीभयत्॥ **व्यापारमात्रे णिर्वक्तव्यः स च ङित्।३३।** हलं गृह्णातीति हलयति॥ इति ण्यन्तप्रक्रिया॥२७॥

---

अथ सनप्रक्रिया निरूप्यते॥ **॥इच्छायामात्मनः सः।१।** धातोरिच्छायामर्थे स प्रत्ययो भवति सा चेत्स्वसम्बन्धिनी इच्छा। भवितुमिच्छति बुभूषति। स धातु (प्र० १ सू० १००) धातुत्वाद्भूतिवादि। अदे (प्र० १ सू० १४)॥ **श्रुः से।२।** उश्च आच ऋ तस्मात् श्रुः। उवर्णान्तादृवर्णान्ताच्च महगुहोश्च से परे इट् न भवति॥ **नामिनि से।३।** इडुर्जिते सप्रत्यये परे गुणो न भवति। तॄ प्लवनतरणयोः॥ **नाम्यन्तात्परस्य सस्य कित्त्वं वाच्यम्।४।** ॠत इर्(प्र० १ सू० १३८) तरितुमिच्छति तितीर्षति अतितीर्षीत्। डुकृञ् करणे। कर्तुमिच्छति चिकीर्षति॥ **से दीर्घः।५।** से परे पूर्वस्य दीर्घो भवति। चिञ् चयने॥ **चिनोतेः सणादौ कित्वं वा वाच्यम्।६।** चिचीषति चिकीषति। जि जये। सप्रत्यये्ययोर्जेर्गिः। (प्र० १ सू० ११२) जेतुमिच्छति जिगीषति। मिश्रणे। युयूषति। डुपचष् पाके। च से (प्र०२ सू० ३) पक्तुमिच्छति पिपक्षति। पातुमिच्छति पिपासति॥ **गौणः प्रकृत्यर्थोऽन्यत्र स्यात्।७।** प्रकृतिप्रत्ययार्थयोर्मध्ये प्रत्ययार्थं प्रधानीभूतं। अत्र सप्रत्यये तु वैपरीत्यं प्रकृत्यर्थं प्रधानीभूत.। तेन काष्ठेन पिपक्षतीत्यत्र तृतीयायाः पाकेन सबन्धो न त्विच्छया। मृङ् प्राणत्यागे। मर्तुमिच्छति मुमूर्षति। पोरुर् (प्र० ७ सू० ७) पॄ पालनपूरणयोः। पुपूर्षति॥ **वृङ् इत्यस्य उर्वाच्यः।८।** वृङ् वरणे। वरितुमिच्छति वुवूर्षति॥ **रुदविदमुषग्रहिस्वपिप्रच्छः सः किद्वाच्यः।९।** रुदिर् अश्रुविमोचने। रुरुदिषति। विद् ज्ञाने। विविदिषति।

मुष स्तेये । मुमुषिषति । ग्रह उपादाने । हो ढः (वृ०१प्र०९सू०११) आदिजबानां ( वृ०१ प्र० ९ सू० ७) षढो. क' से (प्र० १ सू० ११६) षत्वम् । क्षः । गृहीतुमिच्छति जिघृक्षति । सुषुप्सति । प्रच्छ ज्ञीप्सायाम् ॥ **कृगृधृदृप्रच्छास्मिङ्रञ्ज्वगुङर्तिभ्यःसस्येट् वक्तव्यः** । १० । पिपृच्छिषति । कारेतुमिच्छति चिकारिषति । जिगरिषति जिगलिषति दिदरिषति दिधरिषति सिस्मयिषति । स्वरादेः परः ( प्र० २६ सू० ८) अञ्जिजिषति अशिशिषते अरिरिषति । अद भक्षणे । सिसयो. ( प्र० ४ सू० ४ ) इति घसादेशः । सस्तोऽनपि (प्र० १ सू० १५१) अत्तुमिच्छति जिघत्सति ॥ **हन्तीङोः सो णित्** । ११ । हन्तीङोर्धात्वोः सो णिद्भवति । हन् हिंसागत्योः । द्वित्वम् । पूर्वस्य हसादिः शेषः ( प्र० १ सू० ५७) कुहोश्चुः ( प्र० १ सू० ६४ ) झपानां जबचपा. । ( प्र० १ सू० ३२ ) यः से ( प्र० २ सू० ३ ) हनो घ्नि ( वृ० १ प्र० ९ सू० ३० ) अत उपधाया. ( प्र० १ सू० ७५ ) नश्चापदान्ते झसे ( वृ० १ प्र० ४ सू० २४ ) स धातु. ( प्र० १ सू० १०० ) अप् ( प्र० १ सू० १० ) अदे ( प्र० १ सू० १४) हन्तुमिच्छति जिघांसति ॥ **इङः से गम् वाच्यः** । १२ । अध्येतुमिच्छति अधिजिगांसते ॥ **गमेः से इड्वाच्यः** । १३ । गन्तुमिच्छति जिगमिषति । **इस्से** । १४ । अपिवद्दाधारभलभशकपतमिमीमामाइमेङ्हिंसार्थराधां स्वरस्य से परे इसादेशो भवति पूर्वस्य च लोपः । दित्सति । धित्सति । स्फोरा-घोश्च ( वृ० १ प्र० ९ सू० ७० ) खसे चपा ( वृ० १ प्र० ४ सू० १८ ) रिप्सति लिप्सति शिक्षते पित्सते ॥ **पतो वेट्** । १५ । पित्सति पिपतिषति । इट्पक्षे इसपूर्वलोपौ न भवतः । मीञ् हिंसायाम् । डुमिञ् प्रक्षेपे । मित्सति । माङ् माने । मेङ् शोधने । मित्सते । राध् संसिद्धौ । रित्सति ॥ **आप्नोतेरीः** । । १६ । आप्नोतेराकारस्येकारो भवति से परे पूर्वस्य च लोपः । आप्लृ व्याप्तौ । ईप्सते ॥ **अशेरनायौ वा** । १७ । अशेरिच्छायां सस्थाने वा अनाय प्रत्ययो भवति । अशनायति अशिशिषति ॥ **पततनदरिद्राभ्यः से वा इड्वाच्यः** । । १८ । तितनिषति तितंसति ॥ **तनेः से वा दीर्घः** । १९ । तितांसति दिदरिद्रिषति दिदरिद्रासति ॥ **वेङिस्से दीर्घता च** । २० । दम्भिश्रप्योर्धात्वोर्गो इट् भवति सप्रत्यये परे । यदानेट् तदा किम् । अनयोर्दम्भिश्रप्योर्धात्वो. सानुस्वारस्य स्वरस्य इस् भवति इकारस्य दीर्घता दम्भेरिकारस्य वा दीर्घता । चकारात्पूर्वस्य लोपः । दम्भदम्भने । आत्मनः दम्भितुमिच्छति दिदम्भिषति । द्वित्वम् । इस् । आदिजबानाम् ( वृ० १ प्र० ९ सू० ७ ) खसे चपा झसानाम् ( वृ० १ प्र० ४ सू० १८ ) स्फोराघोश्च ( वृ० १ प्र० ९ सू० ७० ) वा दीर्घता । धीप्सति-धिप्सति । ज्ञाऽवबोधने । इच्छायामात्मनः स. ( प्र० २८ सू० १ ) द्विश्च ( प्र० १ सू० २८ ) हृस्व. ( प्र० १ सू० ३१ ) पूर्वस्य हसादिः शेष. ( प्र० १ सू० ५७ ) यसे ( प्र० २ सू० ३ ) वा इट् गुणः ( प्र० १ सू० ११ ) एअय् ( वृ० १ प्र० २ सू० ५ ) स्तहीनम् ( वृ० १ प्र० २ सू० ४ )

भत्वम्। स धातुः (प्र० १ सू० १००) तिप्। अप् (प्र० १ सू० १०) अदे (प्र० १ सू० १४) आत्मनः ज्ञापयितुमिच्छतीति जिज्ञापयिषति। पक्षे। जिज्ञापि स इति स्थिते। सस्य इस् तस्य दीर्घता। पूर्वस्य लोपः। अः (प्र० २ सू० ७) स्कोरायोश्च (वृ० १ प्र० ९ सू० ७०) ज्ञीप्सति। ज्ञप ज्ञानज्ञापनयोः। जिज्ञापयिषति। मितां ह्रस्वः (प्र० २६ सू० ५) जिज्ञपयिषति ज्ञीप्सति॥ इति सन्प्रक्रिया॥ २॥

---

**अथ यङ्प्रक्रिया निरूप्यते॥ अतिशये हसादेर्यङ् द्विश्च। १।** हसादेरेकस्वराद्धातोरतिशयेऽर्थे यङ् प्रत्ययो भवति तस्मिन्सति धातोर्द्वित्वम्॥ **यङि। २।** यङि सति लुकि च पूर्वस्य नामिनो गुणो भवति। स धातुः (प्र० १ सू० १००) ङित्वादात्मनेपदम्। अप् (प्र० १ सू० १०) अतिशयेन भवतीति बोभूयते बोभूयेत बोभूयताम् अबोभूयत बोभूयांचक्रे बोभूयिषीष्ट बोभूयिता बोभूयिष्यते अबोभूयिष्यत अबोभूयिष्ट। बोभुज्यते॥ **अनपि च हसात्। ३।** हसादुत्तरस्य यङो लुग्भवति अनपि विषये॥ **धात्वंशलोपनिमित्ते आर्धधातुके परे तन्निमित्तेसमाननामिनां गुणवृद्धी न वाच्ये। ४।** बोभुजांचक्रे। मुह वैचित्त्ये। मोमुह्यते। लिह आस्वादने। लेलिह्यते। हु दानादनयोः। जोहूयते। विद ज्ञाने। वेविद्यते॥ **आतः। ५।** यङि लुकि च सति पूर्वस्य अकारस्य आकारो भवति अकिति। पापच्यते। पठ व्यक्तायां वाचि। पापठ्यते॥ **सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः। ६।** सोसूच्यते सोसूत्र्यते मोमूत्र्यते। गत्यर्थात्कौटिल्ये एव यङ्। स्वरादेः परः (प्र० २६ सू० ८) अट गतौ। यङ्सहितस्य द्वित्वम्। अट्य अट्य इति स्थिते। पूर्वस्य हसादिः शेषः (प्र० १ सू० ५७) आतः (प्र० २९ सू० ५) इति पूर्वस्यात्वम् कुटिलं अटतीति अटाट्यते अटाटांचक्रे अटाटिषीष्ट। व्रज गतौ। कुटिलं व्रजतीति वाव्रज्यते। अशू भोजने। अशाश्यते। ऊर्णुञ् आच्छादने ऊर्णोनूयते। नदराः संयोगादयो द्विर्न (प्र० ६ सू० १२) गुणोर्तिसंयोगाद्योः (प्र० १ सू० १२०)॥ **यकारपरस्य रेफस्य द्वित्वं वाच्यम्। ७।** अरार्यते॥ **लुपसदचरजपजभदहदशगॄभ्यो धात्वर्थगर्हायामेव यङ्। ८।** गर्हितं लुम्पतीति लोलुप्यते। सासद्यते॥ **जमजपां नुक्। ९।** जमान्तस्य जपादीनां च पूर्वस्य नुगागमो भवति यङि लुकि च सति। जप् जभ् दह् दश् भञ्ज् पश् एते जपादयः। जङ्गम्यते बम्भ्रम्यते। अत्रसेऽप्यनुस्वारः। आदेशिना आदेशो निर्दिश्यते। यंयम्यते। कण शब्दे। चङ्कण्यते। तन्तन्यते। जप मानसे च। जपतीति जञ्जप्यते। जभ गात्रविनामे। जभतीति जञ्जभ्यते। दह भस्मीकरणे। दन्दह्यते। नो लोपः (प्र० १ सू० ६०) दन्दश्यते। बम्भज्यते। पशतीति पम्पश्यते। पश बाधनग्रन्थनयोः॥ **चरफलोरुच्चास्य। १०।** अनयोर्यङि लुकि च सति पूर्वस्य नुगागमो भवति पूर्वात्परस्य

अकारस्य उकारः । चञ्चूर्यते । फल निष्पत्तौ । पम्फुल्यते ॥ **वलयान्तस्य वा नुक्** । ११ । मव स्थौल्ये । ममव्यते-मामव्यते । चल कम्पने । चञ्चल्यते-चाचल्यते । दयङ् दाने । दन्दय्यते-दादय्यते ॥ **रीगृदुपधस्य** । १२ । ऋकारोपधस्य धातोर्यङि सति पूर्वस्य रीगागमो भवति । किरादावाराभावः । नृती गात्रविक्षेपे । अतिशयेन नृत्यति नरीनृत्यते नटः ॥ **अत्र णत्वाभावो वाच्यः** । १३ । वृतु वर्तने । वरीवृत्यते । ग्रह उपादाने । जरीगृह्यते ॥ **ऋत्वतो रिग्वाच्यः** । १४ । ओव्रश्चू छेदने । वरीवृश्च्यते । प्रच्छ ज्ञीप्सायाम् । परीपृच्छ्यते । कृपू सामर्थ्ये । कृपो रो लः । ( प्र० १ सू० ७० ) ऋन्द । चरीक्लृप्यते ॥ **वशेर्यङि न सम्प्रसारणम्** । १५ । वावश्यते ॥ **पदस्कसुभ्रंसुध्वंसुदशुकसुधञ्चुपतस्कन्दां यङि लुकि च सति पूर्वस्य नुगागमो वाच्यः** । १६ । पनीपद्यते । नो लोपः ( प्र० १ सू० ६० ) स्रंसु ध्वंसु अध पतने । सनीस्रस्यते । दनीध्वस्यते । बनीभ्रस्यते । वञ्चु वञ्चने । वनीवच्यते दनीदस्यते चनीकस्यते पनीपत्यते चनीस्कद्यते ॥ **ऋतोरिः** । १७ । ऋकारस्य रिरादेशो भवति यङि सति । ततो द्वित्वम् । ये ( प्र० १ सू० ९७ ) चेक्रीयते चेक्रीयांचक्रे जेहीयते ॥ **दादेरिः** । १८ । अपिदाधामाङोहाकृपिबसोस्थानामिकारो भवति किति ङिति हसे परे । देदीयते देदीयांचक्रे । ये ( ९७ ) देधीयते ममीयते जेगीयते जेहीयते पेपीयते सेषीयते तेष्ठीयते ॥ **घ्राध्मोरी** । १९ । अनयोरीकारो भवति यङि सति । जेघ्रीयते देध्मीयते ॥ **हन्तेर्हिंसायां घ्नी वा वाच्यः** । २० । जेघ्नीयते । अमन्तस्य नुक् ( प्र० २९ सू० ९ ) ॥ **द्विरुक्तस्य हन्तेः कुत्वं वाच्यम्** । २१ । जङ्घन्यते ॥ **चायो यङि कीर्वाच्यः** । २२ । चायृ संतानपालनयोः । चेकीयते ॥ **कवतेर्यङि चुत्वाभावो वाच्यः** । २३ । कु शब्दे । चोकूयते ॥ **शीङोऽयङ् ङिति ये वक्तव्यः** । २४ । शाशय्यते । डीङ् गतौ । डेडीयते । तीङ् गतौ । तेतीयते इति यङ्प्रक्रिया ॥ २९ ॥

---

अकारस्य उकारः । चञ्चूर्यते । फल निष्पत्तौ । पम्फुल्यते ॥ **वलपान्तस्य वा लुक् । ११ ।** मव स्थौल्ये । ममव्यते-मामव्यते । चल कम्पने । चञ्चल्यते-चाचल्यते । दयङ् दाने । दन्दय्यते-दादय्यते ॥ **रीगृदुपधस्य । १२ ।** ऋकारोपधस्य धातोर्यङि सति पूर्वस्य रीगागमो भवति । किरत्वादाकाराभावः । नृती गात्रविक्षेपे । अतिशयेन नृत्यति नरीनृत्यते नटः ॥ **अत्र णत्वाभावो वाच्यः । १३ ।** वृतु वर्तने । वरीवृत्यते । ग्रह उपादाने । जरीगृह्यते ॥ **ऋरवतो रिग्वाच्यः । १४ ।** ओव्रश्चू छेदने । वरीवृश्च्यते । प्रच्छ ज्ञीप्सायाम् । परीपृच्छ्यते । कृपू सामर्थ्ये । कृपो रो लः । ( प्र० १ सू० ७० ) क्लृप् । चरीक्लृप्यते ॥ **वशेर्यङि न संप्रसारणम् । १५ ।** वावश्यते ॥ **पदस्रंसुध्वंसुभ्रंसुदस्तुकसूवञ्चुपतस्कन्दां यङि लुकि च सति पूर्वस्य नुगागमो वाच्यः । १६ ।** पनीपद्यते । नो लोपः ( प्र० १ सू० ६० ) स्रंसु ध्वंसु अध. पतने । सनीस्रस्यते । दनीध्वस्यते । बनीभ्रस्यते । वञ्चु वञ्चने । वनीवच्यते दनीदस्यते चनीकस्यते पनीपत्यते चनीस्कद्यते ॥ **ऋतोरिः । १७ ।** ऋकारस्य रिरादेशो भवति यङि सति । ततो द्वित्वम् । ये ( प्र० १ सू० ९७ ) चेक्रीयते चेक्रीयांचक्रे जेह्रीयते ॥ **दादेरिः । १८ ।** अपिदाधामाङोहाक्पिबसोस्थानामिकारो भवति किति ङिति हसे परे । देदीयते देदीयांचक्रे । ये ( ९७ ) देधीयते मेमीयते जेगीयते जेहीयते पेपीयते सेषीयते तेष्ठीयते ॥ **घ्राध्मोरी । १९ ।** अनयोरीकारो भवति यङि सति । जेघ्रीयते देध्मीयते ॥ **हन्तेर्हिंसायां घ्नी वा वाच्यः । २० ।** जेघ्नीयते । अमजपा नुक् ( प्र० २९ सू० ९ ) ॥ **द्विरुक्तस्य हन्तेः कुत्वं वाच्यम् । २१ ।** जघन्यते ॥ **चायो यङि की वाच्यः । २२ ।** चायृ सन्तानपालनयोः । चेकीयते ॥ **कषतेर्यङि चुत्वाभावो वाच्यः । २३ ।** कु शब्दे । चोकूयते ॥ **शौडोऽयट् द्विसि ये वक्तव्यः । २४ ।** शाशय्यते । ढौकृ गतौ । डोढौक्यते । तौकृ गतौ । तोत्रौक्यते इति यङ्प्रक्रिया ॥ २५ ॥

---

अथ यङ्लुक्प्रक्रिया निरूप्यते ॥ **वान्यत्र लुगनुवर्तते । १ ।** अन्यत्रेत्यचप्रत्ययसयोगे विनापि वा यङो लुग्भवति ॥ **लुकि सति पितिसिम वा इकारो वक्तव्यः । २ ।** बोभवीति बोभोति बोभुतः बोभुवति । यङ्लुगन्त परस्मैपदं ह्वादिवच्च द्रष्टव्यम् । ह्वादित्वादपो लुक् द्वित्वमपि ज्ञातव्यम् । बोभूयात् । बोभवीतु बोभोतु-बोभूतात् बोभूताम् बोभुवतु । अबोभवीत् । अबोभोत् अबोभूताम् अबोभवुः । बोभवाचकार बोभूयात् बोभविता बोभविष्यति अबोभविष्यत् । दादे पे ( प्र० १ सू० ४३ ) गुणं बाधित्वा नित्यत्वाद्वुक् । अबोभूवीत्-अबोभोत् अबोभूताम् अबोभुवुः । पापचीति-पापक्ति पापक्तः पापचति । पापच्यात् पापचीतु-पापक्तु । झसाद्धिर्हे ( प्र० ४ सू० २ ) पापग्धि अपापचीत् अपापक् पापचांचकार पापच्यात् पापचिता पापचिष्यति अपापचिष्यत् अपाप-

चीत् ॥ द्वे.। ३। द्विरुक्तस्य पिति सार्वधातुके स्वरेऽपि नोपधाया गुणः। बो-भुजीति-बोभोक्ति अबोभुजीत् अबोभोक् वावदीति-वावत्ति जाघटीति-जाघट्टि ॥ **ऋकारान्तानामृदुपधानां च यङ्लुकि च सति पूर्वस्य रुकारिक्-रीकू आगमा वक्तव्याः। ४। ८:** (प्र० १ सू० ८६) डुकृञ् करणे। चर्करीति-चरिकरीति चरीकरीति। चर्कर्ति-चरिकर्ति-चरीकर्ति चर्कृत-चरिकृतः चरीकृत चर्करति-चरिकरति-चरीकरति अचर्कारीत्-अचरिकारीत् अचरीकारीत् वर्वृतीति-वरिवृतीति-वरीवृतीति। वर्वर्ति वरिवर्ति-वरीवर्ति। अवर्वृतीत्-अवरिवृतीत्-अवरीवृतीत् ॥ **रात्सस्य। ५।** रेफादुत्तरस्य स-स्यैव लोपो नान्यस्य। अवर्वर्त्-अवरिवर्त्-अवरीवर्त्। अवर्वृताम्-अवरिवृताम् अवरीवृताम्। वर्वर्तांचकार-वरिवर्तांचकार-वरीवर्तांचकार। घनीघ्नश्चीति घनीघ्रोष्टि। नो लोप (प्र० १ सू० ६०) वनीवक्तः वनीवञ्चति। जङ्गमीति जङ्गन्ति। लोपस्त्वनुदात्ततनाम् (प्र० ४ सू० ७) जङ्गत गमां स्वरे (प्र० १ स० १०७) जङ्गन्ति। धातुग्रहणोक्त यङ्लुकि वेति केचित्। जङ्गमति जङ्ग-मीति ॥ **मो नो धातोः। ६।** धातोर्मकारस्य नकारो भवति झमे पदान्ते वमयोश्च। जङ्गन्मि जङ्गन्व. जङ्गन्म ॥ **द्विरुक्तस्य हन्तेः कुत्वं वाच्यम्। ७।** जङ्घनीति-जङ्घन्ति जङ्घत. जङ्घति। जाहेति-जाहाति जाहीत. जाहति। एव दाधेत्यादि। दादेति-दादाति दत्त दादति दादेतु दादेयात् अदादात्। एव धेट्। दाधेति-दाधाति दाद्धः दाधति। दाधेयात् अदाधासीत् अदाधात् अदाधत्। धाञ्। दाधाति धत्तः। पितोस्तु दादेति दादीत. दादीहि दादायात् अदादासीत्। जहाते. पूर्वस्य दीर्घो वेति केचित्। जहाति ॥ ॥ इति यङ्लुङ्प्रक्रिया ॥३०॥

---

अथ नामधातुप्रक्रिया ॥ **नाम्नो य ई चास्य।१।** नाम्न इच्छायामर्थे यः प्रत्ययो भवति तत्सन्नियोगे चाकारस्य ईकारः। आत्मन पुत्रमिच्छतीति पुत्री-यति। पुत्रीयेत् पुत्रीयतु अपुत्रीयत् इत्यादि ॥ **यादौ प्रत्यये ओकारौकार-योरवावौ वक्तव्यौ। २।** गामिच्छतीति गव्यति। नावमिच्छतीति नाव्यति। राघति मयति। पुष्पयति। अस्मयति। धनीयति ॥ **काम्यश्च। ३।** पुत्रमि-च्छति पुत्रकाम्यति गव्याञ्चकार ॥ **यकारस्यानपि वा लोपो वाच्यः। ४।** गवांचकार गव्यात् गव्यिता-गविता। अगव्यीत् अगवीत् अगव्यिषम्-अगवि-षाम् अगव्यिषुः अगविषु.। नाव्यात् नाव्यिता-नाविता अनाव्यीत् अनावीत् ॥ **हलात्तद्धितस्य लोपो ये। ५।** गार्गीयति वात्स्यति ॥ **हलाद्यस्य लोपो वाऽनपि। ६।** समिध्यिता समिधिता ॥ **मान्ताव्ययाभ्यां यो न। ७।** किमिच्छति इदमिच्छति स्वरिच्छति ॥ **करणे च। ८।** नाम्नः करणेऽर्थे य. प्रत्ययो भवति। कण्डू करोतीति कण्डूयति नमस्यति तपस्यति वरिवस्यति। गुरून् शुश्रूषत इत्यर्थ ॥ **क्षीरलवणयोस्तृष्णायां यः सुट्च। ९।** क्षीर-

स्यति लवणस्यति ॥ **शब्दादिभ्यो यङ्** । १० । ये ( प्र० १ सू० ९७ ) शब्दायते वैरायते कलहायते अभ्रायते मेघायते कष्टायते ॥ **ऊष्मबाष्पाभ्यामुद्वमने यङ् वाच्यः** । ११ । ऊष्माणमुद्वमति ऊष्मायते बाष्पायते ॥ **ञिर्डित्करणे** । १२ । नाम्नो ञि० प्रत्ययो भवति करणेऽर्थे स च डित् । ञकार उभयपदार्थ । घट करोतीति घटयति । अग्लोपिनो नाङ्कार्यम् । अजघटत् । महान्त करोतीति महयति । अममहत् ॥ **आविष्ठवत्कार्यम्** ॥ १३॥ **पृथ्वादेर०** । १४ । पृथ्वादेर्ऋकारस्य रो भवति ञौ परे । पृथुं करोति प्रथयति म्रदयति द्रढयति । स्थूल करोति स्थवयति । ओङि लघौ ह्रस्व उपधाया ( प्र० २ सू० ८ ) अतिस्थवत् । दवयति अदीदवत् । प्रिय करोति प्राययति । गुरु करोति गरयति । स्थिर करोति स्थापयति । ऊढि करोतीति ऊढयति । ञेरङ् ढिश्च ( प्र० २ सू० ६ ) अः ( प्र० २ सू० ७ ) स्वरादे परः ( प्र० २६ सू० ८ ) अङ्पूर्वस्य ढस्य वा जः । औडिढत् औजिढत् ऊढ करोतीति ऊढयति ॥

**वहः कृतक्तौ कृतसंप्रसारे होढस्तथोर्धः ष्टुभिना ढिढश्च ॥**
**ऊढिश्च ञिर्डित्करणे स धातुर्ञेरङ् स्वरादेर्द्विज औजढश्च ॥१॥**

औजढत् ॥ **कर्तुर्यङ्** । १५ । कर्तुरुपमानादाचारेऽर्थे यङ् प्रत्ययो भवति । श्येन [illegible] आचरतीति श्येनायते काक । पण्डितायते मूर्ख ॥ **यङि सलोपो वाच्यः** । १६ । **पयसस्तु विभाषया** । १७ । अप्सरायते ओजायते पयायते पयस्यते सुमनायते ॥ **नाम्न आचारे क्विप् वाच्य** । १८ । कृष्ण इव आचरति कृष्णति । क्विपो लोप ॥ **आचार उपमानात्** । १९ । कर्माधारयोरुपमानात् य प्रत्ययो भवति आचारेऽर्थे । अकारस्येकार । पुत्रीयति शिष्यमुपाध्याय । प्रासादीयति कुट्याम् ॥ **भृशादिभ्योऽभूततद्भावे यङ् वाच्य** । २० । अभृशो भृशो भवतीति भृशायते । श्यामायते इत्यादि ॥ **अश्ववृषयोर्मैथुनेच्छायां यः प्रत्ययः सुगागमश्च** । २१ । अश्वस्यति वडवा । वृषस्यति गौ ॥ **सुखादिभ्यो ज्ञापनायां यङ्** । २२ । सुख ज्ञापयति सुखायते । इति नामधातुप्रक्रिया ॥ ३१ ॥

---

**अथात्मनेपदव्यवस्था** ॥ **निविशादे०** ।१। नीत्याद्युपसर्गपूर्वकाद्विशादेर्धातोरात्मनेपद भवति । निविशते ॥ **विपराभ्यां जेः** ।२। विजयते पराजयते ॥ **समो गमादिभ्यः** । ३ । संगच्छते ॥ **गमः परौ सिस्यौ आत्मनेपदे वा कितौ वाच्यौ** । ४ । लोपस्त्वनुदात्ततनाम् ( प्र० ४ सू० ७ ) संगसीष्ट संगसीष्ट । लोपो ह्रस्वाज्झसे ( प्र० २ सू० १५ ) समगत समगस्त । ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । समृच्छते । संपृच्छते । स्वृ शब्दोपतापयो । सस्वरते।सस्वृषीष्ट संस्वरिषीष्ट । समियृते संशृणुते संवित्ते संविदाते ॥ **वित्तेरन्तो वा रुट् भाति** । ५ । संविद्रते संविदते संपश्यते गम ऋच्छ प्रच्छ स्वृ ऋ श्रु विद दृश एते गमा-

दपः ॥ **आङो दोनास्यविहरणे** । ६ । आङ्पूर्वाद्ददातेरात्मनेपदं भवति मुखप्रसारणव्यतिरिक्तेऽर्थे । आदत्ते । मुखं व्याददाति अत्र न । **क्रीडोऽनुसंपरिभ्यश्च** । ७ । अनुसंपरिभ्यः क्रीडतेरात्मनेपदं स्यात् । क्रीड विहारे शब्दे च । अनुक्रीडते संक्रीडते परिक्रीडते ॥ **शब्दे तु न** । ८ । संक्रीडति चक्रम् ॥ **समवप्रविभ्यः स्थः** । ९ । एभ्यस्तिष्ठतेरात्मनेपदं भवति । संतिष्ठते अवतिष्ठते प्रतिष्ठते उपतिष्ठते वितिष्ठते ॥ **आङो यमहनः** । १० । आङ्पूर्वयोर्यमहनोरात्मनेपदं भवति । आयच्छते । आहते । अकर्मकयोरात्माङ्गकर्मकयोर्वा - आयच्छते पाणिम् । आहते शिरः । अन्यथा परशिर आयच्छति । शत्रुमाहन्ति ॥ **हन्तेरात्मनेपदे सिः किद्वाच्यः** । ११ । नो लोपः ( प्र० १ सू० ६० ) आहत । लोपस्त्वनु ( प्र० ४ सू० ७ ) ॥ **हन्तेः स्यादौ पदयोर्वधादेशो भवति वा** । १२ । आवधिष्ट ॥ **उद्विभ्यां तपः** । १३ । उद्विभ्यां परस्याकर्मकस्यात्माङ्गकर्मकस्य वा तपतेरात्मनेपदं भवति । उत्तपते वितपते पाणिम् । अन्यथा महीं वितपत्यर्कः ॥ **उदश्चरस्त्यागे** । १४ । उत्पूर्वाच्चरतेस्त्यागेऽर्थे आत्मनेपदं भवति । धर्ममुच्चरते त्यजतीत्यर्थः । त्यागे किम् । मन्त्रमुच्चरति ॥ **समस्तृतीयायुक्तात्** । १५ । सम्पूर्वाच्चरतेस्तृतीयान्तेन पदेन युक्तादात्मनेपदं भवति । अश्वेन संचरते ॥ **व्यवपरिभ्यः क्रीञः** । १६ । एभ्यः क्रीणातेरात्मनेपदं भवति । विक्रीणीते अवक्रीणीते परिक्रीणीते ॥ **शप उपालम्भे** । १७ । उपालम्भेऽर्थे शपतेरात्मनेपदं भवति । वाचा शरीरस्पर्शनमुपालम्भः । मित्राय शपते । मित्रशरीरं स्पृशति शपथं करोतीत्यर्थः । उपालम्भे किम् । दुष्टं शपति । शापं ददातीत्यर्थः । **ज्ञाश्रुस्मृदृशां सन्नन्तानामात्** । १८ । सप्रत्ययान्तानामेषामात्मनेपदं भवति । सः से ( प्र० २ सू० ३ ) जिज्ञासते शुश्रूषते सुस्मूर्षते दिदृक्षते **अनुपसर्गाज्ज्ञानातेरात्मगामिनिफले आत्मनेपदं वाच्यम्** । १९ । गां जानीते ॥ **कर्मव्यतिहारेऽन्यत्र हिंसादेरात्** । २० । कर्मव्यतिहारेऽर्थे वाच्ये हिंसार्थान्गत्यर्थान्पठजल्पहसान् विहाय इतरेतरान्योन्यपरस्परपदाभावे सर्वेभ्यो धातुभ्य आत्मनेपदं भवति । परस्परमेकक्रियाकरणं कर्मव्यतिहारः । श्रद्धा आस्तिक्यबुद्धिः । श्रद्धा व्यतिभवते । परस्परं भवतीत्यर्थः । व्यतिस्ते । निघ्नन्ति यादिनः । अन्यत्रेति किम् । व्यतिघ्नन्ति व्यतिगच्छन्ति व्यतिपठन्ति व्यतिजल्पन्ति व्यतिहसन्ति । इतरेतरं परस्परं अन्योन्यं वा व्यतिलुनन्ति ॥ **भुजो भोजने आत्मनेपदं वाच्यम्** । २१ । भुङ्क्ते ओदनम् । भुनक्ति महीं नृपः ॥

इत्यात्मनेपदव्यवस्थाप्रक्रिया ॥ ३२ ॥

---

अथ भावकर्मणोर्यकि प्रक्रिया ॥ **यक् चतुर्षु** । १ । धातोर्भावे कर्मणि च यक् प्रत्ययो भवति चतुर्षु पूर्वोक्तेषु परतः । ककारो गुणप्रतिषेधार्थः ॥ **आद् भुवि कर्मणि** । २ । अकर्मकेभ्यो भुवि भावे सकर्मकेभ्यश्च कर्मण्यात्मनेपदं

भवति । ये कर्मनिरपेक्षां क्रियामाहुस्ते अकर्मकाः भूघुआस्शीङ्प्रभृतयः । तदुक्तम् ॥

लज्जासत्तास्थितिजागरणं वृद्धिक्षयभ-
यजीवितमरणम् ॥ शयनक्रीडारुचिदी-
प्त्यर्थं धातुगणं तमकर्मकमाहुः ॥ १ ॥

भावस्यैकत्वादेकवचनमेव भवति प्रथमपुरुषस्य । भूयते भवता । भूयेत भूयताम् अभूयत बभूवे ॥ **स्वरान्तानां हन्ग्रहदृशां च भावकर्मणोः सिसतासीष्यपामिट् वा इण्वद्वक्तव्यः ।३।** वाशब्दात्सेटां धातूनां नित्यमिट् स विकल्पेन णित् । अनिटां धातूनां विकल्पेन इट् स नित्यं णित् । एवं च हन्दृशोरनिटोरिट् स च नित्यं णित् । ग्रहधातुस्तु सेट् । ततः परो नित्यमिट् स च वा णित् । णित्त्वाद्वृद्धिः । भाविषीष्ट । णित्त्वाभावे । भविषीष्ट भाविता-भविता भाविष्यते-भविष्यते अभाविष्यत-अभविष्यत ॥ **इण् तन्यकर्तरि ।४।** धातोस्तनि परे भावे कर्मणि च इण् प्रत्ययो भवति । सेटपवादः । णो वृद्ध्यर्थः ॥ **तलोपः ।५।** इण्संयोगे तनो लोपो भवति । अभावि । अकर्मकोऽपि कदाचित् सकर्मकतामनुभवति । उक्तं च ।

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ॥
विहाराहारसंहारप्रतिहारप्रहारवत् ॥ २ ॥
धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते ॥
विशिनष्टि तमेवार्थमुपसर्गगतिस्त्रिधा ॥ ३ ॥

सुखमनुभूयते स्वामिना । अन्वभावि भवो भवता । अन्वभाविषाताम् अन्वभविषाताम् अन्वभाविषत । अन्वभविषत ॥ **शीङोऽयङ् किति ङिति ये वक्तव्यः ।६।** शय्यते शिश्ये शायिषीष्ट शयिषीष्ट अशायि । अन्वशायि अन्वशायिषाताम् अन्वशयिषाताम् अन्वशायिषत-अन्वशयिषत । ये कर्मसापेक्षां क्रियामाहुस्ते सकर्मकाः । अथ कि । घटः क्रियते देवदत्तेन । त्वं दुःखी क्रियसे रागैः । विरागैः सुख्यह क्रिये । चक्रे कारिषीष्ट-कृषीष्ट कारिता-कर्ता कारिष्यते करिष्यते अकारिष्यत-अकरिष्यत । अकारि अकारिषाताम् अकृषाताम् अकारिषत-अकृषत । चिञ् चयने । चीयते चिच्ये चायिषीष्ट-चेषीष्ट चायिता-चेता चायिष्यते-चेष्यते अचायिष्यत अचेष्यत । अचायि अचायिषाताम्-अचेषाताम् । दादेरिः ( प्र० २९ सू० १८ ) दीयते । ददे ददाते ददिरे ॥ **आतो युक् ।७।** आकारान्ताद्धातोर्युगागमो भवति ञिति णिति च परे । दायिषीष्ट-दासीष्ट दायिता-दाता दायिष्यते-दास्यते । अदायि अदायिषाताम् । दाधास्थामित्वम् अदिषाताम् । धीयते अधायि अधायिषाताम् । अधिषाताम् । स्थीयते अस्थायि । स्तूयते तुष्टुवे अस्तावि अस्ताविषाताम्-अस्तोषाताम् हरिहरौ भक्तेन । हन्यते ।

हनो घ्न ( वृ० १ प्र० ९ सू० ३० ) जघ्ने घानिषीष्ट हसीष्ट ॥ **हन्तेः स्याशीर्यदादौर्वधादेशो वक्तव्यः आति वा । ८ ।** वधिषीष्ट घानिता-हन्ता घानिष्यते-हनिष्यते अघानिष्यत-अहनिष्यत अघानि अघानिषाताम् ॥ **हन आत्मनेपदे सिः किद्वाच्यः । ९ ।** लोपस्त्वनुदात्ततनाम् ( प्र० ४ सू० ७ ) अहसाताम् अघानिषत-अहसत अवधि अवधिषाताम् । ग्रहां क्ङिति च ( प्र० ३ सू० १२ ) गृह्यते जगृहे ग्राहिषीष्ट ईटो ग्रहाम् ( प्र० १ सू० १३९ ) ग्रहीषीष्ट ग्राहिता-ग्रहीता ग्राहिष्यते-ग्रहीष्यते अग्राहिष्यत-अग्रहीष्यत अग्राहि अग्राहिषाताम्-अग्रहीषाताम् । दृश्यते ददृशे दर्शिषीष्ट-दृक्षीष्ट दर्शिता-द्रष्टा दर्शिष्यते-द्रक्ष्यते अदर्शि अदर्शिषाताम्-अदृक्षाताम् । डुपचष् पाके । पच्यते पेचे पक्षीष्ट पक्ता पक्ष्यते अपक्ष्यत अपाचि अपक्षाताम् ॥ **तनोतेर्नो वा । १० ।** तनोतेर्नकारस्य वा आकारो भवति यकि परे । तायते तन्यते तेने अतानि अतानिषाताम्-अतनिषाताम् । भञ्जो आमर्दने । नो लोपः ( प्र० १ सू० ६० ) भज्यते । अकित्त्वात् बभञ्जे भक्षीष्ट भङ्क्ता भङ्क्ष्यते ॥ **भञ्जेरिणि वा नलोपो वाच्यः । ११ ।** अभञ्जि-अभाजि । शम उपशमे । शम्यते मुनिना । धातोः प्रेरणे ( प्र० २७ सू० १ ) मितां ह्रस्वः ( प्र० २६ सू० ५ ) ञेः ( प्र० २ सू० ७ ) शम्यते मोहो हरिणा । शमयांचक्रे ॥ **ञ्यन्तानां मितामिणि णिद्विटि च वा वृद्धिर्घाच्या णिद्विटि ञिलोपश्च । १२ ।** अशमि अशामि अशामिषाताम्-अशमिषाताम् । णिद्वदिड्भावपक्षे अशमयिषाताम् । गुणोर्तिसंयोगाद्योः ( प्र० १ सू० १३० ) अर्यते स्मर्यते । यत्कर्म सुगमयोगात्कर्तृत्वेन विवक्ष्यते स कर्मकर्ता । तदुक्तम् ॥

> **क्रियमाणं तु यत्कर्म स्वयमेव प्रसिद्ध्यति ॥**
> **सुकरैः स्वैर्गुणैर्यस्मात्कर्मकर्तेति तद्विदुः ॥ ४ ॥**

तत्राप्येतदेवोदाहरणम् ॥ **कर्मवत्कर्मणा तुल्यक्रियः । १३ ।** कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवद्भवति । लूयते केदारः स्वयमेव । लुलुवे अलावि अलाविषाताम् । पच्यते ओदनः स्वयमेव । भिदिर् विदारणे । भिद्यते काष्ठं स्वयमेव । अभेदि ॥ **दुहस्नुनमां कर्मकर्तरि यग्चिणौ न । १४ ।** दुग्धे स्नुते गौः स्वयमेव । नमते दण्डः स्वयमेव । अदुग्ध अधुक्षत अस्नाविष्ट-अनंस्त ॥ अथ द्विकर्मकाः ॥

> **दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ॥**
> **कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥ ५ ॥**
> **ण्यादयो ण्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि ॥**
> **प्रत्ययं यान्ति दुह्यादिर्गौणेऽन्ये तु यथारुचि ॥ ६ ॥**

**निन्ये विजनमगारे रजनीमगमिमदमयाचि सभोगम् ॥**
**गोपी हास्यमकार्यत भावश्चैनामनन्तेन ॥ ७ ॥**

कर्तुरीप्सितम प्रधान कर्म । अन्यदप्रधानम् । नगर नीयते नाग रिकैर्वनेचर । भोजन कर्म । भोजन याच्यते यजमानो याचकेन । पृच्छ्यते पन्थान पथिकेन पान्थ । शिष्येणाचार्यस्तत्त्व पृच्छ्यते । कटश्चिकीर्ष्यते देवदत्तेन । यत ( प्र० १ सू० ११ ) बोभूयते । अनपि च हसात् ( प्र० २९ सू० ३ ) पापच्यते तेन । पापचिता अपापचि इत्यादि ॥ इति भावकर्मप्रक्रिया ॥ ३३ ॥

---

अथ लकारार्थप्रक्रिया ॥ लट पौन पुन्ययोर्लोण्मध्यमपुरुषैकवचनान्तता निपात्यते सर्वकाले सर्वपुरुषविषय अतीते काले ॥

**पुरीमवस्कन्द लुनीहि नन्दन मुषाण रत्नानि**
**हरामराङ्गनाः ॥ विगृह्य चक्रे नमुचिद्विषा व-**
**शी य इत्थमस्वास्थ्यमहर्निशं दिवः ॥ १ ॥**

**वर्तमानार्थाया अपि विभक्तेः स्मयोगे भूतार्थता वक्तव्या ॥ १ ॥** आह स्म हारीत. । यजति स्म युधिष्ठिर. ॥ **येचित्स्यापह्नवयोरत्यल्पकालेऽपि णादिर्वक्तव्यः । २ ।** सुप्तोऽहं किल विललाप । नाहं कलिङ्गाञ्जगाम ॥ **यावत्पुरानिपातयोर्योगे भविष्यदर्थे सिवादयः लट् । ३ ।** पुरा करोति । यावत्करोति । करिष्यतीत्यर्थ ॥ **स्मृत्यर्थधातुयोगे भूतेऽर्थे लट् । ४ ।** स्मरसि मित्र यदुपकरिष्यसि । उपकुर्वथा इत्यर्थ ॥ ॥ इति लकारार्थप्रक्रिया ॥ ३४ ॥

---

धातूनामप्यनन्तत्वाज्ञानार्थत्वाच्च सर्वथा ॥
अभिधातुमशक्यत्वादाख्यातस्यापरैरलम् ॥ २ ॥
इति श्रीमदनुभूतिस्वरूपाचार्यविरचितायां सारस्वतीप्रक्रियायामाख्यातप्रक्रिया समाप्ता ॥

## इति द्वितीया वृत्तिः ॥ २ ॥

॥ श्रीगणेशायनमः ॥

निजजनैर्विधिना निखिलापदो झटिति यो
विनिवर्तयति स्मृतः ॥ जलधिजापरिरम्भण-
लालसो नरहरिः कुरुतां जगतां शिवम् ॥ १ ॥

अथ कृदन्तप्रक्रिया निरूप्यते ॥ ॥ **कृत्कर्तरि च । १ ।** वक्ष्यमाणाः प्रत्ययाः कृत्संज्ञकास्ते च कर्तरि च भवन्ति । चकाराद्भावकर्मणोरपि ॥ **स्वतन्त्रः कर्ता । २ ।** क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् । शुद्धो धात्वर्थो भावः । **कर्तुरीप्सिततमं कर्म । ३ ।** कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् ॥ **तथायुक्तं चानीप्सितम् । ४ ।** ईप्सिततमवदनीप्सितमपि कारकं कर्मसंज्ञं स्यात् । विषं भुङ्क्ते देवदत्तः । अन्नं भुङ्क्ते देवदत्तः ॥ **तृवुणौ । ५ ।** धातोस्तृवुणौ प्रत्ययौ भवतः । डुपचष् पाके । पच् तृ इति स्थिते । चोः कुः ( पृ० १ प्र० ९ सू० ५२ ) पक् तृ इति स्थिते । कृत्तद्धितसमासाश्च । प्रातिपदिकसंज्ञा इति केचित् । इति नामत्वम् । नामसंज्ञायां स्यादिर्विभक्तिर्भवति । ऋदुशनस् (पृ० १ प्र० ६ सू० ६७) सेरा ( पृ० १ प्र० ६ सू० ६२ ) पचतीति पक्ता । पक्तारौ पक्तारः पक्तारम् पुंलिङ्गे पक्ता । ऋन्नेः (पृ० १ प्र० १४ सू० १४) स्त्रियां पक्त्री । नपुंसके पक्तृ पक्तृणी पक्तृणि इत्यादि । डुकृञ् करणे । करोतीति कर्ता । हृञ् हरणे । हरतीति हर्ता । मृङ् प्राणत्यागे । म्रियते इति मर्ता । डुभृञ् धारणपोषणयोः । बिभर्तीति भर्ता ॥ **कृतः । ६ ।** सेट्धातोः परस्य कृत्प्रत्ययस्य वसादेरिडागमो भवति । कृत इट् सूत्रम् सेट्धातुविषयम् ॥ **स्वृसूतिसूयतिधूञ्रधादीनां इड्वा वक्तव्यः ॥७॥** षूङ् प्राणिप्रसवे । सूते वा सूयतेऽसौ सोता-सविता । स्वृ शब्दे । गुणः ( पृ० २ प्र० १ सू० ११ ) वा इट् । स्वरतीति स्वरिता-स्वर्ता । ष्टुञ् स्तुतौ । स्तौतीति स्तोता । एधृ वृद्धौ । एधतेऽसौ एधिता । यु मिश्रणे । यौतीति यविता । रु शब्दे । रौतीति रविता । णु स्तुतौ । नौतीति नविता । भू सत्तायाम् । भवतीति भविता । गुपू रक्षणे ॥ **ऊदितो वा । ८ ।** ऊदितो धातोरिड्वा भवति । गोपायतीति गोपिता-गोपायिता-गोप्ता । षिधू शास्त्रे माङ्गल्ये च । सेधिता-सेद्धा ॥ **इषुसहलुभरिषरुषामनपि नम्येड्वा भवति । ९ ।** इषु इच्छायाम् । इच्छतीति एषिता-एष्टा । लुभ विमोहने । लुभ गार्ध्ये । लुभ्यतीति लोभिता । इडभावपक्षे । झबे जबाः ( पृ० १ प्र० २ सू० ३ ) तथोर्धः (पृ० २ प्र० १ सू० ७१) लुभ्यतीति लोब्धा । रिषु बन्धने । रेषतीति वा रिष्यतीति रेषिता । रेष्टा । रुष क्रोधे । रोषतीति रोषिता । रोष्टा । षह मर्षणे । आदेः ष्णः स्नः (पृ० २ प्र० १ सू० ६६) हो ढः (पृ० १ प्र० ९ सू० ११) तथोर्धः ( पृ० २ प्र० १ सू० ७१) ष्टुभिः ष्टुः । ( पृ० १ प्र० ४ सू० ८ ) ढि ढो लोपः ( पृ० २ प्र० १ सू० १२० ) ॥ **सहिवहोरोदवर्णस्य । १० ।** सहिवहोर्धात्वोरवर्णस्य ओकारो भवति । सहतेऽसौ सोढा । वह

प्रापणे । वहति इति वोढा ॥ युवोरनाकौ । ११ । यु वु इत्येतयोरनअक इत्येतावादेशौ भवत यथासंख्येन । णित्वाद्वृद्धि । अत उपधाया. । (वृ० २ प्र० १ सू० ३५ ) पचति वा पाचयतीति पाचक पाचकौ पाचका देवशब्दवत् । पठति वा पाठयतीति पाठक । एवं याचते वा याचयतीति याचक । भवति वा भावयतीति भावक । लुनाति वा लावयतीति लावक । पुनाति वा पावयतीति पावकः । श्रुञ् श्रवणे । शृणोति वा श्रावयतीति श्रावक । यु मिश्रणे । औ आव् ( वृ० १ प्र० २ सू० १६ ) यौति वा यावयतीति यावक । वध हिंसायाम् । वधतीति वधक । हनो घत् ( वृ० २ प्र० २७ सू० ५ ) हन्ति वा घातयतीति घातक । जायते वा जनयतीति जनक । जनिवध्योर्न वृद्धि ( वृ०२ प्र० ४ सू० ११ ) मिता ह्रस्व. ( वृ० २ प्र० २६ सू० ५ ) घटते वा घटयतीति घटक ॥ आतो युक् । १२ । आकारान्ताद्धातोर्युगागमो भवति ञिति णिति च परे । डुदाञ् दाने । ददाति वा ददतेऽसौ दायक । दैप् शोधने । सन्ध्यक्षराणामा(वृ०२ प्र० १ सू० १२१)दायतीति दायक ॥ ण्वुल्सयुटौ हित्वा दरिद्रातेरनप्यालोपो लुङि वा वक्तव्य. । १३ । दरिद्रा दुर्गतौ । दरिद्राति वा दरिद्रायतीति दरिद्रायक । दरिद्रिता । नृतिखनिरञ्जिभ्यो वुर्वक्तव्य । नृती गात्रविक्षेपे । उपधायाघो ( वृ० २ प्र० १ सू० ५३ ) रायपो द्वि ( वृ० १ प्र० २ सू० ५ ) नृत्यतीति नर्तक । नदादे ( वृ० १ प्र० १४ सू० १८ ) नर्तकी । खनक खनकी ॥ रञ्जेर्नलोपो वा । १४ । रञ्जक -रजकः रजकी-युवोरनाकौ इति तद्धितप्रत्ययस्य नेति वक्तव्यम् तेन ऊर्णायु ॥ नाम्युपधात्कः । १५ । नाम्युपधाद्धातो क प्रत्ययो भवति । ककारो गुणाभावार्थ । क्षिप् प्रेरणे । क्षिपतीति क्षिपः । छिदिर् द्वैधीकरणे । छिनत्तीति छिद । भिदिर् विदारणे । भिनत्तीति भिद । दुह प्रपूरणे । द्रवद्रव्यभागानुकूलो व्यापार प्रपूरणम् । कामान् दोग्धि सा कामदुघा ॥ दुह के वा घो वाच्य । १६ । तेन कामदुहा । दुह -दुघ । तुद् व्यथने । तुदतीति तुद । विद ज्ञाने । वेत्तीति विद । द्विष् अप्रीतौ । द्वेष्टीति द्विष । पुर ऐश्वर्यदीप्त्यो । पुरतीति पुर । शुभ शोभायाम् । शोभते तत् शुभ कल्याणम् ॥ जानातेश्च । १७ । जानातेर्धातोरपि क प्रत्ययो भवति । जानातेश्चेति चकारात्कॄगॄदृधृप्रीञ्ब्रुवामपि क प्रत्ययो भवति । कॄ विक्षेपे ॥ ऋत इर् । १८ । दीर्घऋकारान्तस्येर् नान्यस्य । किरतीति किर । धृञ् धारणे । धरतीति ध्र । प्रीञ् तर्पणे । प्रीणाति वा प्रीणीतेऽसौ प्रिय । नु धातो ( वृ० २ प्र० १ सू० ९४ ) गॄ निगरणे । गिरतीति गिर ॥ स्वरे परे गिरस्य लत्व वा वाच्यम् । १९ । गिले परेऽगिलस्य । २० । गिलशब्द विहाय पूर्वस्य मुम् वक्तव्य । तिमि गिलतीति तिमिंगिल । अगिलस्येति किम् । गिलगिल । ब्रूञ् व्यक्तायां वाचि । नु धातो । ( वृ० २ प्र० १ सू० ९४ ) ब्रवीतीति ब्रुव । अपिशब्दात्कर्तरि ग्रहेरपि क प्रत्ययो भवति । गृह्णातीति गृहम् । तात्स्थ्यात् गृह्णन्ति ते गृहा दारा ॥ पचि-

**नन्दिग्रहादिभ्यो ल्युणिन्यचः** । २१ । पचादेर्नन्दादेर्ग्रहादेश्च अच् ल्युणिनि इत्येते प्रत्यया भवन्ति यथासंख्येन । पचतीति पच । वक्तीति वच । वेत्तीति वेद । वपतीति वप ॥ **चरिचलिपतिहनिवदीनां वा द्वित्वं पूर्वस्याऽऽगमश्च** । २२ । अप्रत्यये परे । हलादि शेषाभावः । चर गतिभक्षणयोः । चरतीति चराचर -चर । चल चलने । चलतीति चलाचल -चल । पत्लृ पतने । पततीति पतापत -पत । वदतीति वदावद -वद ॥ **हन्तेर्घनश्च** । २३ । हन्तीति घनाघन -हन । चकाराद्घन शब्दे । घनतीति घनाघन -घनः इत्यादि । णद अव्यक्ते शब्दे । नदतीति नद । प्लुङ् गतौ । प्लवतेऽसौ प्लव । चरतेऽसौ चर । क्षमुष् सहने । क्षमतेऽसौ क्षम । पचादिषु देवट् नदट् इति टकारानुबन्धत्वान्ङीप् । दीव्यतीति देवी । षिवु तन्तुसन्ताने । षेवृ सेवने । सेवतेऽसौ सेव । सीव्यतीति सेव । व्रण क्षते । व्रण रुजि । व्रण शब्दे । व्रणतीति व्रण । अन प्राणने । प्राणितीति प्राण । दृशिर् प्रेक्षणे । पश्यतीति दर्श । सृप्लृ गतौ । सर्पतीति सर्प । भृञ् भरणे । भरते वा भरतीति भर । डुभृञ् धारणपोषणयोः । बिभर्ति वा बिभृतेऽसौ भर । सहतेऽसौ सह । पचादिराकृतिगणः । पचादेरप्रत्ययो निरुपपदस्यैव ज्ञातव्यः ॥ इति पचादि ॥

---

अथ नन्दादिर्निरूप्यते ॥ टुणदि समृद्धौ । इदितो नुम् ( कृ० २ प्र० १ सू० ६३ ) नन्दति वा नन्दयतीति नन्दन । नन्दतीति नन्दक । रमु क्रीडायाम् । रमतेऽसौ रमण । टुवम भ्रम सञ्चये । वामतीति वामन । भ्रामतीति भ्रमण । वास शब्दे । वासयतीति वासन । मितां ह्रस्व ( कृ० २ प्र० २६ सू० ५ ) मदि हर्षे । मादयतीति वा मदयतीति मदन । दुष वैकृत्ये ॥ **दुषेर्णौ वृति च दीर्घो वक्तव्यः** । २४ । दूषयतीति दूषण । राध् साध् संसिद्धौ । राध्यतीति वा राधयतीति राधन साधन । वृधुङ् वृद्धौ । वर्धयतीति वर्धन । रु शब्दे ॥ **रोर्युण्** । २५ । रु शब्द इत्येतस्माद्धातोर्युण् प्रत्ययो भवति । रौति वा रावयतीति रावण ॥ **दशब्दात् युरपि वक्तव्यः** । २६ । तेन रवण ॥ **ऋकारान्ताच्च** । २७ । ऋकारान्ताद्युयुणुप्रत्ययौ भवतः । करोतीति वा कारयतीति कारण कारक । शुभ शोभने रोचने च । शोभयतीति शोभन । रुच दीप्तौ । रोचयतीति रोचन । बिभीषयतीति बिभीषण । णश् अदर्शने । चित्तं विनाशयतीति चित्तविनाशन । युध्यते इति योधन । एते ण्यन्ताः । सहतेऽसौ सहन । तपतीति तपन । ज्वल दीप्तौ । ज्वलतीति ज्वलन । शम् दम् उपशमे । शाम्यतीति शमन । दाम्यतीति दमन । जल्पतीति जल्पन । तृप् प्रीणने तृप्यतीति तर्पण । रमण । दृप् सदर्पे । दृप्यतीति दर्पण । क्रन्द आक्रन्दने । क्रदि आह्वाने रोदने च । स्कन्दि संक्रन्दति वा संक्रन्दयतीति संक्रन्दन । कृष् निष्कर्षे । कृष् आमर्षणे । संकर्षतीति संकर्षण । अर्द मर्द अर्दने । अर्द गतौ याचने च । जनान् अर्दयतीति जनार्दन । मर्दयतीति मर्दन । घृष संघर्षणे । संघर्षतीति संघर्षण ।

पुनातीति पवन । पवतेऽसौ पवन । पूङ् क्षरणे षूद् निवर्हणे सूदी हिंसायाम् । मधु मृदयतीति मधुसूदन । लुनातीति लवण । अत्र णत्व निपात्यते । शत्रून् दाम्यतीत वा दामयतीति शत्रुदमन ॥ इति नन्दादि ॥ अथ ग्रहादिर्निरूप्यते ॥ ग्रह उपादाने । इनां शौ सौ ( वृ० १ प्र० ९ सू० २९ ) इसेप सेलोंप ( वृ० १ ९ प्र० ६ ३६ ) णिनिप्रत्ययान्ता. सर्वे दण्डिवत् । गृह्णातीति ग्राही उत्साही । आस् उपवेशने । उदास्तेऽसौ उदासी । दास दाने । उत्पूर्वः उद्दासी । भास दीप्तौ । उद्भासतेऽसौ उद्भासी । आतो युक् (प्र० १ सू० १२) छो छेदनेछ्यतीति छायी । तिष्ठतीति स्थायी । मन्त्र गुप्तभाषणे मन्त्रि अवधारणे । मन्त्रयतीति मन्त्री । मृद मर्दने । मर्द आमर्दने । मृदु आर्जवे । समर्दति या समर्दयतीति समर्दी । निस्तौतीति निस्तावी । निशृणोतीति निश्रावी । रक्ष पालने । निरक्षतीति निरक्षी । वस् निवासे । निवसतीति निवासी । डुवप् बीजसन्ताने । निवपतीति निवापी । शो तनूकरणे । निश्यतीति निशायी ॥ **नञ्पूर्वेभ्यः कृहृणीयाचृवदिभ्यो णिनिश्च** । २८ । न करोति वा कुरुतेऽसौ अकारी । इनां शौ सौ ( वृ० १ प्र० ९ सू० २९ ) न हरतीत्यहारी । णीञ् प्रापणे । न नयतीत्यनायी । न याचतेऽसौ अयाची । न वदतीत्यवादी । रध हिंसायाम् । णिनश्चेति चकारादपापरिनिभ्यो णिनि । अपराध्यतीत्यपराधी । रुधिरावरणे । अवरुणद्धीत्यवरोधी । परिभवतीति परिभावी । विपूर्व चिन्तयतीति विचारी । विशेषेण रौतीति विरावी ॥ इति ग्रहादय ॥ अथ दृशादिर्निरूप्यते ॥ **दृशादेः शः** । २९ । दृश् हन् धेट् ध्मा घ्रा पा दा धा विद् एभ्य श प्रत्ययो भवति । शकार शिति चतुर्वत्कार्यार्थ ॥ **शिति चतुर्वत्** । ३० । शिति प्रत्यये परे तिबादिषु परेषु यत्कार्यमुक्त तद्भवति । दृशादे पश्यादि ( वृ० २ प्र० १ सू० ११८ ) अप् । अदे ( वृ० २ प्र० १ सू० १४ ) पश्यतीति पश्य । उत्पूर्व. उत् ऊर्ध्वं पश्यतीति उत्पश्य । हन् हिंसागत्यो । अप् । अदे ( वृ० २ प्र० १ सू० १४ ) अदादित्वादपो लुक् । अपित्तादिर्ङित् ( वृ० २ प्र० १ सू० १२ ) गमां स्वरे । (वृ० २ प्र० १ सू० १०७) हनो घ्नं ( वृ० १ प्र० ९ सू० ३० ) गां हन्तीति गोघ्न । पापघ्न । धेट् पाने अप् । अद ( १४ ) धयतीति धय । ध्मा धमादेश । धमतीति धम । उद्धमतीति उद्धम । घ्रा जिघ्रतीति जिघ्र । पा पाने । पिबादेश । पिबतीति पिब । अप् । अदे ( १४ ) ह्रादिर्द्विश्च ( वृ० २ प्र० ७ सू० १ ) दादे ( वृ० २ प्र० ९ सू० १ ) इत्याकारलोप । ददाति वा दत्तेऽसौ दद । दधाति या धत्तेऽसौ दध । मुचादेर्मुम् ( वृ० २ प्र० २० सू० ५ ) तुदादेर ( वृ० २ प्र० २० सू० १ ) विद्लृ लाभे । गा विन्दतीति गोविन्द ॥ **ज्वलादेर्णः** । ३१ । ज्वलादेर्गणात् ण. प्रत्ययो भवति । ज्वलादेणो वेति केचित् । पक्षे पचादित्वाद । ज्वल दीप्तौ । ज्वाल ज्वल । तपतीति ताप तप । पथि गतौ । चुरादि । इदित् पान्थयतीति वा पान्थतीति पान्थ पथ. । अत्र वृद्ध्यनन्तर नुमागम । ज्वलादिगणपाठसामर्थ्यात् । पत्ल गत्यैश्वर्ययो । पततीति पात -पत । क्वथ पचने ।

कथयतीति काथः-क्वथः । पथ गत्याम् । पथतीति पाथः-पथः । मथ गाहे । मथतीति माथः-मथः । सहतेऽसौ साहः-सहः । ॥ इति ज्वलादिः ॥ अथाऽण् ॥
**कार्येऽण्** । ३२ । धातोः कर्मणि प्रयुज्यमाने अण् प्रत्ययो भवति । द्वाभ्यां पिबतीति द्विपः । द्वौ वारौ जायतेऽसौ द्विजः । गृहैर्दारैः सह तिष्ठतीति गृहस्थः । गिरिशः । शीङ् स्वप्ने ॥ पादैः पिबतीति पादपः । द्रु गतौ । शुचं द्रवतीति शूद्रः ॥
**शुचः शूद्रे** । ३३ । शुचः शूरादेशो भवति द्रे परे ॥ **उरसः सलोपो मुम्वा** । ३४ । उरसः सकारस्य लोपो भवति डप्रत्ययान्ते गमौ मुमागमश्च वा । उरसा गच्छतीत्युरगः उरङ्गः सर्पः ॥ **विहायसो विहश्च** । ३५ । विहायस्शब्दस्य विहादेशो भवति चकारान्मुम्वा डान्ते गमौ । विहायसि आकाशे गच्छतीति विहगः विहङ्गः ॥ **भुजस्य च मुम्वा डप्रत्ययान्ते गमौ** । ३६ । भुजो वक्रार्थे । भुजं वक्रं गच्छतीति भुजगः भुजङ्गः । विहायसो विहश्चेति चकारात् तरसस्तुरादेशः । मुम्वेति अनुवर्तनीयम् । तरसस्तुरादेशः तुरस्य मुम्वा डान्ते गमौ । तरसा वेगेन गच्छतीति तुरगः-तुरङ्गः ॥
**अटौ** । ३७ । नाम्नि कार्ये च उपपदे सति अटौ प्रत्ययौ भवतः । अस्थि हरतीति अस्थिहरः कः श्वा । कवचं हरतीति कवचहरः कुमारः । धृञ् धारणे । धनुर्धरतीति धनुर्धरः क्षत्रियो वा राजा । चर गतौ । कुरुषु देशेषु चरतीति कुरुचरः । ट ईवर्थः । ष्टित. ( स्त्री० १ प्र० १४ सू० १४ ) स्त्री चेत् कुरुचरी मद्रचरी सेनाचरी भिक्षाचरी दीक्षाचरी । अप्रत्ययः सर्वधातुसाधारणः । टप्रत्ययस्तु चरादेरेव भवति । शोकं करोतीति शोककरी कन्या । यशः करोतीति यशस्करी विद्या । सृ गतौ । पुरः सरतीति पुरःसरः । अग्रे सरतीति अग्रेसरः । पार्श्वे शेतेऽसौ पार्श्वशयः । तथैव पृष्ठे शेतेऽसौ पृष्ठशयः । उदरशयः । उत्तानादिषु कर्तृषु । उत्तानः शेतेऽसौ उत्तानशयः । स्तम्बे रमतेऽसौ स्तम्बेरमः हस्ती । जप जल्प व्यक्तायां वाचि । कर्णेजपः । ग्रह उपादाने । शक्तिं गृह्णातीति शक्तिग्रहः । लाङ्गलग्रहः यष्टिग्रहः अङ्कुशग्रहः तोमरग्रहः घटीग्रहः धनुर्ग्रहः सूत्रग्रहः पुष्पग्रहः फलग्रहः कामग्रहः मधुग्रहः । शम्पूर्वः कृञ् । शं सुखं वा कल्याणं करोतीति शङ्करः । वाहः भारवहः । अत्र कर्मणि अणपि वक्तव्यः । भारवाहः श्वेतवाहः इत्यादि ॥ **इखश्यि** । ३८ । धातोर्नाम्नि कार्ये च सति इ ख श्यि एते प्रत्यया भवन्ति । खकारः खिति पदस्येति सूत्रस्य विशेषणार्थः ॥ **खिति पदस्य** । ३९ । खिति प्रत्यये परे पूर्वपदस्याव्ययवर्जितस्य मुमागमो भवति । तेन दोषामन्यमहः । आत्मानं दोषां मन्यते तद्दोषामन्यं अहः ।

शकृत्स्तम्बात्कृञः फले रजोमलाद्ग्रहो दृशः ॥
हृतिनाथाद्वयवाद्दाघः कर्तरि याच्य इः ॥ १ ॥

वत्सव्रीह्योरेव । डुकृञ् करणे । शकृत्करोतीति शकृत्करिः पः वत्सः । स्तम्बं करोतीति स्तम्बकरिः पः व्रीहिः । फले गृह्णातीति फलेग्रहिः वा फलानि गृह्णातीति फलेग्रहिः वृक्षः । फलस्यैदन्तत्वं निपातनात् । रजो गृह्णा-

तीति रजोग्रहिः मलग्रहिः । दृतिं हरतीति दृतिहरिः । नाथहरिः । आप्लृ व्याप्तौ । देशान् आप्नोतीति देशापिः वातं आप्नोतीति वातापिः ॥

करीषकूलसर्वाभ्रात्कषः प्रियवशाद्वदः ॥
ऋतिमेघभयात्कृञः क्षेममद्रप्रियात्तु वा ॥ २ ॥

कष निष्कर्षे । करीषं कषतीति करीषकषः । करीषं शुष्कगोमयमित्यमरः । कूलं कषतीति कूलंकष. । सर्वं कषतीति सर्वंकषः । अभ्रं कषतीति अभ्रंकष. । खकारो मुमागमार्थ. । वद व्यक्तायां वाचि । प्रियं वदतीति प्रियंवद. वशंवद. । ऋतिं करोतीति ऋतिकरः मेघकरः भयकरः । विकल्पपक्षे कार्ये अण् । क्षेमं करोतीति क्षेमकरः-क्षेमकारः । मद्रं करोतीति मद्रकरः-मद्रकारः । प्रियं करोतीति प्रियकर.-प्रियकारः ॥

आशितात्त्व भुवो भावे करणे च तुराद्गुजात् ॥
विहायसः सुतोरोभ्यां हृदयाच्च जनात् प्लवात् ॥३॥
गच्छतेः प्रत्ययः खः स्याद्भृञो धातोस्तु खिर्भवेत् ॥
आत्मन्कुक्ष्युदरेभ्यः स्युस्तथा वाचंयमादयः ॥ ४ ॥

आशितेन भूयते इति आशितंभवम् । भावे नपुंसकता वाच्या । आशितो भवत्यनेनेति आशितंभवः ओदन. । तुरं गच्छतीति तुरंगमः भुजंगमः विहंगमः सुतंगमः उरंगम. हृदयंगमः जनंगम. । प्लवेन गच्छतीति प्लवंगम । डुभृञ् धारणपोषणयो. । आत्मानं बिभर्तीति आत्मंभरिः कुक्षिंभरिः उदरंभरिः । लुप्त-विभक्तेश्च पदान्तत्वं विधेयम् । अत एव वाचंयमान् कथयति । वाचंयमादयो निपात्याः । वाचं यच्छतीति वाचंयम. । अत्र अकारो निपात्यते । दृ विदारणे । पुरं दारयतीति पुरंदरः । तप संतापे । द्विषं तापयतीति द्विषंतप. । परंतपः । सर्वं सहतेऽसौ सर्वंसह । डुभृञ् बिभर्तीति विश्वंभर. । भगं दारयतीति भगंदर. । तॄ प्लवनतरणयोः । रथं तरतीति रथंतर. । वृञ् वरणे । पतिं वृणोतीति या वृणुते सा पतिंवरा । जि जये । धनं जयतीति धनंजय. । धृञ् धारणे । वसूनि वा वसु धरति वा धरतेऽसौ वसुंधरा । शत्रुं सहतेऽसौ शत्रुंसह. । अरिं दाम्यतीति अरिंदमः । शत्रुंतपः । एते वाचंयमादयः ॥ एजःखश् । ४० । एजृ कम्पने । इत्यादीनां खश् प्रत्ययो भवति । खकारो मुमागमार्थः । शकारः शिति चतुर्वत्कार्यार्थं । धातो. प्रेरणे ( वृ० २ प्र० २७ सू० १ ) इति ञिः प्रत्ययः । जनान् एजयतीति जनमेजयः ॥

ध्यन्तेजेर्मन्यतेर्मुञ्जकूलास्यपुष्पतो धये. ॥
नाडीमुष्टिशुनीपाणिकरस्तनात्तनासिकात् ॥ ५ ॥

मनु अवबोधने । दिवादेर्यः ( वृ० २ प्र० १० सू० १ ) आत्मानं पण्डितं मन्यते स पण्डितमन्यः । धेट् पाने । मुञ्जं धयतीति मुञ्जधयः कूलधयः आस्यंधयः

पुष्पधयः। ध्माधेटोस्तुल्योपपदत्वं ज्ञेयम्। ध्मा शब्दाग्निसंयोगयोः। नाडीं धयतीति नाडिधयः नाडिधमः ॥ **खशन्ते पूर्वपदस्य ह्रस्वो वाच्यः। ४१।** मुष्टिधयः मुष्टिधमः शुनिधयः शुनिधमः पाणिधयः पाणिधमः करधयः करधमः स्तनधयः स्तनधमः। नासिकां धयतीति नासिकंधयः नासिकंधमः ॥

**ध्मा खारीवातघटीतो रुजवहौ तु कूलतः ॥**
**अरुर्विधुतिलात्तुद् स्यादसूर्योग्राद्दृशिस्तपिः ॥ ६ ॥**
**ललाटतो वहाभ्राल्लिह् मितमाननखात्पचिः ॥**
**वातादजिरिरायाः मद् जहातिः शर्धतस्तथा ॥ ७ ॥**

खारीं धमतीति खारिंधमः। वातंधमः घटिंधमः। रुजो भङ्गे। वह प्रापणे उरु-र्षः। कूलमुद्रुजतीति कूलमुद्रुजः। कूलमुद्वहतीति कूलमुद्वहः। अरुः किं। मर्मस्थानम्। अरुस्तुदतीति अरुंतुदः विधुंतुदः तिलंतुदः। दृशिर् प्रेक्षणे। न सूर्यं पश्यन्तीति असूर्यंपश्याः के राजदाराः। उग्रंपश्यः ललाटंतपः। लिह् आस्वादने। वहं लेढीति वहंलिहः अभ्रंलिहः। मितं पचतीति मितंपचः प्रस्थंपचः मानंपचः। नखंपचः। अज गतौ क्षेपणे च। वातमजतीति वातमजः। मदी गर्वग्लपनयोः। इरया माद्यतीति इरंमदः। ओहाक् त्यागे। शर्धं जहतीति शर्धंजहा माषाः ॥ इति खश्प्रत्ययः। ल्युट् करणे। धातोः करणेऽर्थे ल्युट् प्रत्ययो भवति ॥ **अभूततद्भावे । ४२ ॥ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु कृञः ख्युट् वाच्यः। ४३।** अनाढ्यः आढ्यः क्रियतेऽनेनेति आढ्यंकरणं द्यूतम्। सुभगंकरणम्। स्थूलंकरणं किं दधि। पलितंकरणं किं शीतवस्तुसेवनम्। अनग्नः नग्नः क्रियते अनेनेति नग्नंकरणं द्यूतम्। अन्धंकरणं किं सूर्यावलोकनमसकृत्। अप्रियः प्रियः क्रियते अनेनेति प्रियंकरणं मैत्र्यम्। दारावाहनो अण् वक्तव्यः ॥ तकारस्य च टः ॥ **यद्दिशो वक्तव्यः। ४४।** उपम् (वृ० १ प्र० २ सू० ६) दारु आहन्तीति दार्वाघाटः ॥ **चारौ वा। ४५।** चारु आहन्तीति चार्वाघाटः-चार्वाघातः **कर्मणि ॥ संपूर्वाच्च। ४६।** वर्णान् संहन्तीति वर्णसंघातः ॥ **जायापत्योष्टक्। ४७।** जायापत्योरुपपदयोर्हन्तेष्टक्प्रत्ययो भवति लक्षणवति कर्तरि। जायां हन्तीति जायाघ्नः ना। पतिं हन्तीति पतिघ्नी स्त्री ॥ **अमनुष्यकर्तृके च। ४८।** जायाघ्नः तिलकालकः कपाले भ्रमरः। पतिघ्नी पादरेखा ॥ **पाणिघताडघौ शिल्पिनि निपात्यते। ४९। राजघ उपसंख्यानम्। ५०। भजो ण्विः। ५१।** भजसहवहां कर्तरि ण्वि प्रत्ययो भवति। णकारो वृद्ध्यर्थः ॥ वेः। ५२। वेर्लोपो भवति। भज सेवायाम्। अर्धं भजतीति अर्धभाक्। चोः कुः। (वृ० १ प्र० ९ सू० ५२) सुखभाक् दुःखभाक्। सह मर्षणे। हो ढः (वृ० १ प्र० ९ सू० ११) वावसाने (वृ० १ प्र० ९ सू० ८) सहादेः सादिः (वृ० १ प्र० १६ सू० ४१) इति सूत्रेण त्वरायास्तुरादेशः। त्वरां शत्रूणां वेग सहतेऽसौ तुराषाट् ॥ **सहेः षः साढि। ५३।** सहेः सकारस्य षकारो भवति साढि सति। तुराषाहौ तुराषाहः। वह प्रापणे। भारं वहतीत्या

भारवाट्-भारवाड् भारवाहौ भारवाहः । भारवाहं भारवाहौ ॥ वाहो वौ । ५४ । वाहो वाकारस्य औकारादेशो भवति शसादौ स्वरे परे । भारौहः । भारौहा भारवाड्भ्याम् भारवाड्भिः इत्यादि ॥ पृच्छतेर्विण् । ५५ । तत्त्वं पृच्छतीति तत्त्वप्राट् । अम्बूनि वहतीति अम्बुवाट् । शसादौ तु अम्बुवः ॥ अन उः । ५६ । अनवर्णादुत्तरस्य वाहो वाकारस्य उः स्यात् शसादौ स्वरे परे । शालिवाट् शाल्यूहः ॥ शमेरपि विण् वक्तव्यः । ५७ । मो नो धातोः । ५८ । मान्तस्य धातोर्मकारस्य नकारो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । शम दम उपशमने । प्रशाम्यतीति प्रशान् प्रशामौ प्रशामः ॥ अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विः । ५९ । अभूततद्भावेऽर्थे कृ भू अस् इत्येतेषु नामभिः प्रत्ययो भवति ॥ च्विप्रत्ययकर्तर्यस्ति वक्तव्यम् । ६० । तेन अगृहे गृहे भवतीति गृहेभवति । चकारश्च्वौ दीर्घ इति विशेषणार्थः वा चकारः प्रत्ययभेदज्ञापनार्थः । वेः ( प्र० १ सू० ५२ ) ॥ च्वौ दीर्घ ई चावर्णस्य । ६१ । च्वौ प्रत्यये परे आकारस्य ईकारादेशो भवति अन्त्यस्य स्वरस्य दीर्घो भवत्यव्ययवर्जितस्य । अमिथुनं मिथुनं सम्पद्यमानं तथाकरणं इति मिथुनीकरणम् किं पाणिग्रहणम् । च्व्यन्तत्वादव्ययत्वम् । अव्ययत्वाद्विभक्तेर्लुक् ( पू० १ प्र० ११ सू० २५ ) असहायः सहायः सम्पद्यमानस्तथा स्यात् इति सहायीस्यात् । अकृष्णः कृष्णः यथा सम्पद्यमानस्तथा करोतीति कृष्णीकरोति । दैवहतम् । अव्ययस्य न दीर्घत्वम् । अस्वस्ति स्वस्ति यथा सम्पद्यमानस्तथा स्यादिति स्वस्तिस्यात् । सम्पत्कर्तरि किम् । अगृहे गृहे भवतीति गृहेभवति । मतुप् क्वचित् ( पू० १ प्र० १६ सू० ८४ ) इति विभक्तेर्लुक् ॥ च्वौ सलोपश्च । । ६२ । मनस् महस् रजस् इत्यादीनां सकारस्य लोपो भवति च्वौ प्रत्यये परे । ह्रो नमो महत्त्वपर्यनुसरतः । उन्मुखं मनो यस्यासौ उन्मनाः । ■ उन्मनाः अनुन्मनाः । अनुन्मनाः उन्मनाः सम्पद्यमानस्तथा भव इति उन्मनीभवः । विगतं मनो यस्याऽसौ विमनाः । न विमनाः अविमनाः । अविमनाः विमनाः सम्पद्यमानः तथा भव इति विमनीभव । न विद्यते मनो यस्यासौ अमनाः । न

भूरिरिश्वा । घृतं पिबतीति घृतपीवा । धनदिवा मलस्विवा मार्गस्थिवा धनधीवा सुगीवा दोषहीवा ॥ **क्वनिप् क्वचिदन्येभ्योऽपि दृश्यते । ६६ ।** सुष्ठु करोतीति सुकर्मा । सुष्ठु शृणोतीति सुशर्मा । अन प्राणने । अत्र क्विप् । प्राणतीति प्राण् प्राणौ प्राणः । हेमाण् ॥ **अनः । ६७ ।** पदान्ते वर्तमानस्यापि अतो नस्य णत्वं स्यात् । अर्थौ इति विशेषणान्नलोपो न शङ्कनीयः । **ह्रस्वस्य पिति कृति तुक् । ६८ ।** ह्रस्वस्य पिति कृति परे तुगागमो भवति । इण् गतौ । प्रातरेतीति प्रातरित्वा ॥ **वनिपि जमस्याऽऽत्वं वाच्यम् । ६९ ।** जनी प्रादुर्भावे । विजायतेऽसौ विजावा । केवलेभ्योऽपि वनिप् । ओणृ अपनयने । ओणतीति अवावा अवावानौ ॥ **ङीपि वनो नस्य रो वाच्यः । ७० ।** वन ईप् ( वृ० १ प्र० १४ सू० ६ ) ओणति सा अवावरी । पार पश्यतीति पारदृश्वा । पार पश्यतीति सा पारदृश्वरी । केवलेभ्योऽपि क्वनिप् । षुञ् अभिषवे । षूङ् प्राणिगर्भविमोचने । सुनोतीति सुनोतीति सुत्वा । तुक् । धेट् पाने । धयतीति धीवा । गै शब्दे । गायतीति गीवा । जहातीति हीवा । पीवा ॥ **क्विप् । ७१ ।** उपपदे सति असति च सर्वधातुभ्यः क्विप् प्रत्ययो भवति । क्विपः सर्वापहारित्वाल्लोपः कणाविती । वेः ( प्र० १ सू० ५२ ) ह्रस्वस्य पिति कृति तुक् ( ६८ ) कर्म करोतीति कर्मकृत् । अग्निं चिनोतीति अग्निचित् । देवान् स्तौतीति देवस्तुत् । सोमं पिबतीति सोमपाः । सर्वं पश्यतीति सर्वदृक् । दिशाम् ( वृ० १ प्र० १० सू० ११ ) इति कुत्वम् । दिश अतिसर्जने । दिशतीति दिक् ॥ **क्विप् वच्छिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घः संप्रसारणाभावश्च वक्तव्यः । ७२ ।** वक्त्यनया सा वाक् वा उच्यते अनया सा वाक् । प्रच्छ ज्ञीप्सायाम् । तत्त्वपूर्वः । तत्त्वं पृच्छतीति तत्त्वप्राट् । छशषराजादेः षः ( वृ० १ प्र० ९ सू० ४३ ) ॥ **च्छ्वोः शूठ् वाच्यौ किति ङिति झले परेऽनुनासिके क्वौ च । ७३ ।** तेन तत्त्वप्राशौ तत्त्वप्राशः । ष्टुञ् स्तुतौ । आयत स्तौतीति आयतस्तूः । प्रुङ् गतौ । कट प्रवतेऽसौ कटप्रूः । जु गतौ । जवतेऽसौ जूः । सुष्ठु श्रयतीति सुश्रीः । वा सुष्ठु श्रीर्यस्याऽसौ सुश्रीः । श्रयन्ते जना यामिति श्रीः ॥ **नहिवृतिव्यधिवृषिरुचिसहितनिषु क्विबन्तेषु पूर्वपदस्योपसर्गस्यान्ते दीर्घो वाच्यः । ७४ ।** णह् बन्धने । आदेः ष्णः स्नः ( वृ० २ प्र० १ सू० ६६ ) नहो धः ( वृ० १ प्र० १० सू० १ ) उप समीपे नह्यतीति उपानत् । नितरां वर्ततेऽसौ नीवृत् । व्यध ताडने । ग्रहो ङ्किति च ( वृ० २ प्र० ३ सू० १२ ) मर्माणि विध्यतीति मर्मावित् । वृष वृष्टौ । प्रकर्षेण वर्षतीति प्रावृट् । रुचि दीप्तौ । नितरां रोचतेऽसौ नीरुक् ॥ **गम्यमूनमूहन्तनादीनां क्विपि जमस्य लोपो वाच्यः क्यपि वा । ७५ ।** तुक् परितः तनोतीति परीतत् । कट चिकीर्षतीति कटचिकी । चिकीर्षतेः क्विप् । यतः ( वृ० २ प्र० १ सू० १०१ ) इत्यकारलोपः । दोषाम् ( वृ० १ प्र० ९ सू० ६५ ) इति षस्य रेफः । रिलोपो दीर्घश्च ( वृ० १ प्र० ५ सू० १४ ) इति

भारवाट्-भारवाड् भारवाहौ भारवाहः। भारवाह्न भारवाहौ ॥ **वाहो वौ । ५४ ।** वाहो वाकारस्य औकारादेशो भवति शसादौ स्वरे परे । भारौह. । भारौहा भारवाड्भ्याम् भारवाड्भिः इत्यादि ॥ **पृच्छतेर्विण् । ५५ ।** तत्त्वं पृच्छतीति तत्त्वप्राट् । अम्बूनि वहतीति अम्बुवाट् । शसादौ तु अम्बूहः ॥ **अन उः । ५६ ।** अनकारादुत्तरस्य वाहो वाकारस्य उः स्यात् शसादौ स्वरे परे । शालिवाट् शाल्यूहः ॥ **शमेरपि विण् वक्तव्य. । ५७ । मो नो धातोः । ५८ ।** मान्तस्य धातोर्मकारस्य नकारो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । शम दम उपशमने । प्रकर्षेण शाम्यतीति प्रशान् प्रशामौ प्रशामः ॥ **अभूततद्भावे कृभ्वस्तियोगे नाम्नश्चिः । ५९ ।** अभूततद्भावेऽर्थे कृ भू अस् इत्येतेषु नाम्नश्चिः प्रत्ययो भवति ॥ **संपद्यकर्तरीति वक्तव्यम् । ६० ।** तेन अगृहे गृहे भवतीति गृहेभवति । चकारश्चौ दीर्घ इति विशेषणार्थः वा चकारः प्रत्ययभेदज्ञापनार्थः । वेः ( प्र० १ सू० ५२ ) ॥ **च्वौ दीर्घ ई चास्य । ६१ ।** च्वौ प्रत्यये परे आकारस्य ईकारादेशो भवति अन्यस्य स्वरस्य दीर्घो भवत्यव्ययवर्जितस्य । अमिथुन मिथुन सपद्यमान तथाकरण इति मिथुनीकरणम् किं पाणिग्रहणम् । च्व्यन्तत्वादव्ययत्वम् । अव्ययत्वाद्विभक्तेर्लुक् ( वृ० १ प्र० १३ सू० २५ ) असहायः सहायः सपद्यमानस्तथा स्यात् इति सहायीस्यात् । अकृष्णः कृष्णः यथा सपद्यमानस्तथा करोतीति कृष्णीकरोति । हेतुकृतम् । अव्ययस्य न दीर्घत्वम् । अस्वस्ति स्वस्ति यथा सपद्यमानस्तथा स्यादिति स्वस्तिस्यात् । सपद्यकर्तरि किम् । अगृहे गृहे भवतीति गृहेभवति । अलुक् क्वचित् ( वृ० १ प्र० १६ सू० ८४ ) इति विभक्तेरलुक् ॥ **च्वौ सलोपश्च । । ६२ ।** मनस् महस् रजस् इत्यादीनां सकारस्य लोपो भवति च्वौ प्रत्यये परे । चौ नञो प्रकृत्यर्थमनुसरतः । उत्सुक मनो यस्यासौ उन्मना. । न उन्मना. अनुन्मनाः । अनुन्मनाः उन्मनाः सपद्यमानस्तथा भाव इति उन्मनीभावः । विगत मनो यस्याऽसौ विमनाः । न विमनाः अविमना. । अविमना विमनाः सपद्यमानः तथा भाव इति विमनीभाव. । न विद्यते मनो यस्यासौ अमनाः । न अमनाः अनमनाः । अनमनाः अमनाः सपद्यमानस्तथा भाव इति अमनीभावः । तथा सुमनीभावः सुचेतीभावः महीकरोति अरूकरोति चक्षूकरोति ॥ **डाच् क्वचिद्वक्तव्यः । ६३ ।** अभूततद्भावेऽर्थे क्वचित् डाच् प्रत्ययो भवति । अदुःखं दु.खं सपद्यते तत् करोतीति दुःखाकरोति । तथा भद्राकरोति ॥ **आतो मनिप्क्वनिप्वनिपः । ६४ ।** प्रादौ नाम्नि च प्रयुज्यमाने आकारान्ताद्धातोर्मनिप् क्वनिप् वनिप् इत्येते प्रत्यया भवन्ति । सुष्ठु ददातीति सुदामा । राजन्शब्दवद्रूपम् । खसे चपा झसानाम् ( वृ० १ प्र० ४ सू० १८ ) अश्वे तिष्ठतीति अश्वत्थामा ॥ **स्थामी । ६५ ।** इश्च ईश्च ई । दासोमाद्यां इस्य इकारो भवति । घागेहापिबतीनां दीर्घ ईकारो भवति सकारादौ क्ङिति हसे परे न क्यपि क्विपि वा । क्वनिप्प्रत्ययः । सुष्ठु पिबतीति सुपीवा । भूरि ददातीति

भूरिदावा । घृतं पिबतीति घृतपीवा । धनदावा मल्लसिवा मार्गास्थिवा धनधीवा सुधीवा दोषहीवा ॥ **क्वनिप् क्वचिदन्येभ्योऽपि दृश्यते । ६६ ।** सुष्ठु करोतीति सुकर्मा । सुष्ठु शृणोतीति सुशर्मा । अन प्राणने । अत्र क्विप् । प्राणतीति प्राण् प्राणौ प्राणः । हेमाण् ॥ **अनः । ६७ ।** पदान्ते वर्तमानस्यापि अनो नस्य णत्वं स्यात् । अनो इति निर्देशान्नलोपो न शङ्कनीयः । **ह्रस्वस्य पिति कृति तुक् । ६८ ।** ह्रस्वस्य पिति कृति परे तुगागमो भवति । इण् गतौ । प्रातरेतीति प्रातरित्वा ॥ **वनिपि जमस्याऽऽत्वं वाच्यम् । ६९ ।** जनी प्रादुर्भावे । विजायतेऽसौ विजावा । केवलेभ्योऽपि वनिप् । ओणृ अपनयने । ओणतीति अवावा अवावानौ ॥ **ङीपि वनो नस्य रो वाच्यः । ७० ।** अत्र ईप् ( तृ० १ प्र० १४ सू० ६ ) ओणति सा अवावरी । पारं पश्यतीति पारदृश्वा । पारं पश्यतीति सा पारदृश्वरी । केवलेभ्योऽपि क्वनिप् । षुञ् अभिषवे । षूङ् प्राणिगर्भविमोचने । सुनोतीति सुनोतीति सुत्वा । सुत्वरी । धेट् पाने । धयतीति धीवा । गै शब्दे । गायतीति गीवा । जहातीति हीवा । पीवा ॥ **क्विप् । ७१ ।** उपपदे सति असति च सर्वधातुभ्यः क्विप् प्रत्ययो भवति । क्विपः सर्वापहारिलोपः कंसारिवी । वेः ( म० १ सू० ५२ ) ह्रस्वस्य पिति कृति तुक् ( ६८ ) कर्म करोतीति कर्मकृत् । अग्निं चिनोतीति अग्निचित् । देवान् स्तौतीति देवस्तुत् । सोमं पिबतीति सोमपाः । सर्वं पश्यतीति सर्वदृक् । दिशाम् ( तृ० १ प्र० १० सू० ११ ) इति कुत्वम् । दिश अतिसर्जने । दिशतीति दिक् ॥ **क्विप् वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घः संप्रसारणाभावश्च वक्तव्यः । ७२ ।** वक्तयनया सा वाक् या उच्यते अनया सा वाक् । प्रच्छ ज्ञीप्सायाम् । शब्दप्राट् । शब्दं पृच्छतीति शब्दप्राट् । छशषराजादेः षः ( तृ० १ प्र० ९ सू० ४३ ) ॥ **छ्वोः शूठ् वाच्यौ क्विति ङ्किति झले परेऽनुनासिके क्वौ च । ७३ ।** तेन शब्दप्राशौ शब्दप्राशः । ष्टुञ् स्तुतौ । आयत स्तौतीति आयतस्तूः । प्रुङ् गतौ । कट प्रवतेऽसौ कटप्रूः । जु गतौ । जवतेऽसौ जूः । सुष्ठु श्रयतीति सुश्रीः । वा सुष्ठु श्रीर्यस्याऽसौ सुश्रीः । श्रयन्ते जना यामिति श्रीः ॥ **नहिवृतिव्यधिवृषिरुचिसहितनिषु क्विबन्तेषु पूर्वपदस्योपसर्गस्यान्ते दीर्घो वाच्यः । ७४ ।** णह् बन्धने । आदेः ष्णः स्नः ( तृ० २ प्र० १ सू० ६६ ) नहो धः ( तृ० १ प्र० १० सू० १ ) उप समीपे नह्यतीति उपानत् । नितरां वर्ततेऽसौ नीवृत् । व्यध ताडने । ग्रहिज्या इति च ( तृ० २ प्र० ३ सू० १२ ) मर्माणि विध्यतीति मर्मावित् । वृष वृष्टौ । प्रकर्षेण वर्षतीति प्रावृट् । रुच दीप्तौ । नितरां रोचतेऽसौ नीरुक् ॥ **गम्यम्रमनमुहन्तनादीनां क्विपि जमस्य लोपो वाच्यः क्वापि वा । ७५ ।** तनु विस्तारे । परितः तनोतीति परीतत् । कटं चिकीर्षतीति कटचिकीः । चिकीर्षतेः क्विप् । यतः ( तृ० २ प्र० १ सू० १०१ ) इत्यकारलोपः । लोपम् ( तृ० १ प्र० ९ सू० ६५ ) इति षस्य रेफः । विरोधे दीर्घश्च ( तृ० १ प्र० ५ सू० १४ ) इति

मध्यमरेफस्य लोपः नतु संयोगान्तस्य लोपः । रसे पदान्ते चेति चकारात् ॥ **रात्सस्य । ७६ ।** रेफादुत्तरस्य सस्यैव लोपो भवति नान्यहसस्य । स्रोर्विसर्गः ( वृ० १ प्र० ६ सू० ४) कटचिकीर्षौ कटचिकीर्षः । वह प्रापणे । यजां यवरा-णाम् ( वृ० २ प्र० १ सू० १४९ ) अनो वहतीति अनड्वान् ॥ **क्विबन्ते वह्यनसो डान्तादेशो वाच्यः । ७७ ।** अनडुहौ अनडुहः । राजृ दीप्तौ ॥ **क्विबन्ते राजतौ परे समो मस्याऽनुस्वाराभावो वाच्यः । ७८ ।** तेन सम्यक् राजतेऽसौ सम्राट् । ध्यै चिन्तायाम् । **ध्यायतेः क्विपि संप्रसा-रणं दीर्घता च वक्तव्या । ७९ ।** सुष्ठु ध्यायतीति सुधीः ॥ **द्युतिगमिजु-होतीनां क्विपि क्वचित् द्वित्वं वाच्यम् । ८० ।** हसादिः शेषानः ॥ **द्योततेः क्वचिदपूर्वस्य क्विपि संप्रसारणं वाच्यम् । ८१ ।** द्योततेऽसौ दिद्युत् । गच्छति उत्पत्तिस्थितिलयान् प्राप्नोतीति जगत् । जुहोतेर्दीर्घश्च जुहोत्य-नया सा जुहूः ॥ **दृशेष्टक्सकौ चोपमाने कार्ये । ८२ ।** दृशेर्धातोः सर्वा-दिषु टक्सकौ प्रत्ययौ भवतः उपमाने कार्ये सति । चकारात् क्विप् वक्तव्यः ॥ **आ सर्वादेः । ८३ ।** एतेषु प्रत्ययेषु परेषु सर्वादेः पूर्वस्य टेरात्वं भवति । दृ-शिर् प्रेक्षणे । अन्य इव दृश्यतेऽसौ अन्यादृशः । छशषराजादेः षः ( वृ० १ प्र० ९ सू० ४३ ) षढोः कः से ( वृ० २ प्र० १ सू० ११६ ) क्विलात् ( वृ० १ प्र० ६ सू० २१ ) अन्यादृक्षः अन्यादृक् । स इव दृश्यतेऽसौ तादृशः-तादृक्षः-तादृक् । य इव दृश्यतेऽसौ यादृशः-यादृक्षः-यादृक् । एष इव दृश्यतेऽसौ एता-दृशः-एतादृक्षः-एतादृक् ॥ **किमिदमः कीश्ईशौ । ८४ ।** किम्शब्दस्य इद-म्शब्दस्य च कीश् ईश् इत्येतावादेशौ भवतः दकारादिषु प्रत्ययेषु परेषु । श-कार सर्वादेशार्थः । क इव दृश्यतेऽसौ कीदृशः-कीदृक्षः-कीदृक् । अयमिव दृ-श्यतेऽसौ ईदृशः-ईदृक्षः-ईदृक् । ईदृशीत्यादौ । सर्वादित्वाट्टेरात्वम् । भवदादिषु दृ-शिष्टकारादयः पूर्वस्य टेर्दीर्घता च वक्तव्या । भवानिव दृश्यतेऽसौ भवादृशः-भ-वादृक्षः-भवादृक् । चकारात् एतेषु प्रत्ययेषु परेषु समानशब्दस्य सो वाच्यः । समान इव दृश्यतेऽसौ सदृशः-सदृक्षः-सदृक् ॥ **अदसोऽमू आदेशः । ८५ ।** अदस्शब्दस्य दृगादिषु सत्सु अमूआदेशो भवति क्विति परे । असाविव दृश्यतेऽसौ अमूदृशः-अमूदृक्षः-अमूदृक्-ग् ॥ **प्रत्ययोत्तरपदयोः परतो युष्मदस्म-दोरेकत्वे त्वत् मत् इत्येतावादेशौ भवतः । ८६ ।** त्वमिव दृश्यतेऽसौ त्वादृशः-त्वादृक्षः-त्वादृक्-ग् । अहमिव दृश्यतेऽसौ मादृशः-मादृक्षः-मादृक्-ग् । नपरेऽस्टेरूपाने (वृ० १ प्र० ९ सू० ५४) युष्मदादेः । यूयमिव दृश्यतेऽसौ युष्मादृशः-युष्मादृक्षः-युष्मादृक् । वयमिव दृश्यतेऽसौ अस्मादृशः-अस्मादृक्षः-अस्मादृक् । टकारानुबन्धत्वादीप् । तादृशी यादृशी एतादृशी त्वादृशी मादृशी अन्यादृशी युष्मादृशी अस्मादृशी भवादृशी इत्यादि **णिनि-र्ताते । ८७ ।** धातोरतीते काले शीलेऽर्थे च णिनिप्रत्ययो भवति॥ **करणे उ-पपदे यजेर्णिनिर्वाच्यः । ८८ ।** इनां शौ सौ (वृ० १ प्र० ९ सू० २५) अग्निष्टोमेन

इयाज इति वा अग्निष्टोमेन अयाक्षीत् इति अग्निष्टोमयाजी । वा अग्निष्टोमं यष्टुं शीलं यस्य सः अग्निष्टोमयाजी । अश्राद्धं भुङ्क्ते इत्येवंशीलः अश्राद्धभोजी । अर्धं भुङ्क्ते इत्येवंशीलः अर्धभोजी । सुप्तभोजी । उष्णं भुङ्क्ते इत्येवंशीलः वा भुक्तवान् इति उष्णभोजी । हनो घत् ( वृ० २ म० २७ सू० ५ ) ॥ हन्तेर्निन्दायां णिनिर्वाच्यः । ८९ । पितरं जघान वा अवधीत् इत्येवंशीलः पितृघाती । दण्डिन्शब्दवद्रूपं ज्ञेयम् ॥ कर्त्तर्युपमाने णिनिर्वाच्यः ।९० । अभ्र इव पततीति अभ्रपाती । मत्त इव करोतीति मत्तकारी । हंस इव गच्छतीति हंसगामी । स्त्री चेत् हंसगामिनी । ङीप् ॥ क्विप्क्वनिप्डाः । ९१ । धातोरतीते काले शीलेऽर्थे च क्विप् क्वनिप् ड इत्येते प्रत्यया भवन्ति ॥ क्विप् । ९२ । वृत्र ब्रह्म भ्रूण एतत्पूर्वकादेव हन्तेः क्विप् स्यात् । अतीते परः । वृत्रं हतवानिति वृत्रहा । ब्रह्महा । भ्रूणहा । अन्यत्र शत्रुघातीत्यत्र णिनिः । शत्रुं हन्तीत्येवंशीलः शत्रुघाती । सुष्ठु करोति स्माऽसौ सुकृत् । कर्मकृत् पापकृत् पुण्यकृत् शास्त्रकृत् । सोमं सुनोति स्माऽसौ सोमसुत् । अग्निं चिनोति स्माऽसौ अग्निचित् । इत्येते क्विबन्ताः । क्वनिप् । युध संप्रहारे । राजानं युध्यते स्माऽसौ राजयुध्वा । राजानं करोतीत्येवंशीलः राजकृत्वा । सह युध्यते स्माऽसौ सहयुध्वा । सहकृत्वा । तुक् प्राग्गिमसते । क्वनिप् तुक् । तिरःसङ्गुणभारः । सुनोति स्माऽसौ सुतवान् इति सुत्वा । सुत्वा । यजति स्माऽसौ यज्वा । पारमद्राक्षीत् इति पारदृश्वा । इत्येते क्वनिबन्ताः । जनी प्रादुर्भावे ॥ सप्तम्यां जनेर्डः । ९३ । सप्तम्यां जनेर्धातोर्डः प्रत्ययो भवति अतीते काले । सरसि जायते स्म तत् सरसिजं पद्मम् । अलुक् क्वचित् ( वृ० १ म० १६ सू० ८४ ) सरसि जातं सरोजम् । संस्कारजः प्रजा अजः द्विजः । परितः खाता इति परिखा । प्रकर्षेण जायते स्मेति प्रजा । सर्वं गतवान् इति सर्वगः वा सर्वं गच्छति स्माऽसौ सर्वगः । गै शब्दे । साम गीतवान् गायति स्माऽसौ सामगः ॥ इति डप्रत्ययान्ताः ॥ इति पञ्चमप्रक्रिया ॥ १ ॥

---

॥ अथ निष्ठाप्रक्रिया ॥ क्तक्तवतू । १ । धातोरतीते काले क्तक्तवतू प्रत्ययौ भवतः । भावकर्मणोः क्तः । क्तवतुः कर्त्तरि । उगावितौ । इत्संज्ञार्थः । ष्ठा गतिनिवृत्तौ । स्थीयतेऽस्म तत् स्थितं त्वया । आगम्यते स्म तत् आगतम् । स्थीयते स्म तत् स्थितं देवदत्तेन । भावस्यैकत्वादेकवचनं नपुंसकत्वं च । भावे नपुंसकान्ताः ॥

अन्तः प्रान्तेऽन्तिके नाशे स्वरूपे च मनोहरे ॥
धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते ॥ १ ॥

क्रियते स्माऽसौ कृतः कटस्तेन । स कटं कृतवान् । करोति स्माऽसौ कृतवान् कृतं सर्वं कृतवान् । श्रितो नुत् ( वृ० १ म० ९ सू० ६० ) इतिनुमागमः ॥ गत्यर्थाकर्मकाश्च कर्त्तरि क्तः । २ । गत्यर्थादकर्मकाच्च कर्त्तरि क्तः प्रत्ययो

भवति चाद्गत्कर्मणोरपि । लोपस्त्वनुदात्ततनाम् (वृ० २ प्र० ४ सू० ७) गच्छति स्म इति गत । स्थामी (प्र० १ सू० ६५) तिष्ठति स्म इति स्थित । कृत (प्र० १ सू० ६) अटति स्म इति अटित । शम दम उपशमे ॥ **अमान्तस्य ङ्किति झसे दीर्घ** ।३। अमान्तस्य धातोर्दीर्घो भवति ङ्किति झसे परे क्विपि वा । शाम्यति स्म इति शान्त । दाम्यति स्म इति दान्त । टुवम् उद्गिरणे । वमति स्म इति वान्त ॥ **यस्य क्वचिद्विकल्पेनेट् तस्य निष्ठायां नेट् वाच्य** ।४। **अधिशीङ्स्थाऽऽसा कर्म** ।५। अधिपूर्वाणामेषामाधार कर्मसंज्ञ स्यात् ॥ **श्लिषशीङ्स्थाआस्श्रिवसजनरुहजीर्यतीनासोपसर्गत्वेन सकर्मकाणामपि कर्तरि क्तो वाच्य** ।६। रमामाश्लिष्यत् स्मेति आश्लिष्ट क हरि । हरोरमामाश्लिष्ट । शेषमधिशिष्य इति अधिशयित को विष्णु । शेषमधिशायितो विष्णु । स्वर्गमधितष्ठावित्यधिष्ठित स्वर्गमधिष्ठित उपासांचक्रे इति उपासित भक्तो हरिम् । भक्तो हरिमुपासित । आश्रयतिस्म इति आश्रित । एकादशीमुपोवास इति उपोषित वा हरिदिनमुपोवास इति उपोषित ॥ **वसिक्षुध्योरिट्** ।७। आभ्या नित्यमिट् स्यात् । घसादे ष (वृ० २ प्र० १ सू० १५०) रामममनुजज्ञे इति अनुजातोऽच्युत तमनुजात । वृषमारुरोह इति आरूढ शिव । जॄष् वयोहानौ । ऋत इर् (वृ० २ प्र० १ सू० १३८) य्वोर्विहसे (वृ० १ प्र० १० सू० ७) जगत् अनुजजार इति अनुजीर्णोऽच्युत । जगदनुजीर्णो वासुदेव ॥ र. ।८। रेफादुत्तरस्य क्तस्य नो भवति । णरनम् । पक्षे तेन रमाऽऽश्लिष्टा हरिणा इत्यादिर्ज्ञेयम् ॥ **क्तो वा सेट्** ।९। उकारोपधान्मृषश्च पर सेट् क्त प्रत्यय किद्वा भवति ॥ **शीङ्स्विदिमिदिक्ष्विदिधृषपूङ क्षेमार्थे** ।१०। एभ्य परौ सेटौ क्तक्तवत् प्रत्ययौ कितौ न भवत । दिद्युते तत् द्युतितम् । द्योततेस्म तत् द्योतितम् । प्रकर्षेण दिद्युतेस्माऽसौ प्रद्युतित । प्रकर्षेण द्युत प्राप्त वा प्रद्योततेस्माऽसौ प्रद्योतित । मृष क्षान्तौ । सपूर्व सम्यक् प्रमृषे तत् सम्मृषित-समर्षितम् । उदय प्राप्त उद्यतेस्माऽसौ उदित । रोदन प्राप्त रोदित वा रोदितिति स्माऽसौ रोदित रुदित । मुष्यते स्माऽसौ मोषित मुषित । ग्रहां ङ्किति च (वृ० २ प्र० ३ सू० १२) गृह्यते स्माऽसौ गृहीत । नुद्यते स्म इति नोदित नुदित । वेदित विदित ॥ **पूङो वा क्त सेट्** ।११। पूङ परस्य क्तप्रत्ययस्येड्वा भवति । पूङ् शोधने । पुपुवेऽसौ पवित पूत । शिश्येऽसौ शयित ॥ **कित** ।१२। उवर्णान्तात् ऋवर्णान्तात् श्विश्रियश्च धातो परस्य कित्प्रत्ययस्य वसादे रिट् न भवति । बभूवेत्यसौ वा भवति स्म इति भूत । णु स्तुतौ । नौति स्म इति नुत । वृञ् वरणे । ववार इति वृत । टुओश्वि गतिवृद्ध्यो । शिश्वायेति श्वित । श्रयते स्म इति श्रित ॥ **श्वयते सम्प्रसारणस्य दीर्घ** ।१३। अशिश्वियदिति शून ॥ **आदीदित** ।१४। आदित ईदितश्च परस्य क्तस्येट् न भवति ॥ **ञीता तक् वर्तमानेऽपि** ।१५। ञीतां धातूनां मतिबुद्धिपूजार्थानां च वर्तमानेऽपि तक् प्रत्ययो भवति । अपिशब्दा-

॥ भावकर्मणोरपि ॥ **दस्तस्य नो दश्च । १६ ।** दकारादुत्तरस्य क्तिस्तस्य नत्वं भवति । चकारात्दकारस्य नकारो भवति । ञिमिदा स्नेहे ॥ **आदितः कर्मणि निष्ठा कर्तरि च वाच्या ।१७।** मिद्यते तत् मिन्नं भिन्नमत्र तैलेन वर्तते। **भावे कर्तरि चादितः क्तस्येट्वा वाच्यः । १८ । मिदेर्गुणः । १९ ।** मेद्यतेऽसौ मेदितः मिद्यते तत् मेदितम् । ह्लाद आह्लादने ॥ **निष्ठायां ह्रस्वो वाच्यः ।२०।** ह्लादतेऽसौ ह्लन्नः । ञिष्विदा गात्रप्रस्रवणे ह्लादने च । आयासेन प्रस्विद्यतेऽसौ प्रस्विन्नः प्रस्वेदितः स्वेदितं तेन । ञिक्ष्विदा संचूर्णने । क्ष्विद्यतेऽसौ क्ष्विण्णः । क्ष्विद्यते तत् क्ष्वेदितं तेन । ञिधृषा प्रागल्भ्ये । स्वादिषु । धृष्णोतीति धर्षितः-धृष्टः । मन्यतेऽसौ मतः । बुध अवगमने । बुध्यतीति बुद्धः । पूज अर्चायाम् । पूजतीति पूजितः सः । मतिबुद्धिपूजार्थेभ्यश्च क्तः वर्तमानेऽपि इत्यपिशब्दात् ज्ञार्चेच्छार्थशीलादेस्तक् । ज्ञा अवबोधने । अर्च पूजायाम् । इषु इच्छायाम् । शील समाधौ । एतेषां तक् भवति । ज्ञातः । अर्चितः । इष्यतेऽसौ एषितः । शील्यतेऽसौ शीलितः **क्तस्य च वर्तमाने । २१ ।** वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् । तेन राज्ञां पूजितः । पूज पूजने । अन्यत्र कार्ये क्तः सामान्यः । दस्तस्य नो दश्चेति चकारान्मदेर्नेति वाच्यम् । तेन माद्यतीति मत्तः । मदी हर्षे ॥ **अदो जग्धिः ।२२।** अदो जग्धिरादेशो भवति निष्ठायां क्तिति तकारे परे क्यपि च इकार उच्चारणार्थः ॥ **क्तक्तवतू निष्ठा । २३ ।** एतौ प्रत्ययौ निष्ठासंज्ञौ स्तः । तयोर्थः (वृ० २ प्र० १ सू० ७१) झषे जषाः (वृ० १ प्र० २ सू० ३) अद् भक्षणे । अद्यते स्म तत् जग्धं किं अन्नम् । रः (प्र० २ सू० ७) कॄ विदारणे । कॄ हिंसायाम् । कॄ निक्षेपे । ऋत इर् (वृ० २ प्र० १ सू० १३८) य्वोरिहसे (वृ० १ प्र० १० सू० ७) निकीर्यते स्माऽसौ निकीर्णः । जॄष् वयोहानौ । षकारः षिद्भिदादिभ्यः इत्यस्य विशेषणार्थः । जीर्यते स्म तत् जीर्णम् किं शरीरम् । गीर्यते स्म तत् गीर्णम् । पूरी पूर्तौ । पूर्यते स्माऽसौ पूर्णः ॥ रः इति सूत्रं न पिपर्तेः **२४ ।** पोदद् (वृ० २ प्र० ७ सू० २) पिपर्ति स्म इति पूर्तः ॥ **ल्वाद्योदितः । २५ ।** ल्वादेरोदितश्च धातोः क्तिस्तो नो भवति । लूञ् छेदने लूयते स्माऽसौ लूनः । ज्या वयोहानौ । ग्रहो क्ङिति च (वृ० २ प्र० ३ सू० १२) जीनाति स्माऽसौ जीनः । भुजो कौटिल्ये । चोः कुः (वृ० १ प्र० ९ सू० ५२) भुज्यते स्माऽसौ भुग्नः । ओहाक् त्यागे । स्वामी । ईश्च ईश्च ई (प्र० १ सू० ६५) हीयते स्माऽसौ हीनः । षूङ् दूङ् डीङ् धीङ् रीङ् मीङ् दीङ् लीङ् व्रीङ् एते नव ओदितः । षूङ् प्राणिप्रसवे । सूयते सूनः । दूङ् परित्यागे । दूङ् दुःखे । दूयते स्माऽसौ दूनः । डीङ् विहायसा गतौ ॥ **डीङ इड्भावः । २६ ।** डीयते स्माऽसौ डीनः । धीङ् धारणे । धीङ् सामर्थ्ये । धीयते स्माऽसौ धीनः । रीङ् क्षरणे । रीङ् स्रवणे । रीयते स्माऽसौ रीणः । मीङ् प्राणवियोगे । मीङ् हिंसायाम् । मीयते स्माऽसौ मीनः । दीङ् क्षये । दीयते स्माऽसौ दीनः । लीङ् आश्लेषणे । लीङ् विलयने । लीयते स्माऽसौ लीनः । व्रीङ् वरणे । व्रीयते स्माऽसौ व्रीणः । एते ओदितः । ओप्यायी वृद्धौ ॥ प्यायः पी॰

टुवप् बीजतन्तुसन्ताने । उप्यतेस्म तत् उप्तम् । वह प्रापणे । हो ढः (वृ० १ प्र० ९ सू० ११) तथोर्धः (वृ० २ प्र० १ सू० ७१) ढि ढो लोपो दीर्घश्च (वृ० २ प्र० १ सू० १२०) उह्यतेस्माऽसौ ऊढः भारः । ऊढोऽनडुहापड्डुः । वेञ् तन्तुसन्ताने । ऊयतेस्माऽसौ उतः । व्येञ् संवरणे । संवीयतेस्माऽसौ संवीतः । ह्वेञ् स्पर्धायाम् । ह्वेञ् आव्हाने । ह्वेञ् कौटिल्ये । सम्प्रसारणम् दीर्घः । आहूयतेस्माऽसौ आहूतः । वद व्यक्तायां वाचि । सम्प्रसारणम् । उद्यते स्माऽसौ उदितः । वच परिभाषणे । उच्यतेस्माऽसौ उक्तः । वसिक्षुधोरिट् (प्र० २ सू० ७ वस् निवासे । उष्यते स्माऽसौ उषितः । घसादेः षः (वृ० १ प्र० १ सू० १५०) क्षुध बुभुक्षायाम् । क्षुध्यते स्माऽसौ क्षुधितः । शिष्लृ हृये । मुच्यते स्माऽसौ मुक्तः । ओव्रश्चू छेदने ॥ वेटो निष्ठायां इट् न । ४१ । स्कोरादौ च (वृ० १ प्र० ९ सू० ७०) सम्प्रसारणम् । स्वादोदितः (प्र० २ सू० २४) इति नत्वम् । णत्वम् । चोः कुः (वृ० १ प्र० ९ सू० ५३) प्रवृश्च्यतेस्माऽसौ प्रवृक्णः ॥ जनेर्जा निष्ठायाम् । ४२ । जनेर्धातोर्जा आदेशो भवति निष्ठायां परतः । जन जनने । जन्यते स्माऽसौ जातः ॥ खनेराश्च निष्ठायाम् । ४३ । खन खनने । खन्यते स्माऽसौ खातः ॥ पचेर्वः । ४४ । पचेः परस्य क्तस्य वो भवति निष्ठायाम् । पच्यते स्माऽसौ वा पाकक्रियया निर्वृत्तः पक्वः । पचति स्माऽसौ पक्ववान् ॥ क्षायेर्मः । ४५ । क्षायः परस्य क्तस्य मो भवति निष्ठायाम् । क्षै क्षये । सन्ध्यक्षराणाम् (वृ० २ प्र० १ सू० १२१) क्षायतेस्मासौ क्षामः ॥ शुषेः कः । ४६ । शुषेः परस्य क्तस्य को भवति । शुष् शोषणे । शुष्यते स्माऽसौ शुष्कः ॥ स्फायः स्फीः । ४७ । स्फायः स्फीरादेशो भवति निष्ठायां परतः । ओस्फायी वृद्धौ । स्फायते स्माऽसौ स्फीतः । धेट् पाने । धीयतेस्म तत् धीतम् । स्थामी (प्र० १ सू० ६५) गै शब्दे । गीयते स्म तत् गीतम् । पा पाने । पीयते स्म तत् पीतम् । दो अवखण्डने । दीयतेस्म तत् दितम् । षोऽन्तकर्मणि । सीयते स्म तत् सितम् । माङ् माने । मीयते स्म तत् मितम् । सेटि निष्ठायां णेर्लोपो वाच्यः । ४८ । चोर्यतेस्माऽसौ चोरितः । याच्यते स्माऽसौ याचितः ॥ क्तक्तवतू निष्ठासंज्ञौ ॥ ॥ इति निष्ठाधिकारप्रक्रिया ॥ २ ॥

---

अथ क्वस्वादिप्रक्रिया ॥ क्वसुकानौ णवेवत् । १ । धातोः क्वसुकानौ प्रत्ययौ भवतः अतीते काले वाच्ये सति तौ च णप् एवत् परस्मैपदात्मनेपदे भवतः । णबादिवद्द्विर्वचने न तु णपो णित्त्वाद्वृद्धिरित्याशयः । यथा च णप् परस्मैपदे तथा क्वसु । यथा आत्मनेपदे ए तथा कानः । ककारो गुणप्रतिषेधार्थः । उकारो नुम्विधानार्थः । डुकृञ् करणे । चकार इति चकृवान् । उगितो नुम् (वृ० १ प्र० ९ सू० ६०) हे चकृवन् चकृवांसौ चकृवांसः । चकृवांसम् चकृवांसौ । वसोर्वः (वृ० १ प्र० ९ सू० ७१) चकुषः । चकुषा । वसां रसे (वृ० १ प्र० ९ सू०

।२७। प्याय. पी आदेशो भवति निष्ठायाम् । प्यायते स्मासौ पीनः । क्षि क्षये ॥ **क्षियो निष्ठायां कर्तरि दीर्घो वाच्य. ।२८॥ दीर्घादेव क्षियो निष्ठायास्तस्य नो वाच्यः ।** २९ । क्षीयते स्माऽसौ क्षीण । क्षीणवान् । भावकर्मणोस्तु क्षीयते स्म तत् क्षित तेन । क्षित कामो मया वा कर्ण । **यरलवसंयोगादेरादन्तान्निष्ठातस्य नो वाच्यः** । द्रा स्वप्ने । द्रायतेस्माऽसौ द्राण । ग्लै म्ला हर्षक्षये । ग्लायतेस्माऽसौ ग्लान । म्लान । हि गतौ । हीयतेस्माऽसौ हित । त्रैङ् पालने ॥ **त्राणाद्या वा** । ३१ । त्राणादीवा नत्व वा निपात्यते । त्रायते स्माऽसौ त्राण -त्रात । घ्रा गन्धोपादाने । जिघ्रति स्माऽसौ घ्राण·-घ्रात । ह्री लज्जायाम् । ह्रीयते स्माऽसौ ह्रीत -ह्रीण । नुद् प्रेरणे । नुद्यतेस्माऽसौ नुन्न.-नुत्त । विदिर् विचारणे वियतेस्मासौ विन्न. वित्तः ॥

**वेत्ति रूपं विद् ज्ञाने विन्ते विदिर् विचारणे ॥**
**विद्यते विद् सत्तायां विद्लृ लाभे च विन्दति ॥ २ ॥**

उन्दी क्लेदे । उद्यतेस्माऽसौ उत्तः उन्तः ।वा गतिगन्धनयोः । निर्वातिस्म वा निर्वायते स्माऽसौ निर्वाणः-निर्वात । विद् सत्तायाम् । विद्यतेस्माऽसौ विन्नःवित्त । एते त्राणाद्या ज्ञेया॥ **सम्परिउपएभ्य परस्य करोतेर्धातोर्भूषणेऽर्थे शोभनेऽर्थे च वाच्ये सति सुट् प्रत्ययो भवति** ।३२ । टित्त्वादादौ । संस्क्रियते स्माऽसौ संस्कृतः। परिष्क्रियते स्माऽसौ परिष्कृत । उपस्क्रियते ऽसौउपस्कृत यदा संस्कृतिर्न तदा संक्रियतेस्माऽसौ संकृत । परिक्रियतेस्माऽसौ परिकृत उपकृत. । भावे घञ् । संस्क्रियतेऽसौ संस्कार अलंक्रियतेऽसौ अलंकार विद ज्ञाने । विद्यतेस्माऽसौ विदित ॥ **दो दत्ति** । ३३ । दा इत्यस्य दद्भवति किति परे । दीयतेस्माऽसौ दत्त । ददाति स्म इति दत्तवान् । वितो नुम् ( वृ० १ प्र० ९ सू० ६० )॥ **स्वरात्तो वा** । ३४ । स्वरादुत्तरस्य दा इत्यस्य वा तो भवति किति तकि परे । प्रकर्षेण दीयते स्माऽसौ प्रत्त प्रदत्त । अवदीयतेस्माऽसौ अवदत्त -अवत्त ॥ **नाम्यन्तोपसर्गस्य दीर्घो भवति** । ३५॥ **ददातेस्तो वाच्य.** । ३६ । नितरां दीयते स्म तत् नीत्त निदत्तम् । पर्यासमन्ताद्भावेन दीयतेस्म तत् परीत्तम् परिदत्तम् ॥ **दधातेर्हिर्निष्ठायां वाच्यः** । ३७ । धीयतेस्माऽसौ हितः । दधाति स्मासौ हितवान् ॥ **जहातेश्चक्तिति** । ३८ । जहातेर्धातो किति प्रत्यये परे हिरादेश स्यात् । तेन पूर्व हित्वा । हीयतेस्मासौ हित. । अहासीदिति हितवान् ॥ **ध्याख्यापृमूर्च्छिमदां क्तस्य नत्वाभावो वाच्यः** । ३९ । ध्यै चिन्तायाम् । ध्यायतेस्माऽसौ ध्यातः । ख्या प्रकथने । ख्यायतेस्माऽसौ ख्यात । पृ पालने । पूर्यते स्माऽसौ पूर्त । पोरुर् ( वृ० २ प्र० ७ सू० ७ ) य्वोर्विहसे ( वृ० १ प्र० १० सू० ७ ( मूर्च्छा मोहसमुच्छ्राययोः ॥ **राल्लोपश्छ्वोः** । ४० । रेफादुत्तरयोश्छ्वोर्लोपो भवतिक्किति तकारे परे । मूर्च्छ्यते स्माऽसौ मूर्तः । मदी हर्षे । मद्यतेस्म इति मत्तः । यज देवपूजासंगतिकरणदानेषु । यजेः क्तः । परम् सुत्वम् । सम्प्रसारणम् । इज्यते स्म तत् इष्टम्-इष्टवान् ।

टुवप् बीजतन्तुसन्ताने । उप्यतेस्म तत् उप्तम् । वह प्रापणे । हो ढः ( वृ० १ प्र० ९ सू० ११ ) तथोर्धः ( वृ० २ प्र० १ सू० ७१ ) ढि ढो लोपो दीर्घश्च ( वृ० २ प्र० १ सू० १२० ) उह्यतेस्माऽसौ ऊढः भारः । ऊढोऽनड्डुहापहुः । वेञ् तन्तुसन्ताने । ऊयतेस्माऽसौ उतः । व्येञ् संवरणे । संवीयतेस्माऽसौ संवीतः । ह्वेञ् स्पर्धायाम् । ह्वेञ् आह्वाने । ह्वेञ् कौटिल्ये । सम्प्रसारणम् दीर्घः । आहूयतेस्माऽसौ आहूतः । वद व्यक्तायां वाचि । सम्प्रसारणम् । उद्यते स्माऽसौ उदितः । वच परिभाषणे । उच्यतेस्माऽसौ उक्तः । वसिक्षुध्योरिट् ( प्र० २ सू० ७ वस् निवासे । उष्यते स्माऽसौ उषितः । घसादेः षः ( वृ० १ प्र० १ सू० १५० ) क्षुध बुभुक्षायाम् । क्षुध्यते स्माऽसौ क्षुधितः । ञिष्वप् शये । सुप्यते स्माऽसौ सुप्तः । ओव्रश्चू छेदने ॥ वेटो निष्ठायां इट् न । ४१ । स्कोराद्योश्च ( वृ० १ प्र० ९ सू० ७० ) सम्प्रसारणम् । स्वाद्योदितः ( प्र० २ सू० २४ ) इति नत्वम् । णत्वम् । चोः कुः ( वृ० १ प्र० ९ सू० ५३ ) प्रवृश्च्यतेस्माऽसौ प्रवृक्णः ॥ जनेर्जा निष्ठायाम् । ४२ । जनेर्धातोर्जा आदेशो भवति निष्ठायां परतः । जन जनने । जन्यते स्माऽसौ जातः ॥ खनेरात्वं निष्ठायाम् । ४३ । खन खनने । खन्यते स्माऽसौ खातः ॥ पचो वः । ४४ । पचेः परस्य क्तस्य वो भवति निष्ठायाम् । पच्यते स्माऽसौ वा पाकक्रियया निर्वृत्तः पक्वः । पचति स्माऽसौ पक्ववान् ॥ क्षायो मः । ४५ । क्षायः परस्य क्तस्य मो भवति निष्ठायाम् । क्षै क्षये । सन्ध्यक्षराणामा ( वृ० २ प्र० १ सू० १२१ ) क्षायतेस्माऽसौ क्षामः ॥ शुषेः कः । ४६ । शुषेः परस्य क्तस्य को भवति । शुष् शोषणे । शुष्यते स्माऽसौ शुष्कः ॥ स्फायः स्फीः । ४७ । स्फायः स्फीरादेशो भवति निष्ठायां परतः । ओस्फायी वृद्धौ । स्फायते स्माऽसौ स्फीतः । धेट् पाने । धीयतेस्म तत् धीतम् । स्थामी ( प्र० १ सू० ६५ ) गै शब्दे । गीयते स्म तत् गीतम् । पा पाने । पीयते स्म तत् पीतम् । दो अवखण्डने । दीयतेस्म तत् दितम् । षोऽन्तकर्मणि । सीयते स्म तत् सितम् । माङ् माने । मीयते स्म तत् मितम् । सेटि निष्ठायां णेर्लोपो वाच्यः । ४८ । चोर्यतेस्माऽसौ चोरितः । याच्यते स्माऽसौ याचितः ॥ क्तक्तवतू निष्ठासंज्ञौ ॥　　॥ इति निष्ठाधिकारप्रक्रिया ॥ २ ॥

---

अथ क्स्वादिप्रक्रिया ॥ क्वसुकानौ णपेवत् । १ । धातोः क्वसुकानौ प्रत्ययौ भवतः अतीते काले वाच्ये सति तौ च णप् एवत् परस्मैपदात्मनेपदे भवतः। णपादित्वाद्द्विर्वचने न तु णपो णित्वाद्वृद्धिरित्याशयः । यथा च णप् परस्मैपदे तथा क्वसुः । यथा आत्मनेपदे ए तथा कानः । ककारो गुणप्रतिषेधार्थः । उकारो नुम्विधानार्थः । डुकृञ् करणे । चकार इति चकृवान् । श्रितो नुम् ( वृ० १ प्र० ९ सू० ६० ) हे चकृवन् चकृवांसौ चकृवांसः । चकृवांसम् चकृवांसौ । वसोर्वः ( वृ० १ प्र० ९ सू० ७१ ) चकुषः । चकुषा । वसो रसे ( वृ० १ प्र० ९ सू०

।२७। प्यायः पी आदेशो भवति निष्ठायाम् । प्यायते स्मासौ पीनः । क्षि क्षये ॥ **क्षियो निष्ठायां कर्तरि दीर्घो वाच्य.।२८॥ दीर्घादेव क्षियो निष्ठायास्तस्य नो वाच्यः।२९।** क्षीयते स्माऽसौ क्षीणः । क्षीणवान् । भावकर्मणोस्तु क्षीयते स्म तत् क्षितं तेन । क्षित. कामो मया वा कर्णः । **यरलवसंयोगादेरादन्तान्निष्ठातस्य नो वाच्यः ।** द्रा स्वप्ने । द्रायतेस्माऽसौ द्राणः । ग्लै म्लै हर्षक्षये । ग्लायतेस्माऽसौ ग्लानः । म्लान. । हि गतौ । हीयतेस्माऽसौ हितः । त्रैङ् पालने ॥ **त्राणाद्या वा । ३१ ।** त्राणादीनां नत्वं वा निपात्यते । त्रायते स्माऽसौ त्राण -त्रात. । घ्रा गन्धोपादाने । जिघ्रति स्माऽसौ घ्राणः-घ्रातः । ह्री लज्जायाम् । ह्रीयते स्माऽसौ ह्रीतः-ह्रीण. । नुद प्रेरणे । नुद्यतेस्माऽसौ नुन्नः-नुत्तः । विदिर् विचारणे विद्यतेस्मासौ विन्नः वित्तः ॥

**वेत्ति रूपं विद ज्ञाने विन्ते विदिर् विचारणे ॥**
**विद्यते विद सत्तायां विद्लृ लाभे च विन्दति ॥ २ ॥**

उन्दी क्लेदे । उद्यतेस्माऽसौ उत्तः उन्नः । वा गतिगन्धनयोः । निर्वातिस्म वा निर्वायते स्माऽसौ निर्वाणः-निर्वातः । विद् सत्तायाम् । विद्यतेस्माऽसौ विन्नःवित्तः। एते त्राणाद्या ज्ञेया॥ **संपरिउपएभ्यः परस्य करोतेर्धातोर्भूषणेऽर्थे शोभनेऽर्थे च वाच्ये सति सुट् प्रत्ययो भवति ।३२ ।** टित्वादादौ । संस्क्रियते स्माऽसौ संस्कृतः। परिष्क्रियते स्माऽसौ परिष्कृतः । उपस्क्रियते ऽसौउपस्कृतः यदा संस्कृतिर्न तदा संक्रियतेस्माऽसौ संकृत. । परिक्रियतेस्माऽसौ परिकृत: उपकृतः । भावे घञ् । संस्क्रियतेऽसौ संस्कारः अलङ्क्रियतेऽसौ अलंकार: विद ज्ञाने । विद्यतेस्माऽसौ विदितः ॥ **दो दत्ति । ३३ ।** दा इत्यस्य दत्त्वमिति किति परे । दीयतेस्माऽसौ दत्तः । ददाति स्म इति दत्तवान् । त्रितो नुम् ( पू० १ प्र० ९ सू० ६० ) ॥ **स्वरात्तो वा । ३४ ।** स्वरादुत्तरस्य दा इत्यस्य त्तो भवति किति तकि परे । प्रकर्षेण दीयते स्माऽसौ प्रत्तः प्रदत्त. । अवदीयतेस्माऽसौ अवदत्तः-अवत्त.॥ **नाम्यन्तोपसर्गस्य दीर्घो भवति । ३५॥ ददातेस्तो वाच्य. । ३६ ।** नितरां दीयते स्म तत् नीत्तं निदत्तम् । पर्यासमन्ताद्भावेन दीयतेस्म तत् परीत्तम्-परिदत्तम् ॥ **दधातेर्हिर्निष्ठायां वाच्यः । ३७ ।** धीयतेस्माऽसौ हितः । दधाति स्मासौ हितवान् ॥ **जहातेश्चकिति । ३८ ।** जहातेर्धातोः किति प्रत्यये परे हिरादेशः स्यात् । तेन पूर्वं हित्वा । हीयतेस्मासौ हितः । अहासीदिति हितवान् ॥ **ध्याख्याप्रमूर्च्छिमदां क्तस्य नत्वाभावो वाच्यः । ३९ ।** ध्यै चिन्तायाम् । ध्यायतेस्माऽसौ ध्यातः । ख्या प्रकथने । ख्यायतेस्माऽसौ ख्यातः । पृ पालने । पूर्यते स्माऽसौ पूर्तः । वोष्ठ्य ( पू० २ प्र० ७ सू० ७ ) प्योर्विहसे ( पू० १ प्र० १० सू० ७ ( मूर्च्छा मोहसमुच्छ्राययोः ॥ **राल्लोपश्छ्वोः । ४० ।** रेफादुत्तरयोश्छ्वोर्लोपो भवति किति तकारे परे । मूर्च्छ्यते स्माऽसौ मूर्तः । मदी हर्षे । मद्यतेस्म इति मत्तः । यज देवपूजासंगतिकरणदानेषु । यजेः क्तः । यजम् कुलम् । संवसारणम् । इज्यते स्म तत् इष्टम्-इष्टवान् ।

टुवप् बीजतन्तुसन्ताने । उप्यतेस्म तत् उप्तम् । वह प्रापणे । हो ढः ( वृ० १ प्र० ९ सू० ११ ) तयोर्धः ( वृ० २ प्र० १ सू० ७१ ) ढि ढो लोपो दीर्घश्च ( वृ० २ प्र० १ सू० १२० ) उह्यतेस्माऽसौ ऊढः भारः । ऊढोऽनड्वान्पटुः । वेञ् तन्तुसन्ताने । ऊयतेस्माऽसौ उत । व्येञ् संवरणे । संवीयतेस्माऽसौ संवीतः । ह्वेञ् स्पर्धायाम् । ह्वेञ् आह्वाने । ह्वेञ् कौटिल्ये । सम्प्रसारणम् दीर्घः । आहूयतेस्माऽसौ आहूतः । वद व्यक्तायां वाचि । सम्प्रसारणम् । उद्यते स्माऽसौ उदितः । वच परिभाषणे । उच्यतेस्माऽसौ उक्तः । वसिक्षुध्योरिट् ( प्र० २ सू० ७ वस् निवासे । उष्यते स्माऽसौ उषितः । घसादेः षः ( वृ० १ प्र० १ सू० १५० ) क्षुध बुभुक्षायाम् । क्षुध्यते स्माऽसौ क्षुधितः । ञिष्वप् शये । सुप्यते स्माऽसौ सुप्तः । ओव्रश्चू छेदने ॥ वेटो निष्ठायां इट् न । ४१ । स्फोराद्योश्च ( वृ० १ प्र० ९ सू० ७० ) सम्प्रसारणम् । स्वादोदितः ( प्र० २ सू० २४ ) इति नत्वम् । णत्वम् । चोः कुः ( वृ० १ प्र० ९ सू० ५३ ) प्रवृश्च्यतेस्माऽसौ प्रवृक्णः ॥ जनेर्जा निष्ठायाम् । ४२ । जनेर्धातोर्जा आदेशो भवति निष्ठायां परतः । जन जनने । जन्यते स्माऽसौ जातः ॥ खनेरात्व निष्ठायाम् । ४३ । खन खनने । खन्यते स्माऽसौ खातः ॥ पचो वः । ४४ । पचेः परस्य क्तस्य वो भवति निष्ठायाम् । पच्यते स्माऽसौ वा पाकक्रियया निर्वृत्तः पक्वः । पचति स्माऽसौ पक्ववान् ॥ क्षायो मः । ४५ । क्षायः परस्य क्तस्य मो भवति निष्ठायाम् । क्षै क्षये । सन्ध्यक्षराणामा ( वृ० २ प्र० १ सू० १२१ ) क्षायतेस्माऽसौ क्षामः ॥ शुषः कः । ४६ । शुषेः परस्य क्तस्य को भवति । शुष् शोषणे । शुष्यते स्माऽसौ शुष्कः ॥ स्फायः स्फीः । ४७ । स्फायः स्फीरादेशो भवति निष्ठायां परतः । ओस्फायी वृद्धौ । स्फायते स्माऽसौ स्फीतः । धेट् पाने । धीयतेस्म तत् धीतम् । स्थामी ( प्र० १ सू० ६५ ) गै शब्दे । गीयते स्म तत् गीतम् । पा पाने । पीयते स्म तत् पीतम् । दो अवखण्डने । दीयतेस्म तत् दितम् । षोऽन्तकर्मणि । सीयते स्म तत् सितम् । माङ् माने । मीयते स्म तत् मितम् । सेटि निष्ठायां णेर्लोपो वाच्यः । ४८ । चोर्यतेस्माऽसौ चोरितः । याच्यते स्माऽसौ याचितः ॥ क्तक्तवतू निष्ठासंज्ञौ ॥ ॥ इति निष्ठाधिकारप्रक्रिया ॥ २ ॥

---

अथ क्स्वादिप्रक्रिया ॥ क्वसुकानौ णपेवत् । १ । धातोः क्वसुकानौ प्रत्ययौ भवतः अतीते काले वाच्ये सति तौ च णप् एवत् परस्मैपदात्मनेपदे भवतः । णबादित्वाद्द्विर्वचने न तु णपो णित्त्वाद्वृद्धिरित्याशयः । यथा च णप् परस्मैपदे तथा क्वसुः । यथा आत्मनेपदे ए तथा कानः । ककारो गुणप्रतिषेधार्थः । उकारो नुम्विधानार्थः । डुकृञ् करणे । चकार इति चकृवान् । उितो नुम् ( वृ० १ प्र० ९ सू० ६० ) हे चकृवन् चकृवांसौ चकृवांसः । चकृवांसम् चकृवांसौ । वसोर्वः ( वृ० १ प्र० ९ सू० ७१ ) चकृुषः । चकृुषा । वसां रसे ( वृ० १ प्र० ९ सू०

४ ) चकृवद्भ्याम् चकृवद्भिः इत्यादि । चक्रे इति चकृवान् । स्त्रीलिङ्गे चकुषी । नपुंसके चकृवः चकुषी चकृवांसि । भिदिर्विदारणे । बिभेद इति बिभिद्वान् बिभिद्वांसौ बिभिद्वांसः । बिभिद्वांसम् । बिभिद्वांसौ । वसोर्व उः (वृ० १ प्र० ९ सू० ७१ ) बिभिदुषः । बिभिदुषा । वसां रसे ( वृ० १ प्र० ९ सू० ४ ) बिभिद्वद्भ्याम् बिभिद्वद्भिः इत्यादि । बिभिदे इति बिभिदानः । भञ्जो आमर्दने । बभञ्ज इति बभञ्ज्वान् । बभञ्जे इति बभञ्जानः । जागृ निद्राक्षये । जजागार इति जजागृवान् जजागर्वान् इत्यपि भवति ॥ **जागर्तेः किति गुणो वक्तव्यः** । २ । तेन जजागरुषः ॥ **कृतद्वित्वानामेकस्वराणामाधन्तानां च घसेरेव क्वसोरिड्वाच्यो नान्येषाम्** । ३ । बभूव इति बभूवान् । ऋ गतौ । आर इति आरिवान् । पपौ इति पपिवान् । अद भक्षणे । आद इति आदिवान् । तस्थौ इति तस्थिवान् । बभौ इति बभिवान् । ययौ इति ययिवान् । या प्रापणे । दरिद्रातेरनपि नित्यालोपिरिनेट् । ददरिद्रौ इति दरिद्रिवान् ॥ **क्वुण्सखुटौ हित्वा दरिद्रातेरनप्यालोपो वाच्यो लुङि वा** । ४ । ददरिद्रुषः । डुदाञ् दाने । ददौ इति ददिवान् ददुषः । घस्ल अदने । जघास इति जक्षिवान् । शुहोशुः (वृ० २ प्र० १ सू० ६४) झपानां जबगडदाः (वृ० २ प्र० १ सू० ३२) गमां स्वरे ( वृ० २ प्र० १ सू० १०७ ) खसे चपा झसानाम् ( वृ० १ प्र० ४ सू० १८ ) किलात् ( वृ० १ प्र० ६ सू० २१ ) घस्योत्वे कृते इडभावः । जक्षुषः ॥ **गम्हन्विद्विश्दृशां क्वसौ वेट्** । ५ । गम्लृ गतौ । जगाम इति जग्मिवान् जगन्वान् । मो नो धातोः (प्र० १ सू० ५८) **द्विरुक्तस्य हन्तेर्हकारस्य घत्वं वक्तव्यम्** । ६ । जघान इति जघ्निवान्-जघन्वान् । विद ज्ञाने । विवेद इति विविदिवान्-विविद्वान् । विश् प्रवेशने । विवेश इति विविशिवान्-विविश्वान् । दृशिर् प्रेक्षणे । ददर्श इति ददृशिवान् ददृश्वान् । इण् गतौ ॥ **इणो दीर्घता क्वसौ वक्तव्या** ।७। इयाय इति ईयिवान् । उपेयाय इति उपेयिवान् लोपः पचां किति (वृ० २ प्र० १ सू० ९ ) पपाच इति पेचिवान् ॥ **शतृशानौ तिप्तेवत् क्रियायाम्** । ८ । क्रियापदे गम्यमाने सति धातोः शतृशानौ प्रत्ययौ भवतः वर्तमानेऽर्थे तौ च तिप्तेवत् परस्मैपदात्मनेपदयोर्भवतः । अदे ( वृ० २ प्र० १ सू० १४ ) पचतीति पचन् आस्ते ॥ **ऋकारानुबन्धस्य नुमागम एव भवति न दीर्घता वक्तव्या** । ९ । पठतीति पठन् । तिष्ठतीति तिष्ठन् । गायतीति गायन् । गच्छतीति गच्छन् । पिबतीति पिबन् ॥ **मुगानेतः** । १० । 'अकारस्य आने परे मुगागमो भवति' यजतेऽसौ यजमानः पिबति वा पठति । यज देवपूजा० । यजतेऽसौ यजमानः स्तौति । मन ज्ञाने । मन्यतेऽसौ मन्यमानः । मनु अवबोधने । तनादेरुः ( वृ० २ प्र० १९ सू० १ ) मनुतेऽसौ मन्वानः परागच्छति । करोतीति कुर्वन् कः । दित्यदुः (वृ० २ प्र० १९ सू० ४) कुरुतेऽसौ कुर्वाणः क्रियतेऽसौ क्रियमाणः ॥ **उपसर्गस्थनिमित्तात् नकारस्य णो वाच्यः** । ११ । प्रणीयतेऽसौ प्रणीयमाणः ॥ **आसेरान ई** । १२ ।

आसेर्धातोः परस्य आन आकारस्य ईकारादेशो भवति । आस् उपवेशने । आस्ते सौ आसीनः ॥ **वादीपोः शतुः** । १३ । अवर्णात्परस्य शतृप्रत्ययस्य वा नुमागमो भवति ईकारे ईपि च परे । तुद व्यथने । तुदतीति तुदन् । तुदन्तौ तुदन्तः । स्त्रीलिङ्गे तुदति सा तुदन्ती तुदती तुदन्त्यौ-तुदत्यौ तुदन्त्य-तुदत्यः । नपुंसके तुदतीति तुदत् तुदती-तुदन्ती तुदन्ति इत्यादि ॥ **अप्ययोर्नित्यम्** । १४ । अप्प्रत्ययप्रत्ययसम्बन्धिनः अकारात्परस्य शतुर्नित्यं नुमागमो भवति ईपोः परतः । भवति इति भवन् भवन्तौ भवन्तः । भवति सा भवन्ती भवन्त्यौ भवन्त्य. । भवति तत् भवत् भवन्ती भवन्ति । पचतीति पचन् पचन्ती स्त्री । नपुंसके पचति तत् पचत् पचन्ती पचन्ति । दिवुक्रीडादि० । दीव्यति इति दीव्यन् । दीव्यन्ती स्त्री । नपुंसके दीव्यति तत् दीव्यत् दीव्यन्ती दीव्यन्ति । पठतीति पठन् पठन्ती स्त्री । पठत् पठन्ती पठन्ति । हसतीति हसन् । हसन्ती स्त्री । हसत् नपुंसके । क्षिप्यतीति क्षिप्यन् क्षिप्यन्ती क्षिप्यत् । जयतीति जयन् जयन्ती जयत् ॥ **वादीपोः शतुरित्यत्र वाशब्दात् द्विरुक्तानां जक्षादीनां च शतुर्नित्यं नुम्प्रतिषेधो वक्तव्यो नपुंसके शौ वा** । १५ । ददातीति ददत्-दधत् ददती-दधती । जक्ष भक्षहसनयो. । जक्षतीति जक्षत् जक्षती जक्षति जक्षन्ति कुलानि । जागृ निद्राक्षये । जागर्तीति जाग्रत् जाग्रती । जाग्रन्ति जाग्रति । दरिद्रा दुर्गतौ ॥ **दरिद्रातेरालोपो वक्तव्य.** । १६ । दरिद्रातीति दरिद्रत् दरिद्रन्ती दरिद्रती दरिद्रन्ति । चकास्तीति चकासत् चकासती चकासन्ति-चकासति । शास्तीति तत् शासत् । अनुशास्ति तत् अनुशासत् । दादेः ( वृ० २ प्र० ९ सू० १ ) ददत् ददती ददन्ति-ददति । दधत् इत्यादि ॥ **विदेर्वा वसुः** । १७ । विदेर्धातोः शतृविषये वा वसु प्रत्ययो भवति । वेत्तीति विद्वान्-विदन् ॥ **भविष्यदर्थे तिप्वत् शतृशानौ भवतः** । १८ । **भवभवत्तवभवच्छब्दौ पूज्यार्थे निपात्यते** । १९ । पूज्यार्थे पाठ । भवभवन्तो भवन्मिश्राः तत्रभवद्भिर्भगवत्पादैर्भणितम् । **शीले तृन्** । २० । धातोस्तृन् प्रत्ययो भवति शीले स्वभावेऽर्थे । नकारः प्रत्ययभेदज्ञापनार्थ । करोतीत्येवंशीलः कर्ता । विचरतीत्येवंशील. विचरिता । णीञ् प्रापणे नयतीत्येवंशीलः नेता । धर्ता । म्रियते इत्येवंशीलः मर्ता । बिभर्तीत्येवंशीलः भर्ता । शयिता इत्यादि ॥ इति कृत्स्वादिप्रक्रिया ॥ ३ ॥

---

अथ शीलार्थप्रक्रिया ॥ **इष्णुस्नुक्नुः** । १ । धातोः शीले स्वभावेऽर्थे इष्णु स्नु क्नु इत्येते प्रत्यया भवन्ति । अलर्थः ॥ **अलंकृञ् निराकृञ् प्रजन् उत्पच् उत्पत् उत्पद् ग्रस् उन्मद् रुच् अपत्रप् वृतु वृधु सह चर भ्राज् ज्यन्तात् इष्णुः** । २ । अलंकरोतीत्येवंशीलः अलंकरिष्णु । निराकरिष्णु. । प्रजायते इत्येवंशीलः प्रजनिष्णुः । उत्पचतीत्येवंशीलः उत्पचिष्णुः । पत्लृ पतने । उत्पततीत्येवंशील. उत्पतिष्णुः । पद गतौ । उत्पद्यते इत्येवंशील· उत्पदिष्णुः । मद् मदने ।

ग्रसतीत्येवंशील ग्रसिष्णु । उन्मादयतीत्येवंशील उन्मदिष्णु । रुचि दीप्तौ । रोचतीत्ये-
वंशील रोचिष्णु । त्रपूष् लज्जायाम् । अपत्रपति वा अपत्रपते इत्येवंशील अपत्रपिष्णु ।
वृतु वर्तने । वर्तते इत्येवंशील वर्तिष्णु । वृधुङ् वृद्धौ । वर्धते इत्येवंशील वर्धिष्णु ।
सहति सहते वेत्येवंशील सहिष्णु । चरतीत्येवंशील चरिष्णु भविष्णु । भ्राजृ
दीप्तौ । भ्राजते इति भ्राजिष्णु ॥ **इष्णुप्रत्यये परे ण्यन्तानां णिलोपा-
भावो वाच्य ।** ३ । कारयतीत्येवंशील कारयिष्णु ॥ एते इष्णुप्रत्ययान्ता ॥
**ग्ला जि स्था भू म्ला क्षि पच् यज् परिमृज् एभ्य स्नु । ४ ।**
ग्लै हर्षक्षये । ग्लायतीत्येवंशील ग्लास्नु । जयतीत्येवंशील जिष्णु । भवतीत्ये-
वंशील भूष्णु ॥ **जिभ्वोः स्नौ गुणाभावो न इट । ५ ॥ क्षेश्च तथा ।**
। ६ । तिष्ठतीत्येवंशील स्थास्नु । क्षि क्षये । क्षयतीत्येवंशील क्षिष्णु । पचती-
त्येवंशील पक्ष्णु । यजतीत्येवंशील यक्ष्णु । मृजूष् शुद्धौ ॥ **मृजेर्गुणनि-
मित्ते प्रत्यये परे वृद्धिर्वाच्या । ७ ।** परिमार्ष्टीत्येवंशील परिमार्क्ष्णु ॥
**विष् त्रस् गृध् धृष् क्षिप् एभ्य क्नु । ८ ।** विष्लृ व्याप्तौ । वेवेष्टि इत्येवं-
शील विष्णु । त्रसी उद्वेगे । त्रसी भये । त्रस्यतीत्येवंशील त्रस्नु । गृधु अभिकां-
क्षायाम् । दिवादि । गृध्यतीत्येवंशील गृध्नु । ञिधृषा प्रागल्भ्ये । स्वादि । धृ-
ष्णोतीत्येवंशील धृष्णु । क्षिप् प्रेरणे । क्षिपतीत्येवंशील क्षिप्नु । ककारो गुण-
निषेधार्थ ॥ **षाकोकण । ९ ।** धातो शीलेऽर्थे षाक उ उकण् इत्येते प्र-
त्यया भवन्ति ॥ **जल्प भिक्ष कुट्ट लुण्ठ वृङ् एभ्य षाक प्रत्ययो
भवति । १० ।** जल्प व्यक्तायां वाचि । जल्पतीत्येवंशील जल्पाक । भिक्ष
याच्ञायाम् । भिक्षतीत्येवंशील भिक्षाक । कुट्ट ताडने छेदने वा । कुट्टतीत्येवं-
शील कुट्टाक । लुण्ठ चौर्ये । लुण्ठयेवंशील लुण्ठाक । वृङ् संभक्तौ । वृञ्
संवरणे । वर निवारणे । वृणुते वा वरतीत्येवंशील वा वृणीते इत्येवंशील वराक
ष ईदर्थ । वराकी ॥ **सान्ताशस् भिक्ष एभ्य उ प्रत्ययो भवति । ११ ॥
सान्ताशसयोश्च । १२ ।** सप्रत्ययान्तादाङ्पूर्वात् शसु स्तुतावित्यस्माद्धातोश्च
शीलार्थे मिनापि उ. प्रत्ययो भवति । वच परिभाषणे । विवक्षतीति विवक्षु ।
इच्छायामात्मनः स (वृ० २ प्र० २८ सू० १) हित्वम् । पूर्वस्य हसादि शेष
(वृ० २ प्र० १ सू० ५७) ऋत इर् (वृ० २ प्र० १ सू० १३८) व्यहिस
(वृ० १ प्र० १० सू० ७) कुहोश्चु (वृ० २ प्र० १ सू० ६४) चिकीर्षती-
त्येवंशील चिकीर्षु जिघृक्षतीत्येवंशील जिघृक्षु । आङ्पूर्व शसु स्तुतौ शस
कथने । आशंसतीत्येवंशील आशंसु । भिक्षतीत्येवंशील भिक्षु । पिपासतीत्येवंशील
पिपासु । तितीर्षतीत्येवंशील तितीर्षु ॥ **लष पत पद भिक्ष स्था भू वृष
हन् कम् गम् शॄ एभ्य उकण् प्रत्ययो भवति । १३ ।** लष कान्तौ ।
लषतीत्येवंशील लाषुक । पततीत्येवंशील पातुक । भिक्ष याच्ञायाम् । भि-
क्षतीत्येवंशील भिक्षुक । पद गतौ । णित्वाद्वृद्धि । पद्यतीत्येवंशील पादुक ।
तिष्ठतीत्येवंशील स्थायुक । भवतीत्येवंशीलः वा भवितुं शी

वृष वृष्टौ। वृधु सेचने। वर्षतीत्येवंशीलः वर्षुकः। हन्तीत्येवंशीलः घातुकः। कमु कान्तौ। कामयते इत्येवंशीलः वा कमितुं शीलमस्यास्तीति कामुकः। गम्लृ गतौ। गच्छतीत्येवंशीलः गामुकः। शॄ हिंसायाम्। शृणातीत्येवंशीलः शारुकः॥ **शॄवन्द्योरारुः। १४।** शॄवन्द्योर्धात्वोरारुः प्रत्ययो भवति। शरारुः। वन्दारुः॥ **स्पृहि गृहि पति शीङ् एभ्य आलुर्वाच्यः। १५।** स्पृह ईप्सायाम्। ईप्सा इच्छा। गृह ग्रहणे। पत ऐश्वर्ये। त्रयश्चुरादयोऽदन्ताः॥ **आलौ त्रिलोपाभावो वाच्यः। १६।** स्पृहयतीत्येवंशीलः स्पृहयालुः। गृहयतीत्येवंशीलः गृहयालुः पतयतीत्येवंशीलः पतयालुः। शीङ् स्वप्ने। शेते इत्येवंशीलः शयालुः॥ **नमादेरः। १७।** नम् कपि स्मिङ् जसुपूर्वो जस् कम् हिंस् दीप् एभ्यो रः प्रत्ययो भवति शीलेऽर्थे। णमु प्रह्वत्वे शब्दे च। नमतीत्येवंशीलः नम्रः। कपि चलने। कम्पतीत्येवंशीलः कम्प्रः। स्मिङ् ईषद्धसने। स्मयते इत्येवंशीलः स्मेरः। जसु मोक्षणे। जस् गतिनिवृत्तौ। दिवादिः। न जस्यतीत्येवंशील अजस्रम्। कामयते इत्येवंशीलः कम्रः। हिंसि हिंसायाम्। हिनस्तीत्येवंशीलः हिंस्रः। दीपि दीप्तौ। दीप्यते इत्येवंशीलः दीप्रः। **घसादेः क्मरः। १८।** घस् सृ अद् एभ्यः क्मरः प्रत्ययो भवति शीलेऽर्थे। घस्लृ अदने। घसतीत्येवंशीलः घस्मरः सृ गतौ। सृ सरणे। सृ हिंसायाम्। सरतीत्येवंशीलः सृमरः। अद् भक्षणे। अत्तीत्येवंशीलः अद्मरः॥ **भिदि छिदि विदि एभ्यः कुरच्प्रत्ययः शीलेऽर्थे। १९।** भिनत्तीत्येवंशीलः भिदुरः। विद् ज्ञाने। वेत्ति इत्येवंशीलः विदुरः। छिदिर् द्वैधीकरणे। छिनत्तीत्येवंशीलः छिदुरः॥ **भासादेर्घुरः। २०।** भास् भञ्ज मिद् एभ्यो घुरः प्रत्ययो भवति शीलेऽर्थे। घकारो घित्कार्यार्थः। भासृ दीप्तौ। भासतीत्येवंशील भासुरः॥ **चजोः कगौ घिति। २१।** धातोश्चकारजकारयोः ककारगकारौ भवतः घिति प्रत्यये परे। भञ्जो आमर्दने। भिनत्तीत्येवंशील. भङ्गुरः- ञिमिदा स्नेहने। मेद्यते इत्येवंशीलः मेदुरः॥ **यङ ऊकः। २२।** यज् जप् दश् वद् एभ्यो यङ्प्रत्ययान्तेभ्य ऊकः प्रत्ययो भवति शीलेऽर्थे॥ **यङो लुक् तत्सन्नियोगे धातोर्द्विर्वचनम्। २३।** यज देवपूजासंगतिकरणदानेषु। अतिशयेन यजतीति वा इज्यते इत्येवंशीलः यायजूकः। जप व्यक्तायां वाचि। भ्रमजपां मुक् ( पृ० २ प्र० २९ सू० ९ ) जञ्जप्यते इत्येवंशीलः जञ्जपूकः। दश् दशने दन्दशूकः। वावद्यते इत्येवंशीलः वावदूकः॥ **जागर्तेरूको वाच्यः। २४।** जागर्तीत्येवंशीलः जागरूकः॥ **इण्नश्जिसृगमिभ्यः क्वरप् वाच्यः। २५।** इण् गतौ। ह्रस्वस्य पिति ( प्र० १ सू० ६८ ) एतीत्येवंशीलः इत्वरः। णश अदर्शने। नश्यतीत्येवंशीलः नश्वरः। जयतीत्येवंशीलः जित्वरः। सरतीत्येवंशीलः सृत्वरः॥ **गत्वरो निपात्यते शीलेऽर्थे। २६।** गच्छतीत्येवंशीलः गत्वरः॥ **भियः क्रुक्लुकौ वक्तव्यौ। २७।** बिभेतीत्येवंशीलः भीरुः भीलुकः॥ **इषेरुश्छश्च। २८।** इषेः उः प्रत्ययो भवति छोऽन्तादेशश्च इच्छतीति इच्छुः॥ **वरः। २९।** स्था ईश् भास् पिस् कसादिभ्यो वरः

प्रत्ययो भवति शीलेऽर्थे । तिष्ठतीत्येवंशीलः स्थावरः । ईश् ऐश्वर्ये । ईष्टे इत्येवंशील ईश्वरः । भास दीप्तौ । भासते इत्येवंशीलः भास्वरः । पिस गतौ । पिसतीत्येवंशीलः पेस्वरः । कस् गतौ । कसतीत्येवंशीलः कस्वरः ॥ **आदृतः किर्द्धिश्च भूते** । ३० । आकारान्तादृकारान्ताद्धातोर्जनिनमिगमिभ्यश्च शीलेऽर्थे भूतकाले किः प्रत्ययो भवति णबादिवद्धातोश्च द्विर्वचनं भवति । आतोऽनपि ( वृ० २ प्र० १ सू० १२३ ) ॥

> **रामः सोमं पपिर्यज्ञे ददिर्गाश्चक्रिरद्भुतम् ॥**
> **याजकान् वव्रिराजार्हैः पौण्डरीके महाद्विजान् ॥ १ ॥**
> **तदा यज्ञिर्महाश्चर्यं नेमिर्नृपगणोऽपि तम् ॥**
> **ब्राह्मणानां श्रुतिविदां गणो जग्मिर्धनं मुदा ॥ २ ॥**

॥ इति कृदन्तप्रक्रियायां शीलार्थप्रक्रिया ॥ ४ ॥

---

अथोणादयो निरूप्यन्ते ॥ **सदोणादयः** । १ । सर्वस्मिन्काले उणादयः प्रत्यया भवन्ति ॥ **कृ वा पा जिमि स्वदि साधि अशूङ् एभ्य उण् प्रत्ययो भवति** । २ । णकारो वृद्ध्यर्थः । करोतीति कारुः कारकः । वा गतिगन्धनयोः । आतो युक् ( प्र० १ सू० १२ ) वातीति वायुः । पा पाने । पातीति पायुः । जयति अनेनेति जायुः । डुमिञ् प्रक्षेपणे । मि कौटिल्ये । मिनोतीति मायुः । स्वदि आस्वादने । स्वदते इति स्वादुः । साध्नोतीति साधुः । अश्नोतीति आशुः ॥ **सि तनि गमि मसि सचि अवि हि धा क्रुशि एभ्यस्तुन् प्रत्ययो भवति** । ३ । षिञ् बन्धने । सिनोतीति सेतुः । तनोतीति तन्तुः । गच्छतीति गन्तुः । मसि परिणामे रक्षणे च । मस्यतीति मस्तुः । षच् सवधने । सचतीति सक्तुः । अव रक्षणे । अवतेर्वकारस्य उकारः । अवतीति ओतुः । हि गतौ वृद्धौ च । हिनोतीति हेतुः । दधातीति धातुः । क्रुश आह्वाने क्रुशी रोदने च । क्रुश् आक्रोशे । छशषराजादेः षः ( वृ० १ प्र० ९ सू० ४३ ) ढ्रुभिः ष्टुः ( वृ० १ प्र० ४ सू० ८ ) क्रोशतीति क्रोष्टा । अव रक्षणे पालने च । क्रियासम्प्रसारणमुकारः ॥ **अवतेर्मुक्** । ४ । अवतेर्धातोर्मुक्प्रत्ययो भवति । अवतीति ओम् ओमौ ओमः ॥ **अतिबृंहिभ्यां मनिण्** । ५ । अत सातत्यगमने । सततमवतीति आत्मा वा अतति अखिलजनान्तर्निवासित्वेन सुकृतदुष्कृतकर्माणि पश्यतीति आत्मा । बृहि वृद्धौ ॥ **मन्युपधाया ऋः रः** । ६ । मनिण्प्रत्यये परे उपधाया ऋकारस्य रेफो भवति बृंहतीति ब्रह्मा ॥ **घृधृपदो मः** । ७ । घृ क्षरणे दीप्तौ च । घरतीति वा घ्रियते इति घर्मः । धृ धारणे । धरतीति वा ध्रियतेऽसौ धर्मः । पद गतौ । पद्यते तत् पद्मम् ॥ **ऋ स्तु सु हु हृ क्षि क्षु भा मा या वा जक्ष रै नी श्यै पद् एभ्यो मः प्रत्ययो भवति** । ८ । ऋ गतौ । ऋच्छतीति अर्मः नेत्ररोगः । स्तौतीति स्तोमः । षूङ् प्रसवे । सूयतेऽसौ

सोम । हर्म । जुहोतीति होम । म्रियते इति मर्म । क्षि निवासगत्योः । क्षयतीति क्षेम । टुक्षु शब्दे । क्षौतीति क्षोम । मातीति मामः । माम । यातीति याम । वातीति वाम । जक्ष भक्ष हसनयो । जक्ष्म । रायतीति राम । नेम । श्यैङ् दीप्तौ श्यायति इति श्याम । पद्म ॥ **भीध्वोर्वा मक् ।९।** बिभेत्यस्मादिति भीम । धूयतेऽसौ धूम ॥ **ध्वादेरुलिक् ।१०।** ध्वादेर्धातोरुलिक् प्रत्ययो भवति । धूनोति वा धूयतेऽसौ धूलि । अगि रगि लघि गत्यर्थाः इदित । अङ्गतेऽसौ अङ्गुलि ॥ **भविष्यदर्थे णिनि ।११।** आगमिष्यतीति आगामी । भविष्यतीति भावी ॥ **शसादेः करणे त्रक् ।१२।** शसादेर्धातोः करणेऽर्थे त्रक् प्रत्ययो भवति **सर्वधातुभ्यस्त्रमनौ ।१३।** शस् हिंसायाम् । शसति वा शस्यते अनेनेति शस्त्रम् । शास अनुशिष्टौ । शिष्यते अनेनेति शास्त्रम् । असु क्षेपणे । अस्यते अनेनेति अस्त्रम् । पीयते अनेनेति पात्रम् । पा पाने । नीयते अनेनेति नेत्रम् । दा लवने । दीयते अनेनेति दात्रम् ॥ **युवहाग्निभ्योनिः ।१४।** एभ्यो धातुभ्यो नि प्रत्ययो भवति । यु मिश्रणे । यौति इति योनिः । वहतीति वह्निः । अङ्गतेऽसौ अग्नि ॥ **इन्दिचन्दिशकिरुदिभ्यो रः ।१५।** एभ्यो रप्रत्ययो भवति । इदि चदि आह्लादने दीप्तौ च । इन्दतेऽसौ इन्द्र । चन्दतेऽसौ चन्द्र । शक्नोतीति शक्र । रोदितीति रुद्र ॥ **पुष्पादेर ।१६।** पुष्पादेर्धातो र. प्रत्ययो भवति । पुष्प विकसने । पुष्पति तत् पुष्पम् । फल निष्पत्तौ । फलति तत् फलम् । मूल व्याप्तौ । मूलति तत् मूलम् । रघ सामर्थ्ये ॥ **लघरघउ ।१७।** रघते शास्त्राणि शत्रूणां च अन्त गच्छति प्राप्नोतीति रघु ॥ **गमेर्डोः ।१८।** गमेर्धातोर्डो प्रत्ययो भवति । गच्छतीति गौ. ॥ **ग्लानुदिभ्यां डौः ।१९।** ग्लायतीति ग्लौ । नुदतीति नौः । नुद प्रेरणे । स्त्यै स्त्यै शब्दसंघातयोः । **स्त्यायतेर्ड्रट् ।२०।** डित्वाट्टिलोप । संयोगान्तस्य लोप । (वृ० १ प्र० ९ सू० ३) टित्वादीप् स्त्यायति समूह करोति सा स्त्री । लक्ष दर्शनाङ्कनयो ॥ **लक्षेरीमुट च ।२१।** लक्षेर्धातोरी प्रत्ययो भवति तस्य ईप्रत्ययस्य मुडागमश्च । लक्ष्यते पुमान् अनया सा लक्ष्मी ॥ **राजादेः कन् ।२२।** राजादेर्धातो कन् प्रत्ययो भवति । राज् धन्व यु द्यु प्रतिदिव् वृष् तक्ष् दश् पचि पष् अशूङ् नु मह एते राजादय । राजृ दीप्तौ । राजतेऽसौ राजा । धन्व गतौ । धन्वतीति धन्वा । यु मिश्रणे । यौतीति युवा । द्यु गतौ । द्योतीति द्युवा । प्रतिदीव्यतीति प्रतिदिवा । वृषु वृद्धौ । वर्षतीति वृषा । तक्षू तनूकरणे । तक्ष्णोतीति तक्षा । दशतीति दशा । पचि विस्तारे । पचि साध्याने । इदित । जासंशसोर्लुर् ( वृ० १ प्र० ९ सू० ३२ ) पञ्चतीति पञ्च । षष् सवये । षष् गणने । अशूङ् व्याप्तौ ॥ **षपेरशेः किति तुक् वक्तव्य ।२३।** सपन्ति ते सप्त । अश्नुते इति अष्ट । णु स्तुतौ । **अस्य गुण ।२४।** नुवति ते नव । मह पूजायाम् ॥ **अस्य घान्तादेशो वुगागमश्च निपात्यते कन्प्रत्यये परे ।२५।** मह्यते इति मघवा ॥ इति राजादय ॥ **इसमन्त्वासुनः सर्व-**

**धातुभ्यः** । २६ । सर्वधातुभ्य इस् मन् त्र असुक् इत्येते प्रत्यया भवन्ति ॥ **वचादेरस्** । २७ । वचादेर्धातोरस् प्रत्ययो भवति वा सर्वधातुभ्योऽस्प्रत्ययः । उच्यते इति वचः । मह्यते इति महः । पीङ् पाने । पीयते तत् पय ॥ **पिबतेरपि** । २८ । पिबतेर्धातोरसुन्प्रत्ययो भवति इकारान्तादेशश्च । पीयते इति पय. । तिज् निशाने क्षमायां च । तितिक्षतीति तेजः । तप्यते इति तपः । रञ्ज रागे ॥ **असि नलोपो वाच्य.** । २९ । रजते तत् रज. । रक्ष हिंसायाम् । रक्षतीति रक्षः॥**अर्चिरुचिशुचिहुसृपिच्छादिछर्दिभ्य इस् प्रत्ययो भवति** ।३०। अर्चिरुची दीप्तौ । अर्चतीति अर्चिः । गुणः । रोचिः। शोचिः। हूयते इति हविः । सर्पिः ॥ **छादेरिस्मन्त्रन्क्विप्सु ह्रस्वो वाच्यः** । ३१। छद संवरणे । चुरादिः छादयतीति छदिः । उच्छृदिर् दीप्तिदेवनयोः । छृणत्तीति छर्दि. ॥ **सर्वधातुभ्यस्त्रमनौ** । ३२ । तनु विस्तारे । तनोति तत् तन्त्रम् । मन ज्ञाने । मन्यते इति मन्त्रः । यम् उपरमे । यच्छतीति यन्त्रः । छदि संवरणे । छ्यन्त्रः । छादयतीति छत्रम् । क्रियते तत्कर्म । वृञ् आच्छादने । वृणोतीति वर्म । मर्म ।दाम ।धर्म। छादयतीति छद्म॥ **धनार्तिचक्षितपृवपिवपिजनियजिभ्य उस् प्रत्ययो.भवति** । ३३ । धन शब्दे । धनतीति धनुः । ऋ गतौ । गुणः अरुः । चक्षिङ् व्यक्तायां वाचि । चष्टे इति चक्षुः । पिपर्तीति परुः । वपतीति वपुः । जायते इति जनुः । यजतीति यजु ॥ **अर्त्तितृस्तृतन्त्रिकण्ठिभ्य ईः** । ३४ । अरतीति अरीः। तरतीति तरीः। स्तृञ् आच्छादने । स्तृणोतीति स्तरीः । तन्त्रि धारणे । कण्ठ अवधारणे तन्त्रयति वा तन्त्रयते सा तन्त्रीः । कण्ठयतीति कण्ठीः। **सौकर्ये केलिमः** । ३५ । सुखेन भिद्यते तत् भिदेलिम या भेत्तु सुकर भिदेलिम कि काष्ठम् । सुखेन पच्यन्ते इति पचेलिमाः आत्मन्यः वा प॰. सुकरा. पचेलिमाः कि तन्दुला. ॥

> **संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ॥**
> **कार्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिषु ॥ १ ॥**
> **उणादयोऽपरिमिता येषु संख्या न गम्यते ॥**
> **प्रयोगमनुसृत्याद्वा प्रयोक्तव्यास्ततस्ततः ॥ २ ॥**

॥ इति कृदन्ते उणादिप्रक्रिया ॥ ५ ॥

---

घञ् प्रत्ययो भवति । चजोः कुघी घिण्यतोः ( अ० ४ स० २१ ) पच्यते तत् प-
चनं पाकः । त्यज वयोहानौ । त्यज्यते तत् त्यजनं त्यागः । भज्यते तत् भजनं
भागः । इज्यते तत् यजनं यागः । विभज्यते तत् विभजनं विभागः । युजिर्
योगे । अनुप्रयुज्यतेऽसौ अनुप्रयोगः । अनूच्यते तत् अनुवचनम्-अनुवाकः । इण्
गतौ । नन्द्यादित्वात् । ततो अयादेशः । गुण वृद्धि अयनम् आयः । भूयते
तत् भवनं भावः । आतो युक् ( अ० १ सू० १२ ) दीयते तत् दानं दायः ।
पानं पायः ॥ **भावे करणेऽर्थे घञि रञ्जेर्नलोपो वाच्यः ।५।** रज्यते अ-
नेनेति रञ्जनं वा रागः । भावे निम् । रज्यतेऽस्मिन्निति रङ्गः । रभ राभस्ये ॥
**रभलभोः स्वरेणाद्यपौ विना नुम् वाच्यः ।६।** आरम्भः । अञ्चु ग-
तिपूजनयोः । परितो अञ्चतीति प्राङ्गः ॥ **संज्ञायामकर्तरि च ।७।** धातो
कर्तृवर्जिते कारके भावे कर्मणि च घञ् प्रत्ययो भवति संज्ञाया विषये कार्यकार्य
प्रति आह्रियते इति प्रत्याहारः । दीयते अस्मिन् इति दायः । पीयते अस्मिन् इति
पायः । विक्रियते अनेनेति विकारः । मृजूष् शुद्धौ । अपामृज्यते अनेनेति अ-
पामार्गः । लिख आलेखने । लिख्यतेऽस्मिन्निति लेखः । आचर्यतेऽस्मिन्निति
आचारः । उपाधीयतेऽस्मादिति उपाध्यायः ॥**स्वरादः ।८।** इवर्णान्तेभ्यो
धातुभ्यो अ प्रत्ययो भवति भावादौ । घञोऽपवादः । सञ्चीयतेऽसौ सञ्चयः । च-
यनं चयः । जीयते इति जयः । नीयते तत् नयनं नयः । उन्नीयते इति उन्नयः ।
नूयते तत् नवनं नवः । ल्वनं लवः । स्तूयते तत् स्तवनं स्तवः । कॄ विक्षेपे ।
कीर्यते इति करः गरः । गॄ निक्षेपे व्रियते निक्षिप्यते कामादिभिरिति नरः । षिञ्
बन्धने । विशेषेण सीयते बध्यते अनेनेति विषयः ॥ **मदाम ।९।** मदादीनां
अ प्रत्ययो भवति भावादौ कर्तृवर्जिते । मदी हर्षे । मद्यते तत् मदनं मदः । प्र-
मद्यते अनेनेति प्रमदः । प्रमद्यते पुरुषो अनया सा प्रमदा । पण्यते तत्
पणनं पणः । शमु दमु उपशमे । शम्यतेऽसौ शमः । दमनं दमः । श्रम
खेदे । श्रम्यते इति श्रमः । भ्रमः । यमु उपरमे । यम्यते इति यमः ।
दीव्यति विश्रमनेनेति देवः । जङ्गम्यतेऽसौ जङ्गमः । हिसि हिंसायाम् ॥ **सिंहे
वर्णविपर्ययश्च ।१०।** चकारात् प्रत्ययः । हिनस्तीति सिंहः ॥ **मूर्तौ घनः
।११।** मूर्तौ काठिन्ये परिच्छेदेऽर्थे चाभिधेये हन्तेरः प्रत्ययो भवति भावादौ हन्तेः
घनादेशश्च । दधि काठिन्यं हन्यते इति दधिघनः । परिच्छिन्नं सैन्धवं हन्यते इति
सैन्धवघनः ॥ **हनो वधादेशश्चाप्रत्ययः ।१२।** हन्यते इति वधः ॥ **ड्वितोऽ-
थुः ।१३।** ड्विता धातोरथुः प्रत्ययो भवति भावादौ । टुवेपृ कम्पने । वेप्यते
अनेनेति वेपथुः । टुनदि समृद्धौ । नन्द्यते अनेनेति नन्दथुः । टुवप् बीजतन्तुस-
न्ताने । उप्यते इति वपथुः । टुक्षेपृ क्षेपणे । क्षेप्यते अनेनेति क्षेपथुः । टुओ-
श्वि गतिवृद्ध्योः । श्वयथुः । टुक्षु शब्दे । क्षुयते इति क्षवथुः । टुवम् उद्गिरणे ।
वमथुः ॥ **ड्वितस्त्रिमक् ।१४।** ड्वितो धातोस्त्रिमक् प्रत्ययो भवति । तेन धा-
त्वर्थेन कृतेऽर्थे वाच्ये सति । क्रियया निर्वृत्तः कृत्रिमः घटः । सम्भारेण सम्भृत

**धातुभ्यः** । २६ । सर्वधातुभ्य इस् मन् त्र असुक् इत्येते प्रत्यया भवन्ति ॥ **वचादेरस्** । २७ । वचादेर्धातोरस् प्रत्ययो भवति वा सर्वधातुभ्योऽस्प्रत्ययः । उच्यते इति वचः । मह्यते इति महः । पीङ् पाने । पीयते तत् पयः ॥ **पिबतेरपि** । २८ । पिबतेर्धातोरसुन्प्रत्ययो भवति इकारान्तादेशश्च । पीयते इति पयः । तिज् निशाने क्षमायां च । तितिक्षतीति तेजः । तप्यते इति तपः । रञ्ज रागे ॥ **असि नलोपो वाच्यः** । २९ । रजते तत् रजः । रक्ष हिंसायाम् । रक्षतीति रक्षः ॥ **अर्चिरुचिशुचिहुसृपिच्छादिछृदिभ्य इस् प्रत्ययो भवति** । ३० । अर्चिरुची दीप्तौ । अर्चतीति अर्चिः । गुणः । रोचिः । शोचिः । हूयते इति हविः । सर्पिः ॥ **छादेरिस्मन्त्रयञ्क्विप्सु ह्रस्वो वाच्यः** । ३१ । छद संवरणे । चुरादिः छादयतीति छदिः । उच्छृदिर् दीप्तिदेवनयोः । छृणत्ति छर्दिः ॥ **सर्वधातुभ्यस्त्रमनौ** । ३२ । तनु विस्तारे । तनोति तत् तन्त्रम् । मन ज्ञाने । मन्यते इति मन्त्रः । यम् उपरमे । यच्छतीति यन्त्रः । छदि संवरणे । ज्यन्तः । छादयतीति छत्रम् । क्रियते तत्कर्म । वृञ् आच्छादने । वृणोतीति वर्म । मर्म । दाम । धर्म । छादयतीति छद्म ॥ **धनर्तिचक्षितपिवपिजनियजिभ्य उस् प्रत्ययो भवति** । ३३ । धन शब्दे । धनतीति धनुः । ऋ गतौ । गुणः अरुः । चक्षिङ् व्यक्तायां वाचि । चष्टे इति चक्षुः । तपतीति तपुः । वपतीति वपुः । जायते इति जनुः । यजतीति यजुः ॥ **अवतस्तृस्तृतन्त्रिकण्ठिभ्य ईः** । ३४ । अवतीति अवीः । तरतीति तरीः । स्तृञ् आच्छादने । स्तृणोतीति स्तरीः । तन्त्रि धारणे । कण्ठ अवधारणे तन्त्रयति वा तन्त्रयते सा तन्त्रीः । कण्ठयतीति कण्ठीः । **सौकर्ये केलिमः** । ३५ । सुखेन भिद्यते तत् भिदेलिम वा भेत्तु सुकरं भिदेलिमं कि काष्ठम् । सुखेन पच्यन्ते इति पचेलिमाः आढक्यः वा प॰ सुकराः पचेलिमाः कि तन्दुलाः ॥

> संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ॥
> कार्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिषु ॥ १ ॥
> उणादयोऽपरिमिता येषु संख्या न गम्यते ॥
> प्रयोगमनुसृत्याद्वा प्रयोक्तव्यास्ततस्ततः ॥ २ ॥

॥ इति कृदन्ते उणादिप्रक्रिया ॥ ५ ॥

---

**तुम् तदर्थायां भविष्यति** । १ । धातोर्भविष्यति काले तुम् प्रत्ययो भवति तदर्थायां क्रियायां प्रयुज्यमानायाम् । भुज पालनाभ्यवहारयोः । भोक्ष्यतीति भोक्तुं व्रजति । पठिष्यतीति पठितुं ईहे । स्तोष्यतीति स्तोतु ईहते । स्थातु ईहते ॥ **तुमर्थे ण्वुण् वक्तव्यः** । २ । द्रक्ष्यतीति द्रष्टुम् कृष्ण द्रष्टु व्रजति । कृष्णदर्शको व्रजति । **कालसमयवेलासु तुम्** । ३ । भोक्तु कालः । अध्येष्यतीति अध्येतु समयः । स्तोष्यतीति स्तोतु वेला ॥ **घञ् भावे** । ४ । धातोर्भावे

घञ् प्रत्ययो भवति । चजोः कुघिण्ण्यतोः ( प्र० ४ सू० २१ ) पच्यते तत् पचनं पाकः । त्यज् वयोहानौ । त्यज्यते तत् त्यजनं त्यागः । भज्यते तत् भजनं भागः । इज्यते तत् यजनं यागः । विभज्यते तत् विभजनं विभागः । युजिर् योगे । अनुप्रयुज्यतेऽसौ अनुप्रयोगः । अनूच्यते तत् अनुवचनम्-अनुवाकः । इण् गतौ । नन्दादित्वात् । ततो अनादेशः । गुणः वृद्धिः अयनम् आयः । भूयते तत् भवनं भावः । आतो युक् ( प्र० १ सू० १२ ) दीयते तत् दानं दायः । पानं पायः ॥ **भावे करणेऽर्थे घञि रञ्जेर्नलोपो वाच्यः** । ५ । रज्यते अनेनेति रञ्जनं वा रागः । भावे किम् । रज्यतेऽस्मिन्निति रङ्गः । रभ राभस्ये ॥ **रभलभोः स्वरेणाच्यपौ विना नुम् वाच्यः** । ६ । आरम्भः । अञ्चु गतिपूजनयोः । परितो अञ्चतीति प्राङ्कः ॥ **संज्ञायामकर्तरि च** । ७ । धातोः कर्तृवर्जिते कारके भावे कर्मणि च घञ् प्रत्ययो भवति संज्ञायां विषये कार्यकार्यमनि आह्रियते इति प्रत्याहारः । दीयते अस्मिन् इति दायः । पीयते अस्मिन् इति पायः । विक्रियते अनेनेति विकारः । मृजूष् शुद्धौ । अपामृज्यते अनेनेति अपामार्गः । लिख आलेखने । लिख्यतेऽस्मिन्निति लेखः । आचर्यतेऽस्मिन्निति आचारः । उपाधीयतेऽस्मादिति उपाध्यायः ॥ **स्वरात्** । ८ । इवर्णोवर्णान्तेभ्यो धातुभ्यो अः प्रत्ययो भवति भावादौ । घञोऽपवादः । सञ्चीयतेऽसौ सञ्चयः । चयनं चयः । जीयते इति जयः । नीयते तत् नयनं नयः । उन्नीयते इति उन्नयः । नूयते तत् नवनं नवः । रवणं रवः । स्तूयते तत् स्तवनं स्तवः । कॄ विक्षेपे । कीर्यते इति करः गरः । नृ विक्षेपे त्रियते निक्षिप्यते कामादिभिरिति नरः । षिञ् बन्धने । विशेषेण सीयते बध्यते अनेनेति विषयः ॥ **मदाम** । ९ । मदादीनां अः प्रत्ययो भवति भावादौ कर्तृवर्जिते । मदी हर्षे । मद्यते तत् मदनं मदः । प्रमद्यते अनेनेति प्रमदः । प्रमद्यते पुरुषो अनया सा प्रमदा । पण्यते तत् पणनं पणः । शमु दमु उपशमे । शम्यतेऽसौ शमः । दमनं दमः । श्रमु खेदे । श्रम्यते इति श्रमः । भ्रमः । यमु उपरमे । यम्यते इति यमः । दीव्यति विश्रमनेनेति देवः । जङ्गम्यतेऽसौ जङ्गमः । हिसि हिंसायाम् ॥ **सिंहे वर्णविपर्ययश्च** । १० । चकारात् प्रत्ययः । हिनस्तीति सिंहः ॥ **मूर्तौ घनः** । ११ । मूर्तौ काठिन्ये परिच्छेदेऽर्थे चाभिधेये हन्तेः अः प्रत्ययो भवति भावादौ हन्तेर्घनादेशश्च । दधि काठिन्यं हन्यते इति दधिघनः । परिच्छिन्नः सैन्धवः हन्यते इति सैन्धवघनः ॥ **हनो वधादेशश्चाप्रत्ययः** । १२ । हन्यते इति वधः ॥ **ट्वितोऽथुः** । १३ । ट्वितो धातोरथुः प्रत्ययो भवति भावादौ । टुवेपृ कम्पने । वेप्यते अनेनेति वेपथुः । टुनदि समृद्धौ । नन्द्यते अनेनेति नन्दथुः । टुवप् बीजतन्तुसन्ताने । उप्यते इति वपथुः । टुक्षेपृ क्षेपणे । क्षेप्यते अनेनेति क्षेपथुः । टुओश्वि गतिवृद्ध्योः । श्वयथुः । टुक्षु शब्दे । क्षुयते इति क्षवथुः । टुवम् उद्गिरणे । वमथुः ॥ **ड्वितस्त्रिमक्** । १४ । ड्वितो धातोस्त्रिमक् प्रत्ययो भवति । तेन धात्वर्थेन कृतेऽर्थे वाच्ये सति । क्रियया निर्वृत्तः कृत्रिमः घटः । समारेण संभूत

वा निर्वृत्तं सम्भृत्रिमं युद्धम् । पाकेन निर्वृत्तं पक्त्रिमं फलम् । याचनेन निर्वृत्तं याचित्रिमं किं विधनम् ॥ **नङ्कौ** । १५ । धातोर्नङ्कौ इत्येतौ प्रत्ययौ भवतः भावादौ ॥ **यज् याच् यत् विच्छ प्रच्छ स्वप् एभ्यो नङ् प्रत्ययो भवति** । १६ । स्तौ श्चुभिः श्चुः ( पू० १ प्र० ४ सू० ६ ) असम्प्रसारणम् । इज्यते अनेनेति यज्ञः । याच्यते सा याच्ञा । यती प्रयत्ने । यत्यते तत् यत्नं यत्नः ॥ **छः शः** । १७ । छकारस्य शकारादेशो भवति नप्रत्यये परे भावादौ । शकारादेशः सम्प्रसारणबाधार्थः । विच्छि गतौ । विच्छ्यते इति विश्नः । प्रच्छ ज्ञीप्सायाम् । प्रच्छ्यतेऽसौ प्रश्नः । रक्ष्यतेऽसौ रक्ष्णः । सुप्यते इति स्वप्नः ॥ **उपसर्गकर्माधारेषु दाधोः किः** । १८ । उपसर्गे कर्मण्युपपदे आधारे च दाधोः किः प्रत्ययो भवति । अन्तर्धीयते इति अन्तर्धिः । आधिः । आदिः । विधिः । आधीयते तत् आधानं आधिः । आदीयते तत् आदानं आदिः । आतोऽनपि ( पू० २ प्र० १ सू० १२७ ) इत्याकारलोपः । विधीयते तत् विधानं विधिः । सन्धीयते तत् सन्धानं सन्धिः । उदकं धीयतेऽस्मिन्निति उदधिः ॥ **उदकस्य** । १९ । उदकशब्दस्य उदादेशो भवति अधिकरणे । पयोधिः । अम्भो निधीयते यत्र स अम्भोनिधिः ॥ **भावे युट्** । २० । धातोर्भावे युट् प्रत्ययो भवति । युवोरनाकौ ( प्र० १ सू० ११ ) ज्ञायते तत् ज्ञानम् । क्रियते तत् करणम् । दीव्यते तत् देवनम् । दीयते तत् दानम् । भूष अलङ्कारे । भूष्यते तत् भूषणम् । ह्रियते तत् हरणम् । हूयते तत् हवनम् । उह्यते तत् वहनम् । भाष व्यक्तायां वाचि । भाष्यते तद्भाषणम् । दुष वैचित्त्ये । दुष्यते तत् दूषणम् । गीयते तत् गानम् । पीयते तत् पानम् । मीयते तत् मानम् ॥ **उदः स्थास्तम्भोः सलोपश्च** । २१ । उत् उपसर्गात्परयोः स्थास्तम्भोः सकारस्य लोपो भवति । उत्थीयते तत् उत्थानम् । स्तम्भ रोधने । उत्तम्भ्यते तत् उत्तम्भनम् ॥ **साधनाधारयोर्युट्** । २२ । साधने आधारे चार्थे युट् प्रत्ययो भवति । पच्यते अनेनेति पचनः अग्निः । पच्यतेऽस्यां स्थाल्यां सा पचनी स्थाली ॥ **ईषद्दुःसुषु खल्** । २३ । ईषदादिषु प्रयुज्यमानेषु खल् यु इत्येतौ प्रत्ययौ भवतः भावादौ । लकारः प्रत्ययभेदज्ञापनार्थः । खकारो गुणविधानार्थः मुमागमार्थश्च । ईषत्सु अकृच्छ्रार्थाः । दुः कृच्छ्रार्थः । ईषदनायासेन भूयते इति ईषद्भवः । दुर्भवः सुभवः । ईषदनायासेन क्रियते इति ईषत्करः प्रपञ्चो हरिणा । दुःखेन क्रियते इति दुष्करः । सुखेन क्रियतेऽसौ सुकरः । ईषदाढ्यः क्रियते अनेनेति ईषदाढ्यंकरः । दुराढ्यंकरः । आढ्यंकरश्चैत्रो भवता । ईषत् पीयते असौ ईषत्पानः सोमो भवता । दुष्पानः । सुपानः । युधि सम्प्रहारे । दुःखेन योधयितुं शक्यः दुर्योधनः । सुखेन योधयितुं शक्यः सुयोधनः । ईषच्छासनः । दुःखेन शासयितुं शक्यः दुःशासनः । सुशासनः ॥ इति कृदन्ते भावाधिकारप्रक्रिया ॥ ६ ॥

---

अथ कृत्यप्रक्रिया ॥ **तव्यादीनां कृत्यसंज्ञा पाणिनीयानाम्** । १ ।

कृत्यादिभावकर्मणोरेव ॥ **तव्यानीयौ** । २ । धातोस्तव्यानीयौ प्रत्ययौ भवतः भावादौ । एध वृद्धौ । एध्यते वा एधितुमर्हं एधितव्यम् । एधनीयम् धन त्वया । भावस्यैकत्वादेकवचनं नपुंसकत्वं च । भूयते वा भवितुमर्हं भवितव्यं भवनीयम् । क्रियते वा कर्तुमर्हं कर्तव्यं करणीयम् । आस्यते वा आसितुमर्हम् आसितव्यम् आसनीयम् । कर्तव्यः करणीयो वा धर्मस्त्वया । या प्रापणे । प्रयातुमर्हं प्रयातव्यं प्रयाणीयम् । ईटो ग्रहाम् (नृ० २ प्र० १ सू० १३९) गृह्यते तत् ग्रहीतव्यं ग्रहणीयम् । वृङ् सम्भक्तौ । व्रियते वा वरितुं योग्यं वरितव्यं वरीतव्यं वरणीयम् । वृञ् वरणे । व्रियते तत् वरितव्यं वरीतव्यं वरणीयम् ॥ **स्वराद्य** । ३ । स्वरान्ताद्धातोर्यः प्रत्ययो भवति भावादौ । चीयते वा चेतुमर्हं चेयं नेयं जेयम् । भीयते तत् भेयम् ॥ **असरूपोऽपवादः प्रत्ययोऽस्त्रियां वा बाधकः सरूपस्तु नित्यम्** । ४ । चीयते वा चेतुमर्हं चेतव्यं चयनीयम् । चिकीर्ष्यते वा चिकीर्षितुमर्हं चिकीर्ष्यम् । दातुमिच्छतीति दित्सति वा दित्स्यते इति दित्स्यम् ॥ **क्षय्यजय्यौ शक्यार्थे निपात्येते** । ५ । क्षेतुं शक्यं क्षय्यम् । जेतुं शक्यं जय्यम् । अन्यत्र क्षेयं पापं जेयं मनः । क्षय्यजय्यौ चेति चकारादजर्यमिति निपात्यते न जीर्यति इत्यजर्यं सङ्गतम् ॥ **इच्चातः** । ६ । आकारान्ताद्धातोर्यः प्रत्ययो भवति आकारस्य च इकारादेशः । दीयते वा दातुमर्हं देयम् । ग्लातुं योग्यं ग्लेयम् । गीयते तत् गेयं ग्लेयं पातुमर्हं पेयम् । धीयते तत् धेयम् ॥ **पुशकात्** । ७ । अकारोपधात् पवर्गान्तात् शकादेश्च यः प्रत्ययो भवति भावादौ । शपृ उपालम्भे आक्रोशे च । शप्यते इति शप्यम् । जपितुं योग्यं जप्यम् । सरूपत्वात् पक्षे न घ्यण् । ग्रप्यम् । शक् सह् गद् मद् चर् यम् तक् शस् चत् यत् पत् जन् हन् शल् रुच् एते शकादयः । षह मर्षणे । सोढुं शक्यं सह्यम् । सह्यते वा सोढुमर्हं सह्यम् । गद्यते वा गदितुमर्हं गद्यम् । मद्यते वा मदितुमर्हं मद्यम् । चरितुमर्हं चर्यम् । यम्यम् । तक हसने । तक्यते वा तकितुमर्हं तक्यम् । शसु हिंसायाम् शसितुमर्हं शस्यम् । चते माने । चते याच्ञायाम् । चत्यत इति चत्यं यत्यं पत्यं जन्यम् ॥ **हनो वधादेशो ये** । ८ । हन्यते वा हन्तुमर्हं वध्यम् । शल शोभायाम् । शल्यम् । रोचितुं शक्यं रुच्यम् । डुलभष् प्राप्तौ । लब्धुं योग्यं लभ्यम् । यभ मैथुने । यब्धुं शक्यं यभ्यम् । शक् सामर्थ्ये । शक्लृ शक्तौ । शक्यते तत् शक्यम् ॥ **ऋहलात् घ्यण्** । ९ । ऋवर्णान्ताद्धलन्ताच्च धातोर्घ्यण् प्रत्ययो भवति भावादौ । घकारो विशेषणार्थः । णकारो वृद्ध्यर्थः । क्रियते वा कर्तुमर्हं कार्यम् । वृञ् वरणे व्रियते तत् वार्यं धार्यं चार्यम् । हस हसने । हास्यम् । ह्रियते तत् हार्यम् । हनो घत् (वृ० २ प्र० २७ सू० ५) हन्यते तत् घात्यम् । चजोः कगौ घिति (प्र० ४ सू० २१) पक्तुं योग्यं पाक्यम् । याच्यते तत् याच्यम् । रुच्यते तत् रोच्यम् । वच परिभाषणे ॥ **वचेः शब्दसञ्ज्ञायां कुत्वं वाच्यम्** । १० । तेन वाक्यम् । अन्यत्र वाच्यम् ॥ **यजयाचरुचप्रवचर्चत्यजपूजगर्जभुजां घ्यणि कुत्वाभावः** । ११ । याज्यं याच्यं

वाच्यं रोच्य प्रवाच्यम् अर्च्यं त्याज्य पूज्यम् । गर्ज शब्दे । गर्ज्यते तत् गर्ज्यम् । भुज्यते तत् भोज्यम् । बाधृ हिंसायाम् । बाधितु योग्य बाध्यम् । भजितु योग्य भाज्यम् ॥ **ओरावश्यके घ्यण्** । १२ । उवर्णान्ताद्धातोरावश्यकेऽर्थे घ्यण् प्रत्ययो भवति ॥ **ओदौतोर्यः प्रत्ययः स्वरवत्** । १३ । धातोरोकारौकारयोर्निमित्त या सवन्धी य प्रत्यय ■ स्वरवत् स्यात् । समासे अवश्यमादीनामन्तलोपमिच्छन्ति शाब्दिका. ॥

**लुम्पेदवश्यमः कृत्ये तुकाममनसोरपि ॥**
**समो वा हिततयोर्मांसस्य पचि युड्घञोः ॥ १ ॥**

लूञ् छेदने । लूयते वा लवितु योग्य लाव्य । अवश्य लाव्यो अवश्यलाव्यः। भोक्तु कामो यस्य सः भोक्तुकाम । श्रोतु मनो यस्य स श्रोतुमना. । सम्यक्प्रकारेण हित सहित-संहितम् । सतत सततम् । मांसस्य पचन मांसपचनम् । युड्घञो पचि परे मांसस्याकारो वा लुम्पेत् । मांसस्य पचन मांस्पचनम् । मांसस्य पाक मांस्पाक मांसपाक ॥ **ऋदुपधात् क्यप्** । १४ । ऋकारोपधाद्धातो क्यप् प्रत्ययो भवति भावकार्ययो । कृती छेदने । कर्तितुमर्ह कृत्यम् । नितरां क र्तितु योग्य निष्कृत्यम् । वृद्धयम् । वृत्यते तत् वृत्यम् ॥ **कृपिचृतयोर्न क्यप्** । १५ । कृपू सामर्थ्ये । कृपो रो ल ( पृ० २ प्र० २ सू० २० ) कल्प्यम् । चृत दीप्तौ । चर्त्यम् ॥ **मृजो वा क्यप्** । १६ । मृज्य मार्ग्यम् ॥ **ह्रस्वाच्च क्यप्** । १७ । ह्रस्वान्ताद्धातोर्भावे क्यप् प्रत्ययो भवति । तस्य ग्रहणे तदन्तस्य ग्रहणम् । क्रियते तत्कृत्यम् ॥ **कृञ क्यपि वा रिङ् वक्तव्य. तुगभावश्च** । १८ । कृत्या क्रिया ॥ **ङिदनेकाक्षरोऽप्यादेशस्तदन्तस्यैव वक्तव्य.** । १९ । **गुपगुहो क्यप्** । २० । गोप्तु योग्य गुप्यम् । गूहितु योग्य गुह्यम् ॥ **वदे क्यप् भावादौ** । २१ । वदेर्धातोः क्यप् प्रत्ययो भवति भावादौ । मृषा उद्यते इति मृषोद्यम् । ब्रह्मणा उद्यते या कथा सा ब्रह्मोद्या ॥ **ग्रहे क्यप्** । २२ । अर्जुनगृह्या सेना ■ **भुवो भावे क्यप्** । २३ । नाम्नि उपपदे भुवो भावे क्यप् प्रत्ययो भवति । ब्रह्मणो भावः ब्रह्मभूय गत । ब्रह्मणा भूयते तत् ब्रह्मभूय गत । नाम्नि किम् । भवितव्य भव्यम् । **इण् स्तु वृ दृ भृ शास् जुष् खन् एभ्य क्यप् वाच्य** । २४ । इण् । ईयते इति इत्य स्तुत्य वृत्य । दृङ् आदरे । दृत्य भृत्य । शासेरि ( पृ० २ प्र० ४ सू० ३७ ) शिष्य । जुषी प्रीतिसेवनयो । जुष्य ॥ **खन एत्व क्यपि वाच्यम्** । २५ । खन्यते इति खेयम् ॥ **भिद्योद्ध्यौ नदे निपात्येते** । २६ । भिनत्ति कूलमिति भिद्य । उज्झ उत्सर्गे । उज्झति जलमिति उद्ध्य नद । नदे किम् । भेत्ता उज्झिता ॥ **कृवृष्योर्वा क्यप्** । २७ । क्रियते तत् कृत्यम् । कर्तु योग्य कार्यम् । वृष वृष्टौ । वृष्य वर्ष्यम् ॥ **एते भावकार्ययोर्विहितास्तव्यादयस्तेऽर्हविधौ च वक्तव्या** । २८ । रात्रोऽसे दृशाम् ( पृ० २ प्र० १ सू० ११४ ) दर्शनार्हो द्रष्टव्य । द्रष्टुम् अर्ह. दर्शनीयः-दृश्यः । इङ् अध्य-

येन । स्वाध्यायोऽध्येतव्यः । स्वाध्यायो नाम वेदः । श्रु श्रवणे । श्रवणार्हः श्रोतव्यः । श्रोतुं योग्य श्रवणीयम् । मान पूजायाम् । मानितुं योग्यो मानितव्यः-माननीयः । ध्यै चिन्तायाम् । ध्यानार्हो ध्यातव्यः । ध्यातुं योग्यो ध्यानीयः । मन ज्ञाने । मननार्हो मन्तव्यः । मन्तुं योग्यो माननीयः ॥ **सप्रत्ययान्तादपि एते प्रत्यया भवन्ति । २९ ।** नितरां ध्यातुमिष्टव्यो निदिध्यासितव्यः । भक्षितुमिष्टव्यो बुभुक्षितव्यः-बुभूषणीयः । तव्यानीयौ क्यपूर्ण्यण्यौ ॥

**कृत्याः पञ्च समाख्याता ण्यण्क्यपौ भावकर्मणोः ॥**
**तव्यानीयौ स्वराद्यश्च शब्दशास्त्रविचक्षणैः ॥ १५ ॥**

॥ इति कृत्यप्रक्रिया ॥ ७ ॥

---

अथ स्त्र्यधिकारः ॥ **स्त्रियां यजां भावे क्यप् । १ ।** यजादेर्धातोः स्त्रियां भावे क्यप् प्रत्ययो भवति । यज् व्रज् समज् निषद् निपत् मन् नम् विद् सुञ् शीङ् भृञ् इण् कृ इषु परिसृप परिचर अटाट्य आस् चर् जागृ हन् एते यजादयः । किरवात्सम्प्रसारणम् । इज्यते सा इज्या स्त्रीत्वादाप् । व्रज्यते सा व्रज्या । अज गतौ क्षेपणे च । समज्यते सा समज्या का शिबिका । प्रकर्षेण व्रज्यते अस्यामिति प्रव्रज्या । षद्लृ विशरणगत्यवसादनेषु । निषद्यते सा निषद्या । निपत्या । मन ज्ञाने । मन्यते सा मन्या । नम्या । विद्यते सा विद्या ॥ **सुत्या शीङोऽयङ् क्विति ये वक्तव्यः । २ ।** शय्या भृत्या । ईयते सा इत्या कृत्या ॥ **कृञो यक् वा वाच्यः । ३ ।** अयकि । क्रियते सा क्रिया ॥ **इषेश्छान्तादेशो यलोपश्च । ४ ।** इष्यते सा इच्छा ॥ **सरतेर्गुणः । ५ ।** परिसर्या परिचर्या अटाट्या आस्या चर्या ॥ **जागर्तेर्गुणः । ६ ।** जागर्या । हनस्तकारान्तादेशो हिंसायामर्थे । हन्यते सा हत्या ॥ **हन्तेस्तः । ७ ।** हन्तेर्नकारस्य तकारादेशो भवति क्यपि स्त्रियाम् । ब्रह्म हन्यते इति ब्रह्महत्या ॥ **स्त्रियां भावे क्तिः । ८ ।** धातोः स्त्रियां भावे क्तिः प्रत्ययो भवति । क्रियते सा कृतिः बुद्ध्यते सा बुद्धिः । स्मृङ् चिन्तायाम् । स्मर्यते सा स्मृतिः । पच्यते सा पक्तिः । पचि विस्तारे । पञ्च्यते तत् पञ्चन-पङ्क्तिः । सम्प्रसारणम् । उह्यते सा ऊढिः । सज्यते सा सक्तिः ॥ **शमां दीर्घः । ९ ।** शमादीनां दीर्घो भवति क्तिप्रत्यये परे । शम्यते सा शान्तिः । दम्यते सा दान्तिः । गम्यते सा गतिः । हन्यते सा हतिः । भ्रमु चलने । भ्रम्यते सा भ्रान्तिः । अनुभूयते तत् अनुभवनम् अनुभूतिः । विशिष्टा भूतिः विभूतिः । प्रभूतिः । भवनं भूतिः शुध शौचे । शोधनं शुद्धिः ॥ **ईशशीङोर्वरीक्तिप्रत्ययौ नेड् गुणश्च । १० ।** ईशशीङोर्वरक्तिप्रत्ययौ स्तो वरप्रत्ययस्य क्तिप्रत्ययस्य च इट् न । शीङो गुणोऽपि न भवति । संशय्यते तत् संशयनम् । सशीतिः । ईष्टेऽसौ ईश्वरः । ह्री गतौ । ह्रीयते इति ह्रीतिः । जागरणम् जागृतिः । निगृह्यते सा निगृहीतिः । कुच संकोचने । कुच

कौटिल्यप्रतिष्टम्भनिर्लेखनेषु । तुदादिः । निकुचिति । निपठिति । श्रिह् आस्कन्दने । उपश्लिहिति । निपतिति । विशेषेण श्रियते सा विश्रुतिः ॥ ग्ला-म्लाज्याहाक्त्वरिभ्य क्तेरर्थे निःप्रत्ययो भवति । ११ । ग्लायते सा ग्लानिः म्लानि हानि । जिवरा सम्भ्रमे ॥ त्वरतेर्वस्य उत्व वाच्यम् । १२ । त्वर्यते सा तूर्णि ॥ कृल्वादिभ्यश्च क्तेरर्थे निः प्रत्ययो भवति । १३ । कृत ईर् ( वृ० २ प्र० १ सू० १३८ ) कीर्यते सा कीर्णि लूनिः धूनि पूर्णि. ॥ सपदादे क्विप् वा वाच्यः । १४ । सपत् सपत्ति ॥ कर्तरि क्तिश्च सज्ञायाम् । १५ । कर्त्रर्थे धातो क्ति. प्रत्ययो भवति सज्ञाया वि-षये । डुकृञ् करणे । प्रकुरुते सा प्रकृति । धृञ् धारणे विपूर्व विशेषेण धर-तीति विधृति ॥ षिद्भिदादिभ्यश्च । १६ । षितो धातोर्भिदादेश्च स्त्रियामङ् प्रत्य-यो भवति भावादौ । पच्यते सा पचा । मृज्यते सा मृजा । जृष् वयोहानौ ॥ जरदौ ह्रानुबन्धरहितो अ प्रत्ययो भवति । १७ । जीर्यत्यनया सा जरा ॥ इषु इच्छायामिति निर्देशाज्ज्ञापकादिच्छा इत्यादि निपा-त्यते । १८ । इच्छा ॥ इषादेरडर्थे युट् । १९ । एषणमिति एषणा । भिद्यते अनया सा भिदा । छिद्यतेऽनया सा छिदा । क्षिपा । गुह् सवरणे । गुहा । मेधृ हिंसायाम् । मेधृ वधमेधासगमेषु । मेध्यते इति मेधा । कृपा । पीड बाधायाम् । पीडा । बाध पीडायाम् । बाधा । क्षपा रात्रि ॥ गुरोर्हलात् । २० । गुरुमतो हलान्ताद्धातो स्त्रियामङ् प्रत्ययो भवति भावादौ न क्ति । ईह चेष्टायाम् । ईह्यते सा ईहा । ऊह्यते सा ऊहा । ईक्ष दर्शनाङ्कनयो ईक्ष्यते तत् ईक्षण ईक्षा । एध्यते सा एधा । गुरो किम् । भक्ति । हलात्किम् । नीति । लिख् रिख् लेखने । लिख्यते तल्लेखन–लेखा । रिख्यते तद्रेखण रेखा । गुध परिवेष्टने । गुध्यत इति गोधा । धेट् पाने । सुष्ठु धीयते इति सुधा । डुधाञ् धारणपोषणयोः । श्रद्धीयते सा श्रद्धा ॥ क्तिरापादिभ्य । २१ । आप्ति । दीप्यते सा दीप्ति । राध्यते सा राद्धि । प्रशस्ति ॥ प्रत्ययान्तात् । २२ । प्रत्ययान्ताद्धातो स्त्रियामङ् प्रत्ययो भवति भावादौ । चिकार्यते सा चिकीर्षा । आत्मन कर्तुमि-च्छा चिकीर्षा । आत्मन पुत्रेच्छा या पुत्रीयते सा पुत्रीया । अशितुमिच्छा अश-नाया । लोलूयते सा लोलूया । अटाट्या । कण्डूञ् गात्रविघर्षणे । कण्डूयते सा कण्डूया । मुमूर्षण मुमूर्षा ॥ इक्श्तिपौ धातुनिर्देशे । २३ । धातुनिर्देशे वाच्ये सति इक्श्तिपौ प्रत्ययौ भवत । शकार शिति शतृवत्कार्यार्थ । पच् इत्यय धातु पचि । श्रयति पचति भवति ॥ ण्यन्तआस्ग्रन्थअर्थश्र-न्थघट्विद्वन्दिइषिभ्यः स्त्रिया युर्वाच्यः । २४ । डुकृञ् करणे । यु-वोरनाकौ ( प्र० १ सू० ११ ) कारणा आसना । अर्थ याच्ञाप्रका-शनयो । अर्थना । ग्रन्थ सदर्भे । ग्रथ्यते तद्ग्रन्थनमिति ग्रथना । उपासन-मिति उपासना । श्रथि शैथिल्ये । श्रन्थना । घटनमिति घटना । विद्यते वेदनमिति वेदना । वन्द्यते सा वन्दना । एषणमिति एषणा ॥ इञ् अजादि-

भ्यः ।२५। अज गतौ । आजिः । अत सातत्यगमने । आतिः ॥ इक् कृष्यादिभ्यः भावादौ । २६ । कृष्यते सा कृषिः । गिरिः किरिः । सर्वधातुभ्य इः । कविः । रविः ॥ ॥ इति उणादिकारकप्रक्रिया ॥ ८ ॥

---

॥ अथ क्त्वादयो प्रत्ययाः ॥ **पूर्वकाले क्त्वा** । १ । धातोः क्त्वा प्रत्ययो भवति पूर्वकाले समानकर्तृके धातौ प्रयुज्यमाने । देवदत्तः स्नात्वा भुङ्क्ते । भुक्त्वा व्रजति ॥ **न क्त्वा सेट्** । २ । सेट् क्त्वा किन्न भवति । वर्तित्वा शयित्वा भवित्वा । सेट् किम् । कृत्वा ॥ **रलो व्युपधाद्धलादेः संश्च** । ३ । उश्च इश्च वी ते उपधे यस्य तस्माद्धलादेरलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । विद ज्ञाने । विदित्वा-वेदित्वा । लिखित्वा । द्युतित्वा । व्युपधात्किम् । वर्तित्वा । रल. किम् । सेवित्वा । हलादेः किम् । एषित्वा । सेट् किम् । भुक्त्वा ॥ **मृडमृदगुधगुहकुषक्लिशवदवसमुषग्रहिभ्यः** । ४ । सेट् किद् भवति । मृड सुखने । मृडित्वा । मृद क्षोदे । मृदित्वा । गुध रोषणे । गुध रोषे । गुधित्वा । गुह रोगे । गुहू संवरणे । गुहित्वा । कुष निष्कर्षे । कुषित्वा । क्लिश विबाधे । क्लिशित्वा । वद व्यक्तायां वाचि । उदित्वा । वस् निवासे । उषित्वा । मुषित्वा । गृहीत्वा ॥ **नोपधात् थफान्ताद्वा कित्** । ५ । नकारोपधात् थफान्ताद्धातोः सेट् क्त्वा वा किद्भवति । मन्थ सदर्भे । नो लोपः ( पृ० २ प्र० १ सू० ६० ) मथित्वा-मन्थित्वा । गुम्फ ग्रन्थने । गुफित्वा-गुम्फित्वा इत्यादि ॥ **अलंखल्वोः प्रतिषेधे क्त्वा** । ६ । प्रतिषेधार्थयोरलंखलुशब्दयोः पूर्वपदयोः सतोः पूर्वकालं विनापि क्त्वाप्रत्ययो भवति । अत्रालंखलुशब्दौ निषेधार्थौ तयोरुपपदत्वात् । अलं भुक्त्वा न भोक्तव्यम् ॥ भोजनं मा कुरु इत्यर्थः । खलु भुक्त्वा न भोक्तव्यम् ॥ **उदितः क्त्वा वेट्** । ७ । उदितो धातोः परस्य क्त्वाप्रत्ययस्य वा इडागमो भवति । शमित्वा-शान्त्वा । क्रमु चलने । क्रमित्वा क्रान्त्वा । अदो जग्धिः ( प्र० २ सू० २१ ) जग्ध्वा ॥ **समासे क्यप्** । ८ । समासे सति पूर्वकाले क्यप् प्रत्ययो भवति तत्कर्तृके धातौ प्रयुज्यमाने । ह्रस्वस्य पिति कृति तुक् ( प्र० १ सू० ६८ ) डुभृञ् धारणपोषणयोः । सम्भृत्य करोतीति सम्भृत्यकरोति । णमु प्रह्वत्वे शब्दे च । प्रकर्षेण कायवाङ्मनोभिर्नत्वा इति प्रणम्य गच्छति । अनभ्युपूर्वं इत्येके । अकृत्वा जल्पति । अहत्वा गच्छति ॥

अजित्वा शास्त्रयान्सर्वान्कृत्वा विमलं यशः ॥
अदत्त्वा वित्तमर्थिभ्यः व्यर्थं जीवन्ति भूभृतः ॥ १६ ॥

**ल्यपि लघुपूर्वात्** । ९ । ल्यपि लघुपूर्वस्य णेरयादेशोऽपि वाच्यः । वीर-मयिता इति परिणमय्य भुङ्क्ते । विगमय्य । निगमय्य । अलघुपूर्वस्य न । तेन प्रेर्णो वाच्य. । प्रणार्य । संप्र धारयित्वा इति सम्प्रधार्य । विधार्य करोति । आप्लृ व्याप्तौ । प्राप्नोति । प्राप्य प्राप्य ॥ **दादीनां क्यपि इत्त्वाभावो वाच्यः** । १० । क्यपि स्थामा इति ईकारो न भवति । दो अवखण्डने ।

प्रदाय प्रसाय प्रमाय प्रस्थाय । उप समीपे स्थित्वा इति उपस्थाय । पिबतेर्ज्ञा-प्रपाय प्रपीय । लोपस्त्वनुदात्ततनाम् ( वृ० २ प्र० ४ सू० ७) ॥ **अमस्य क्यपि वा लोपः ।११।** प्रकर्षेण नत्वा इति प्रणम्य प्रणत्य । आसमन्तात् गामे आगम्य आगत्य ॥ **विपूर्वस्य दधातेः करोतेरर्थे क्यप् । १२ ।** विधाय । प्रहाय ॥ **तत्कालेऽपि क्यप् दृश्यते । १३ ।** नेत्रे निमील्य हसति । मील समीलने । मील सगमे । उभयपदी । अक्षिणी समीलित्वा इति अक्षिणी समील्य हसति । चक्षुषी समील्य हसति । मुख व्या दत्वा इति मुख व्यादाय स्वपिति ॥ **पौन:पुन्ये णम् पद द्विश्च । १४ ।** समानकर्तृकेषु धातुषु प्रयुज्यमानेषु पूर्वकाले पौन पुन्यार्थे धातोर्णम् प्रत्ययो भवति णमन्तस्य पदस्य द्विर्वचन भवति । आतो युक् ( प्र० १ सू० १२ ) पीत्वापीत्वा इति पायपाय गच्छति । आदरे वीप्सायां द्विर्भावः । भुक्त्वाभुक्त्वा इति भोजभोज व्रजति । स्मृत्वास्मृत्वा इति स्मारस्मार नमति शिवम् ॥ **कथमादिषु स्वार्थे कृञो णम् । १५ ।** कथम् इत्थम् अन्यथा एवम् एतेषु प्रयुज्यमानेषु स्वार्थे कृञो णम् प्रत्ययो भवति कथकारम् इत्थकारम् अन्यथाकारम् एवकार पठति । एव पठतीत्यर्थः ॥ **समूलाकृतजीवेषु हन्कृञ्ग्रहा णम् वाच्यः स्वार्थे तेषामनुप्रयोगश्च । १६ ।** समूलघात हन्ति अकृतकार करोति । जीव गृहीत्वा इति जीवग्राह गृह्णाति इत्यादि ॥ **वर्णात्कारः । १७ ।** वर्णमात्रात्कारः प्रत्ययो भवति। क इति वर्णः ककारः । व इति वर्णो वकारः । अ इति वर्णः अकारः । वर्णसमुदायादपि कारो दृश्यते । अहकार ओंकार टकार पकार नकार इत्यादि ॥ **रादिफो वा । १८ ।** र इति वर्ण रेफः रकार ॥

> **रकारादीनि नामानि श्रुत्वा तत्रास रावणः ॥**
> **रत्नानि च रमण्यश्च सत्रास जनयन्ति मे ॥ १७ ॥**
> **रकारादीनि नामानि शृण्वतो मम पार्वति ॥**
> **मन. प्रसन्नतामेति रामनामाभिशङ्कया ॥ १८ ॥**

**लोकाच्छेषस्य सिद्धिर्यथा मातरादे । १९ ।** अस्य सारस्वतव्याकरणस्य ये शेषप्रयोगास्तेषां लोकात् अन्यव्याकरणात्सिद्धिर्भवति यथा मातरादेः । इत्यादि प्रयोगानुसारेण बोध्यम् ॥

> **स्वरूपान्तोऽनुभूत्यादिः शब्दोऽभूद्यत्र सार्थकः ॥**
> **स मस्करी शुभां चक्रे प्रक्रियां चतुरोचिताम् ॥ १९ ॥**
> **अवताद्वो हयग्रीव कमलावर ईश्वर ॥**
> **सुरासुरनराकारमधुपापीतपत्कज ॥ २० ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्यानुभूतिस्वरूपाचार्यविरचितायां वृहदन्तप्रक्रियायां तद्धितप्रत्ययप्रक्रिया समाप्ता ॥ १ ॥ समाप्ता चेय तृतीया वृत्ति ॥

॥ श्रीलक्ष्मीनृसिंहार्पणमस्तु ॥ श्रीरस्तु ॥

# व्याकरणग्रंथाः ।



| | | |
|---|---|---|
| सिद्धांतकौमुदी अष्टाध्यायी, गणपा०, धातुपा० लिंगानुशासनपा० और सूत्रसूचीस० अक्षर मोटा | ४-० | ०-१२ |
| सिद्धांतकौमुदी अतिउत्तम और बारीक टैपमें छप रहीहै | २-० | ०-८ |
| अष्टाध्यायी, गणपाठ, धातुपाठ, लिंगानुशा० | १-० | ०-४ |
| लघुसिद्धांतकौमुदीटिप्पणसहितजिल्द मो० अ० | ०-१२ | ०-२ |
| लघुसिद्धांतकौमुदी टिप्पणस० ग्लेज छोटा | ०-४ | ०-१ |
| सिद्धांतचंद्रिका सुबोधिनीटीका और तत्त्वदीपिकासह संपूर्ण सुन्दर जिल्द | ४-० | ०-८ |
| सिद्धांतकौमुदी तत्त्वबोधिनीटीकासहित जिल्द काशीका | ७-० | ०-८ |
| सिद्धांतचंद्रिका उत्तरार्द्ध सुबोधिनी और तत्त्वदीपिकासह | २-० | ०-४ |
| सिद्धांतचन्द्रिका सटीक पूर्वार्द्ध सुबोधिनी और तत्त्वदीपिका टीकासहित | २-० | ०-४ |
| तत्त्वबोधिनी कौमुदीके पृष्ठांकसह छपती है पूर्वार्द्ध छपके तैयार है | ३-० | ०-६ |
| रूपमालाव्याकरणका षड्लिंगविभाग | ०-६ | ०-॥ |
| " संधिभागः अव्ययार्थभागः प्रयोगविधिसंग्रहः ( कारकसमासतद्धितदिक् ) क्रियाकलापः आख्यातचन्द्रिका धातुरूपभेदः श्लोकयोजनिकोपायः | १-४ | ०-२ |
| संधिविभागः | ०-५ | ०-॥ |
| अव्ययविभागः | ०-३ | ०-॥ |
| प्रयोगविधि | ०-२ | ०-॥ |
| कारकसमासतद्धिकादिक् क्रियाकलापः आख्यातचन्द्रिकाधातुरूपभेदः श्लोकयोजनिकोपायः | ०-६ | ०-१ |